श्रीगणेशाय नमः॥ विश्वेशं सच्चिदानंदं वंदेहं योखिलं जगत्॥ चरीकर्त्ति बरीभर्त्ति संजरीहर्त्ति लीलया॥१॥ नमस्कुर्वे जगद्वंद्यं पाणिन्यादि मुनित्र
यं॥ श्रीभर्तृहरिमुख्यांश्च सिद्धांतस्थापकान्बुधान्॥२॥ नत्वा लक्ष्मीधरं तातं सुमनोवृंदवंदितं॥ फणिभाषितभाष्याब्धेः शब्दकौस्तुभमुद्धरे॥३॥
परिभाव्य बहून् ग्रंथानर्थोयं क्लेशेन लभ्यते॥ तमशेषमनायासादितो गृण्हीत सज्जनाः॥४॥ समर्प्य लक्ष्मीरमणे भक्त्या श्रीशब्दकौस्तुभं॥ भट्टो
जिभट्टो जनुषः साफल्यं लब्धुमीहते॥५॥ प्रेक्षावत्प्रवृत्तये व्याकरणस्य विषयं भगवान्भाष्यकारः प्रादर्शयत्॥ अथ शब्दानुशासनमिति॥ अथ श-
ब्दः प्रारंभस्य द्योतकः न तु वाचकः निपातत्वात्॥ उपसर्गवत्॥ न च तेपि वाचका एवेति वाच्यं॥ उपास्यते गुरुरनुभूयते सुखमित्यादौ धातोः सकर्म-
कक्रियापरत्वं विना कर्मणि लकारायोगेन वाचकत्वे स्थिते उपसर्गाणां द्योतकत्वस्यैव युक्तत्वात्॥ ननूक्तयुक्त्यास्तूपसर्गाणां द्योतकता॥ निपातांत
रं तु वाचकमेवेति चेत्॥ न॥ साक्षात्क्रियते अलंक्रियते उरीक्रियत इत्यादौ कर्मणि लकारेण कर्मीभूतस्य गुर्वादेरभिधानसिद्धये धात्वर्थं प्रति कर्मत्वस्य
वाच्यत्वात्॥ उपसर्गत्वापेक्षया निपातत्वस्याधिकवृत्तितया तदवच्छेदेनैव द्योतकताकल्पनाच्च॥ सामान्ये प्रमाणानां पक्षपातात्॥ निपातत्वं चा-
खंडोपाधिरूपं जातिरूपं शब्दस्वरूपमेव वेति पक्षत्रयेपि प्रादिचादिसाधारणमेव॥ प्रत्वादिप्रत्येकपर्यवसन्नं न दिति पक्षेपि प्रादीनां चादिभ्यो वैल
क्षण्यानिरुक्तेः॥ केवलानामप्रयोगेण अन्यलभ्यतापि तुल्यैव॥ विजयत इत्यत्र धातोर्विशिष्टजयइव घटश्चेत्यत्र समुच्चितघटे घटशब्दस्यापि
लक्षणायाः संभवात्॥ किंच चादीनां वाचकत्वे समानाधिकरणप्रातिपदिकार्थयोरभेदान्वय इति व्युत्पत्तिर्निपातेतरविषयकतया विना प्रमा-
णं संकोचनीया स्यात्॥ स्याच्च समुच्चयादिशब्दयोग इव चादियोगेपि घटादेः षष्ठी॥ किंच समुच्चयादिपदैरुपस्थिते यथा विशेषणसंबंधस्तथा राम
चादिभिरुपस्थिते स्यात्॥ द्योतकत्वपक्षे तु पदार्थैकदेशत्वान्न तत्र विशेषणान्वयः॥ अपिच॥ शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिवेत्यादौ इव १

3758

स्तनसदृशौ॰ गौरीः रससदृशानुदीच्यानुद्धरिष्यनित्यादिरर्थः॥ सत्त्वउस्त्यादिशब्दानांतत्सदृशपरत्वेइवशब्दस्यचतात्पर्यग्राहकत्वेसत्येवलभ्यते॥
अन्यथाप्रत्ययानांप्रकृत्यर्थान्वितस्वार्थबोधजनकतापिभज्येत॥ इवशब्दात्तुतृतीयादुर्लभा॥ असत्त्वार्थकतयाकारकविभक्त्ययोगात्॥ एवमप्यु
स्त्यादिभ्यस्तृतीया॰ नन्वयस्यानुद्धाराच्च॥ नन्वेवंनञ्तत्पुरुषस्योत्तरपदार्थादिप्राधान्यमित्यादिसिद्धांताभज्येरन्निति चेन्न॥ पूर्वपदद्योत्यंप्र॰
तिप्राधान्यमितिनदर्थात्॥ द्योत्यार्थेनाप्यर्थवत्त्वेनेतिप्रातिपदिकत्वसिद्धिः॥ अतएवयेषांद्योत्योप्यर्थोनास्तितुहिचस्मह्वैपादपूरणेइत्यमरकोशोक्त
कर्मीमिहितिपादपूरणार्थाइतिनिरुक्ताच्च॥ तदर्थेनिपातस्यानर्थकस्येतिवार्त्तिकारंभइत्यवधेयम्॥ स्फुटञ्चेदंकैयटादिग्रन्थेषु॥ अतएवाकृत्य
धिकरणेभट्टैरुक्तम्॥ चतुर्विधेपदेचात्रद्विविधस्यार्थनिर्णयः॥ क्रियतेसंशयोत्पत्तेर्नोपसर्गनिपातयोः॥ तयोरर्थाभिधानेहिव्यापारोनैवविद्यते।
यदर्थद्योतकौतौतुवाचकःसविचार्यतइति॥ यत्तुअर्थवत्सूत्रे अधीतइत्यादौधातोरनर्थकता उपसर्गविशिष्टस्यवाचकतेतिकैश्चिदुक्तं तदभ्यु
पगमात्रम्॥ सर्वस्यद्वेइतिसूत्रेकैयटादिग्रन्थोप्येवमेव॥ पूर्वोत्तरमीमांसयोस्तत्रतत्रनञःपर्युदासेलक्षणेतिग्रन्था अप्येवमेव उक्तयुक्तेः अ
स्तुवामतांतरंनिपातावाचकाइति सर्वथापिप्रादयोद्योतकाश्चादयस्तुवाचकाइत्येवंरूपमर्द्धजरतीयं नैयायिकाभ्युपगतमप्रामाणिकमेवेतिदि
क्। अनुपूर्वकः शासिर्विविच्यज्ञापनेदृष्टः। नद्यथा। अक्षेत्रवित्क्षेत्रविदंह्यप्राट्सप्रैतिक्षेत्रविदानुशिष्टः यथावा। संपूषन्विदुषानयथोअञ्ज
सानुशासति। यएवेदमितिब्रवत् अत्रहिगुणत्रयोपेतेनसद्गुरुणास्मान्शिक्षयेतिपूषाप्रार्थ्यते तत्र --- अञ्जसेतिशेषमुक्तम्। अनुशा
सतीपितिविविच्यबोधकत्वेब हुलंछन्दसीतिशपोनलुक्॥ इदमित्थमेवेति योब्रूयादिति [illegible]षेउक्तः ब्रवदित्यत्रलेटोऽडाटावित्यट्। त
थाच अनुशिष्यन्तेविविच्य असाधुभ्योविभज्यबोध्यन्ते येनेतिकरणेल्युट्॥ तत्रशब्दानामिति कर्मणिषष्ठीतदन्तेनसमासः नचकर्मणि॰

शा·कौ· चेतिसूत्रेणसमासनिषेधःशङ्क्यः॥ तत्रचशब्दस्यइतिशब्दार्थेतथाकर्म्मणीतिशब्दवत्॥ उभयप्राप्ताविति सूत्रेणाषष्ठीतदंतंनसमस्यतेइत्य
२ र्थात्॥ इयंतुकर्त्तृकर्मणोःकृतिविहिताषष्ठी॥ननूभयप्राप्ताविति॥ आचार्यस्यकर्त्तुर्वस्तुतःसत्वेपितदनुपादानात्॥ विचित्रागवांदोहोअगोपेनेत्यत्र
हि आश्चर्यंप्रतिपाद्यं॥तच्चाशिक्षितोदोग्धादुर्दोहागावश्चदोग्धव्यास्तदेवनिर्वहतिनत्वन्यथा॥ अतःकर्तृकर्मणोर्विशिष्योपादानादस्त्युभ
यप्राप्तिः॥ इहतुशब्दानामिदमनुशासनंनत्वर्थानामिति अर्थनिवृत्तिपरंवाक्यंनतुकर्त्तृविशेषनिवृत्तिपरंअतोनास्त्युभयप्राप्तिः॥ अस्तुवायथा
कथंचिदुभयप्राप्तिः॥तथापिनक्षतिः॥ उभयप्राप्तावितिसूत्रेअविशेषेणविभाषेतिपक्षस्यापिवक्ष्यमाणतयानियमाप्रवृत्तिपक्षेआचार्यस्यश
ब्दानुशासनमितिप्रयोगसंभवात्॥ शेषलक्षणाषष्ठीवास्तु तस्माद्वैदिकालौकिकाश्चसाधवःशब्दाइहविषयइतिस्थितं॥ वेदेभवावैदिकाः
अध्यात्मादित्वाट्ठञ्॥ एवंलोकेभवालौकिकाः॥ यद्वा॥ लोकेविदितालौकिकाः तत्रविदितइतिवर्त्तमानेलोकसर्वलोकाट्ठञ्॥ प्रातिशाख्येष्वि
वनवैदिकैकदेशमात्रमिहविषयः॥ नवाव्याकरणांतरेष्विवछांदसपरित्यागइतिसूचयितुमुभयोपादानं॥ इतिविषयनिरूपणं॥ स्यादेतत्
गौरित्यादिःशब्दइहविषयः॥ तत्रचगकारऔकारोविसर्गश्चघटकः॥ व्युत्पाद्यतेतुडोप्रत्ययसुप्रत्ययवादेशादिकं॥ नचैतद्गौरितिबोधेभास
ते॥ तथाचार्थांतरता॥ गौरित्यनेनपरिनिष्ठितेनसहडोप्रभृतीनांसंबंधविशेषस्तत्रापितस्युपयोगिताचास्तीतितद्व्युत्पादनमितिचेन्न॥ शब्दांतर
व्यावृत्तस्यसंबंधस्यउपयोगस्यचदुर्वचत्वात्॥ द्रव्यगुणादिपदार्थानामिहव्युत्पाद्यतापत्तेश्च॥ अस्तिहितेषांगौरित्यनेनवाच्यवाचकभावादिः
संबंधः॥ अतएवशाब्दबोधेगविसमवायेनगोत्वमिवशक्त्याख्यसंबंधेनशब्दोविशेषणतयाभासते॥ चाक्षुषबोधेपिव्यक्त्यास्मारितःशब्दोवि राम·
शेषणमित्यभ्युपगमः॥ आहच॥ नसोस्तिप्रत्ययोलोकेयः शब्दानुगमादृते॥ अनुविद्धमिवज्ञानंसर्वंशब्देनभासते॥ ग्राह्यत्वंग्राहकत्वंचद्वेश २

क्तितेजसोयथा॥तथैवसर्वशब्दानामेतेपृथगवस्थितेइति॥यत्संज्ञास्मरणंतत्रनतदप्यन्यहेतुकं॥पिंडएवहिदृष्टःसन्संज्ञांस्मारयितुंक्षमइतिच
च॥युक्तंचैतत्॥गृहीतशक्तिकंप्रतिशब्देनार्थस्येव अर्थेनशब्दस्यापिस्मरणेबाधकाभावात्॥अतएवगोत्वस्येवगोशब्दस्यापिव्यक्तिविशेषणत्व
विशेषात्संसर्गोपितादात्म्यमेवास्तु॥एवंगोगुणादिभिरपितदभिन्नाभिन्नस्यतदभेदादित्याशयेनाथगौरित्यत्रकःशब्दइतिप्रघट्टकेद्रव्यगुणकर्म
सामान्यैःसहशब्दस्याभेदोभाष्यकृद्भिराशंक्यनिराकृतः॥तत्रनिराकरणग्रंथस्यायमाशयः॥समसत्ताकभेदाभेदौविरुद्धावेव॥अन्यथात्वद्गुणौ
त्वासत्ताद्गुणत्वाद्यभेदात्सुखदुःखस्वर्गनरकादेरप्यभेदापत्तौप्रवृत्तिनिवृत्तिव्यवस्थानस्यात्॥नस्याच्चभेदग्रहाद्भ्रमनिवृत्तिः॥जातिव्यक्त्यादि
संबंधस्त्वतिरिक्तएवेति॥एवमेवशब्देनापिसहास्त्येवसंबंधोद्रव्यादीनामितिस्थितं॥अस्तिचद्रव्यादिव्युत्पादनस्यप्रकृतेउपयोगोपि॥अस्ति
न्नर्थेःयंसाधुरित्यर्थविशेषंपुरस्कृत्यैवसाधुत्वस्यवक्तव्यत्वात्॥अतएववाजिनिदरिद्रेचक्रमेणअश्वशब्दोअस्वशब्दश्चसाधुर्व्युत्क्रमेणत्वसा
धुरितिसिद्धांतः॥ननुयथावैशेषिकादीनांएतच्छास्त्रसिद्धमेवप्रकृतिप्रत्ययविभागमुपजीव्यपदार्थव्युत्पादनायप्रवृत्तिःप्रकृतिप्रत्ययादिकिंवा
रस्तुक्वाचित्कःप्रासंगिकः॥तथेहापिलोकप्रसिद्धंदर्शनांतरसिद्धंचपदार्थजातमुपजीव्यशब्दमात्रव्युत्पादनंनविरुध्यतइतिचेत्॥अस्तुतावदेवं
तथापिडोप्रभृतिव्युत्पादनंनिष्फलमेवेतिचेत्॥अत्रोच्यते॥गौस्तिष्ठतिदेवदत्तःपचतीत्यादयःशृंगग्राहिकयातावज्जन्मसहस्रेणापिबोधयितुं
बोद्धुंचाशक्याः॥आनंत्यात्॥अतःप्रकृतिप्रत्ययविभागकल्पनारूपोलघुभूतउपायःसमाश्रीयतेलिपिवत्॥आरोपितएवचतत्रसंबंधः॥प्रसिद्धो
हिस्थूलारुंधतीशाखाचंद्रादिन्यायोलोकेपंचकोशावतरणन्यायश्चोत्तरमीमांसायां॥तात्पर्यविषयाबाधाच्चप्रामाण्यं॥एषैवत्वर्थवादेष्वपिगतिः
॥आत्मवपोत्खेदनप्रभृतीनांबाधेपितात्पर्यविषयीभूतस्यप्राशस्त्यस्याबाधितत्वात्॥उक्तंचहरिणा॥उपायाःशिक्षमाणानांबालानामुपलाल

श·टी· नाः॥ असत्येवर्त्मनिस्थितत्वात्ततःसत्यंसमीहतइति॥उपेयप्रतिपत्त्यर्थाउपायाअव्यवस्थिताइतिच॥अतएवहिकेचित्तुप्रत्ययंविदधति॥अपरेस्मिं
६ ॥तथासूत्रीत्यापाठिष्यत्रित्यत्रइतप्रत्ययः॥भाष्यरीत्यातप्रत्ययः॥सूत्ररीत्यानावानितिवक्तुंप्रावतावर्थवैशेष्यादितिवार्तिकोक्तरीत्याङावं
तुमितिदिक्॥एतेनपचतीत्यादौ आदेशैःस्मार्यमाणालडादयोबोधकाइतिवदंतःपरास्ताः॥तथाहि॥वृद्धव्यवहाराच्छक्तिग्रहइतिनिर्विवादं॥
ततश्चप्रयोगसमवायिनामवतिप्रभृतीनांशक्तिःसिध्यति॥नत्वलौकिकानांलादीनांएवंडुपचष्डुकृञ्इत्यादिप्रकृतयोविच्छिबादिप्रत्ययाश्च
नशक्ताः किंतुअपाक्षीत्सपाचपापच्यतेकरोतिचकरीतीत्यादिप्रयोगसमवायिनः अपाकृपपाचृइत्यादयएव॥श्रूयमाणेनडुपचष्प्रभृतीनां
स्मारणंतेनार्थबोधइतिचेन्न॥लाघवाद्व्यवस्थितत्वाच्चश्रूयमाणानामेवार्थसंबंधकल्पनात्॥औत्सर्गिकस्यस्मरणकल्पनेगौरवात्॥अव्य
वस्थापत्तेश्च॥पचतिदेवदत्तः पचंतंतंपश्येतितिप्शतृभ्यांस्मारितस्यलटएवबोधकत्वेएकत्रआधाराधेयभावेनसंसर्गेणदेवदत्तेआख्याता
र्थोपस्थितोविशेषणंइतरत्रतुअभेदेनसंसर्गेणकृदर्थः कर्त्ताविशेषणमितित्वत्सिद्धांतभंगापत्तेश्च॥एतेनकर्त्रधिकरणेआख्यातार्थत्वंकर्तुर्निरस्य
जंजभ्यमानाधिकरणेशानजर्थत्वस्वीकुर्वंतोमीमांसकाअपिपरास्ताः॥यत्तुतैरुक्तंशानजंशेकृत्तरिकृदितिव्याकरणंशक्तिग्राहकमस्तीति॥तद
प्यापाततः॥कृद्वाक्यशेषोयमनिर्दिष्टार्थेषुण्वुलादिषूपतिष्ठतेनतुशत्रादिषुस्यान्यर्थेननिराकांक्षत्वादितिवक्ष्यमाणत्वात्॥आकांक्षितविधानं
ज्यायइतिन्यायात्॥अन्यथाक्रियमाणइतिकर्मणिशानचोदौर्लभ्यापत्तेश्च॥किंच॥कर्त्तरिकृदितिपक्षेतृग्रहणंतदेवलः कर्मणीत्यत्राप्यनुवृ
त्तंतत्कथंकृतांतिङांनचवैलक्षण्यं॥अन्यलभ्यत्वादेरुभयत्रसाम्यात्॥यत्तुनामार्थयोरभेदएवसंसर्गइतिहिशानजादौकर्त्तावाच्यइत्युक्तं॥तत्तुप
चतिकल्पंपचतिरूपंदेवदत्तइत्याद्यनुरोधात्तिङ्स्वपितुल्यं॥तस्मात्परीत्यानकश्चिच्छत्रंताच्तिङंतेवैषम्यहेतुः॥अस्मद्रीत्यातुभावप्रधानमा ६

रव्यातंसत्वप्रधानानिनामानीतिनिरुक्तकारोक्तेः प्रत्ययार्थप्राधान्यमौत्सर्गिकं तिङ्सुप्सु त्यज्यते॥ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वादिति
सूत्राच्च॥ शतृशानज्विधौरूपविधौच भाष्येपिस्फुटमेतत् पाचकोव्रजतीतिवत्पचतिव्रजतीतिप्रयोगोप्यत एव नोपपद्यते॥ पचतिभवतीत्यादिर्वो
पपद्यते॥ पचतोरूपंपचंतिरूपमित्यादौरूपबाद्यंते द्विवचनादिनभवति॥ तस्मात्तिङ्सुप्सुसुच विशेषणविशेष्यभावव्यत्यासमात्रमस्तीति व
क्ष्यते॥ यत्तुभट्टैरुक्तं। कर्त्तरियदेकत्वंतत्रैकवचनंतिपइति लादिविधेर्द्व्येकयोरित्यादेश्चैकवाक्यतयाव्याख्यानात्कर्तुर्वाच्यतासूत्राद्यानीति
तदप्यापाततः द्विवचनादिसंज्ञात्यादेशनिष्ठाततश्चतद्विधिनाद्व्येकयोरित्यस्यएकवाक्यता॥ ननुतत्रकर्त्तरीत्यस्तियत् द्वित्वादिविशेषणतयाऽन्वयं
निर्दोज्येत॥ लविधितिबादिविध्योरप्येकवाक्यतास्तीतिचेत्॥ सत्यं। वाक्यैकवाक्यता॥ ननुपदैकवाक्यता॥ आदेशविधेर्लविधिलभ्यलकारानु
वादेनप्रवृत्तेः॥ लविधौतु कर्त्तृग्रहणंसचद्विवचनादिसंज्ञाविनिर्मुक्तएव॥ अतएव आदेशस्मारितालकाराबोधकाइतिपक्षेएकत्वादिभानायआ
देशाएवशरणीकर्त्तव्याः॥ एवंणलादौतिबादिद्वारकंलिडादिस्मरणंकल्प्यमितिमहदेवगौरवं॥ नचपरंपरासंबंधेनणलेववोधकः॥ वृत्तिभूम्न
त्वात्॥ अतएवापभ्रंशानांसाधुस्मारकताभ्युपगमस्तत्वापीतिदिक्॥ तस्मात्सूर्वत्रासिद्धमित्यादौयथाआहार्यारोपेणैवव्याख्यानंसर्वसंमतंत
थाशास्त्रीयप्रक्रियायांसर्वं॥ वस्तुतस्तुवाचकतास्फोटैकनिष्ठा॥ तत्रचाष्टौपक्षाः॥ वर्णस्फोटः १ पदस्फोटः २ वाक्यस्फोटः ३ अखंडपदस्फोटः ४
तादृग्वाक्यस्फोटः ५ इत्यं[illegible] स्फोटाः॥ वर्णपदवाक्यभेदेनत्रिविधोजातिस्फोटइति॥ तथाहि॥ किंचिद्वर्णव्यत्यासादिनाशक्तताबच्छेद
कानुपूर्वीभंगस्यप्रतिपदमौत्सर्गिकत्वात्तत्रचकेनचित्क्वचित्प्रथमंशक्तिग्रहात्केनकस्यस्मारणमित्यत्रविनिगमनाविरहात् शभ्भोवृषभोवृ
षइत्यादाविवकल्काकु [illegible] कुरुचकल इत्यादीनांप्रयोगस्समवायिनां सर्वेषामेववर्णानांतत्तदानुपूर्व्यवच्छिन्नानांवाचकतेतिवर्णस्फोटपक्षः॥

कर्मभूतयोर्वाचकानवेतिचेन्नेहविप्रतिपत्तिशरीरं ॥१॥ रामेरामेणरामायेंहरयेहरौहरीनिष्पादौपरिनिष्ठितेरूपेक्रियांशोद्रव्यादिवाचकःक्रियांश्चक
र्मत्वादेरित्यस्यविनिर्गंतुमशक्यतयारामामित्यादिपरिनिष्ठितंपदमेववाचकंकर्मत्वादिविशिष्टस्येतिपदस्फोटपक्षः ॥२॥ दधीदंहरेवविष्णोवेत्या
दावपिविनिगमनाविरहतोत्याद्यैक्यमेवविशिष्टार्थेशक्तमितिवाक्यस्फोटः ॥३॥ एकःपदइतिवदेकंपदंवाक्यंवेत्यबाधितप्रतीतेर्वर्णातिरिक्तमे
वपदंवाक्यंवाखंडंवर्णव्यंग्यं ॥ एकत्वप्रतीतिरौपाधिकीतिचेत् ॥ पटेपितथात्वापत्तेः ॥ कःपदार्थोसावितिचेत् ॥ भावः ॥ भावविशेषेष्वंतर्भ
वतीतिचेत् ॥ त्वत्परिभाषितेषुद्रव्यादिष्वंतर्भूत ॥ नह्येतावताप्रमाणसिद्धंप्रत्याख्यातुंशक्यते ॥ अनियतपदार्थवादेगौरवमितिचेत् ॥ व्य
क्तीयत्तानवापिनास्ति ॥ उपाधीयत्तातुसर्वैःसुवचा ॥ भावत्वाभावत्वाभ्यांनित्यत्वानित्यत्वादिनावाविभजनात् ॥ भावविभाजकोपाधयस्तुघटत्वविभाज
कोपाधिवदेवनावश्यकाः ॥ अस्मिंश्चपक्षेह्येवर्णाअप्यनावश्यकाः ॥ नन्वनुभवसिद्धास्तइतिचेत् ॥ व्यंजकध्वनिविशेषोपहितस्फोटएवककारा
द्यात्मनाव्यवह्रियतइत्यभ्युपगमात् ॥ भाट्टमतेगारोमंदोगकारइतिवत् ॥ अद्वैतसिद्धांतेविषयसंबंधजन्यवृत्तिवैचित्र्येणव्यंगेस्वरूपसुखेवैचि
त्र्यवच्च ॥ अतएववाचस्पतिमिश्राःतत्त्वबिंदौवस्तुतःककारादतिरिच्यमानमूर्तेर्गकारस्याभावादितिस्फोटवादिमतमुपन्यास्यत् ॥ यथावा ॥
अखंडेष्वपिकुकारादिषुवर्णेषुवर्णांतरसमानाकारैकदेशावभासः ॥ तथात्रपक्षेवर्णावभासोपिभविष्यति ॥ उक्तंचवोपदेवेन ॥ शाक्यत्वइवप्रा
क्तत्वेजातेर्लाघवमीक्ष्यतां ॥ औपाधिकोवाभेदोस्तुवर्णानांतारमंद्रवत् इति ॥ भर्तृहरिरप्याह ॥ पदेनवर्णाविद्यंतेवर्णेष्ववयवानच ॥ वाक्यात्प
दानामत्यंतंप्रविवेकोनकश्चनेति ॥ तस्मादखंडंपदंवाक्यंवेति पंचापिव्यक्तिस्फोटावांतरभेदाः ॥५॥ जातिस्फोटवादिनस्तुघोत्तरटत्वादिकंश
क्ततावच्छेदकतयाआद्यपक्षत्रयेपियथाययंवाच्यं ॥ अन्यथासरोरसइत्यादावर्थविशेषप्रतीत्यनापत्तेः ॥ तच्चउपाधिरूपं ॥ उपाधिश्चपरंपरासं

बद्धा जातिरेव॥ साच सर्वाधिष्ठानब्रह्मस्वरूपात्मिका॥ तथाच शक्यांशइव शक्यांशेपि न्यायसाम्येनाकृत्यधिकरणरीत्या ब्रह्मतत्त्वमेव त
दुपहितं वाच्यं वाचकंच॥ अविद्या वा आविद्यकधर्मविशेषो वा जातिरिति पक्षे सैव वाचिकास्त्वित्याहुः॥ ८॥ अष्टावप्येते पक्षाः सिद्धान्तग्रन्थे
षु तत्र तत्रोपनिबद्धाः॥ तथाहि। स्थानिवत्सूत्रे सर्वे सर्वपदादेशा इति भाष्यग्रन्थः॥ पद्यते ऽर्थो ऽनेनेति अर्थवदिह पदं न तु सुप्तिङन्तमेव॥ तथा
च एरुरित्यस्यते स्फरीत्यर्थः इति टीकाग्रन्थश्च वर्णस्फोटेऽनुकूलः॥ तथास्यान्यार्थाभिधानसमर्थस्यैवादेशत्वमिति स्थानेन्तर — तमपरिभा
ष्वेषुवस्थस्थमिपामित्यादिषु निर्वाहान्तदर्थं यथासंख्यसूत्रं नारब्धव्यमिति भाष्यमपि॥ पदस्फोटवाक्यस्फोटौ तु इहैव प्रघट्टके येनोच्चा
रितेनेति भाष्यप्रतीकमुपादाय कैयटेन भाष्यार्थतया वर्णितौ॥ वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वेति वदता तयोरखण्डताप्युक्ता॥ तेषु
शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमिति तत्र तत्र भाष्ये सखण्डतोक्ता॥ मायानिश्चलयन्त्रेषु कैतवानृतराशिषु॥ अयोघने शैलशृङ्गे सीराङ्गे
कूटमस्त्रियामित्यमरः॥ पस्पशायामेव प्रघट्टकान्तरे किं पुनरित्यादि भाष्यमुपादाय कैश्चिद्वर्णस्फोटं अपरे पदस्फोटं वाक्यस्फोटं चाहुरिति वद
ता कैयटेन अइउण् इत्यत्र व्यक्तिस्फोटजातिस्फोटयोर्बलाबलं चिन्तयता प्रत्याहाराह्निकान्ते असरं नसरं विद्यादिति भाष्यं व्याख्यावसरे व्यव
हारनित्यता तु वर्णपदवाक्यस्फोटानां नित्यत्वं तु जातिस्फोटस्येति प्रतिपादयता अनुपदमेव ब्रह्मतत्त्वमेव हि शब्दरूपतया प्रतिभातीत्यर्थः
इति व्याचक्षाणेन सर्वे पक्षाः स्पर्शिता एव॥ यदा तु अविद्यैव जातिरिति पक्षस्तदभिप्रायेण जातिस्फोटस्यापि व्यवहारनित्यतेति असरं नसरं वि॰
द्यादित्यस्य कैयटीये पक्षान्तरं॥ आद्यन्तौ टकिताविति सूत्रे च भाष्य एव वर्णस्फोटपदस्फोटावुक्तौ॥ असत्यमेव प्रकृतिप्रत्ययविभागं तदर्थं चा
श्रित्य रेखागवयन्यायेन सत्यस्य पदस्फोटस्य व्युत्पादनमभिप्रेतमिति तत्रैव कैयटः॥ अर्थवदधातुः स्वं रूपं शब्दस्य तपरस्तत्कालस्येत्यादि

श्री. कौ. सूत्रेऽपि स्पष्टमिदं भाष्यकैयटादावित्यलं बहुना॥ जातिस्फोटपक्षे [illegible]लमुक्तं हरिणा॥ संबंधिभेदात्सत्तैव भिद्यमाना गवादिषु॥ जातिरित्युच्य
ते तस्यां सर्वे शब्दा व्यवस्थिताः॥ तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते॥ सा नित्या सा महानात्मा तामाहुस्त्वतलादय इति॥ जातेः स्फोटत्वमपि
५ प्रघट्टकांतरे स एवाह॥ अनेकव्यक्त्यभिव्यंग्या जातिः स्फोट इति स्मृता॥ कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिता इति॥ यद्यपीहाष्टौ पक्षा
उक्तास्तथापि वाक्यस्फोटपक्षे तात्पर्यं ग्रंथकृतां॥ तत्रापि जातिस्फोट इत्यवधेयं॥ पूर्वपूर्वोपमर्देनैवोत्तरोत्तरोपन्यासात्॥ तथा च प्रथमव्युत्प
त्तेर्व्यवहाराधीनतया संपूर्णस्य वाक्यस्य विशिष्टे प्राथमिकः शक्तिग्रह इति निर्विवादं॥ स चावापोद्वापाभ्यामवयवानां शक्तिरिति न्यायोपष्टंभे
नत्वन्यथा इति [illegible]णां पंथाः॥ एकदेशादिस्थले उक्तरीत्या विनिगमनाविरहेण कैश्चित्स्वरूपादिस्थले पूर्वलोपाद्यभ्युपगमेन चान्या
करणानां कल्पने सति अवयवशक्तेर्दुरुपपादतया प्राथमिकशक्तिग्रह एव प्रमारूढ इति नु सिद्धांतिकः पंथाः॥ उक्तं च हरिणा॥ तत्र व्युत्पत्त्यमेके
षां तु त्रैतेषां विपर्यय इति॥ ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकंबले॥ देवदत्तादयो वाक्ये तथैव स्युरनर्थका इति च॥ एवं स्थिते निपाताद्यो
तका विकरणा अनर्थका इत्यादिविचारोऽपि प्रक्रियादशायामेव॥ आह च॥ अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पने॥ धातूपसर्गयोः शास्त्रे
धातुरेव तु तादृश इति॥ तादृशः खंड इत्यर्थः॥ एवं च नामार्थयोरभेद एव संसर्गः प्रत्ययार्थः प्रधानमित्यादिव्युत्पत्तयोऽपि प्रक्रियाश्रया एव
॥ उक्तं च॥ किं गर्भजन्ये किं गर्भे कीदृग्भातीति नो मते॥ विचारः फलितः सर्वः प्रकृतिप्रत्ययाश्रय इति॥ आरोपितस्यापि पारमार्थिके उपायताना राम
विरुद्धा॥ लिपिस्थूलारुंधतीशाखाचंद्रादीनां लौकिकदृष्टांतानां अथर्ववादवाक्यपंचकोशावतरणादीनां तंत्रांतरसिद्धानां पूर्वत्रासिद्धादी ५
नां चैतच्छास्त्रसिद्धानां प्रागेव दर्शितत्वात्॥ तदेवं पक्षभेदेन अविद्यैव ब्रह्मैव वा स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोट इति सिद्धम्॥

आहच॥शास्त्रेषु प्रक्रियाभेदैः अविद्यैवोपवर्ण्यते इति॥ समारंभस्तु भावानामनादि ब्रह्म शाश्वतमिति च॥ तदेवं वराटिकान्वेषणाय प्रवृत्तश्चिंतामणिं लब्धवानिति वासिष्ठरामायणोक्ताभाणकन्यायेन शब्दविचाराय प्रवृत्तः सन् प्रसंगादिहैते औपनिषदं ब्रह्म व्युत्पाद्यतामित्यभिप्रायेण भगवान्भर्तृहरिर्विवर्त्तवादादिकमपि प्रसंगाद्व्युत्पादयत्। तत्तु तंत्रांतरे स्फुटं प्रकृतेनातीवोपयुक्तं चेति नेह तन्यते॥ इति स्फोटस्वरूपव्युत्पादनं॥ स्यादेतत्॥ चलिखचचकारस्त्रुटितइत्यादिव्यवहाराल्लिपावेव शब्दभ्रमवतां तत्रैव वाचकत्वाभिमानजुषां बालानां पुस्तकमुपयुज्यते म्रियूतथैष भेदग्रहवतामपीति वस्तुस्थितिः॥ एवमिहापि प्रकृत्यादिविभागं पारमार्थिकत्वाभिमानवतामपि उपयुज्यत एव शास्त्रं तत्किमर्थं कल्पनाव्युत्पादनक्लेशः॥ अत एव हि भाष्यकारोऽपि शब्दो नित्योऽनित्यो वेति विकल्प्य उभयथापि व्याकरणारंभस्य निष्प्रत्यूहत्वाद्यथा तथास्तित्युदाजिष्यत इति चेत्॥ सत्यं। व्युत्पत्त्यर्थं वस्तुस्थितिः कथिता॥ पक्षभेदेषु हि गौणमुख्येषु व्युत्पादितेषु तत्र तत्र परस्परविरुद्धतयाभासमाना अपि मिथ्यात्वेनाकल्प्यव्यवस्था परिग्रहः शक्यंते॥ स्वार्थ द्रव्यादीनां पंचानां क्रमेण भानमित्यादि वक्ष्यमाणमपि कल्पनयैवोपपादयितुं शक्य तदिति दिक्॥ नन्वस्तु साधुशब्दो विषयः अस्तु च प्रकृतिप्रत्ययादिकल्पनया तद्व्युत्पादनोपपत्तिः। तथापि व्याकरणाध्ययनस्यानुष्ठापकं किमिति चेत्॥ नित्याध्ययनविधिरिति गृहाण॥ श्रूयते हि॥ ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्च इति॥ निष्कारणो दृष्टकारणनिरपेक्षो नित्य इति यावत्॥ कर्तव्यतेनुष्ठाप्यते नेनेति कारणं फलं॥ ब्राह्मणेन षडंगो वेदोऽध्येयो ज्ञेयश्चेत्यन्वयः॥ तथा च सांगवेदाध्ययनतदर्थज्ञानरूपोयं धर्मो नित्यः संध्योपासनादिवदित्यर्थः॥ श्रुतिरेषेति हरदत्तादयः॥ स्मृतिरिति तु भट्टाचार्याः॥ तत्र यदि स्मृतिरेवेति प्रामाणिकं तर्हि आगमः खल्वपीति भाष्ये व्यागममूलकत्वादागमः स्मृतिरेवेति व्याख्येयं॥ अंगत्वं चांगत्वेन संस्तवात्॥ उक्तं हि शिक्षायां॥ मुखं व्याकरणं

श॰ कौ॰ तस्यज्योतिषंनेत्रमुच्यते॥निरुक्तंश्रोत्रमुद्दिष्टंछंदसांविचितिःपदे॥शिक्षाघ्राणंतुवेदस्यहस्तौकल्पान्प्रचक्षते इति॥उपकारकतयाप्यंगत्वं॥व्या
६ करणेहि अर्थविशेषमाश्रित्यस्वरविशेषादीन् विदधत् पदार्थविशेषनिर्णयेउपयुज्यते॥ज्योतिषमपिस्वाध्यायोपयोगिनंअनुष्ठानोपयोगिनं
चकालविशेषंप्रतिपादयति॥निरुक्तंतुव्याकरणस्यैवपरिशिष्टप्रायंबाहुलकादिसाध्यानांलोपागमविकारादीनांप्रायशस्तत्रसंग्रहात्॥छं
दोविचितिरपिगायत्र्यादिलक्षणद्वारा गायत्र्यायजतीत्यादिविध्यर्थनिर्णयेउपयुज्यते॥शिक्षापिवर्णोच्चारणप्रकारंदर्शयति॥कल्पसूत्राण्य
पिप्रकरणांतरपठितस्यन्यायलभ्यस्यशाखांतराधीतस्यचांगजातस्योपसंहारेणप्रयोगंदर्शयंति॥तस्मात्षडंगानितेष्वपिप्रधानंव्याकर
णं॥पदपदार्थावगमस्यव्याकरणाधीनत्वात्॥वाक्यार्थज्ञानस्यतन्मूलकत्वात्॥अतएवतस्यशिक्षायांमुखत्वेननिरूपणंकृतं॥मन्वा
दिस्मृतिष्वपिअंगाध्ययनविधयःप्रसिद्धाएव॥तथाचाध्ययनविधिर्व्याकरणाध्ययनस्यानुष्ठापकइतिस्थितं॥तथाचसंध्योपासनादेर
भावेप्रत्यवायोनुष्ठानेचपापक्षयइतियथाभ्युपेयतेतथाव्याकरणाध्ययनस्याप्यननुष्ठानेअनुष्ठानेचबोध्यम्॥रक्षाप्रभृतीनिफलांतरा
ण्यपिसंति॥तथाचभाष्यं॥कानिपुनरस्यप्रयोजनानि॥रक्षोहागमलघ्वसंदेहाःप्रयोजनमिति॥अत्रप्रयुज्यतेप्रवर्त्यतेनेनेतिकरण॰
ल्युडंतः॥प्रयोजयतीतिकर्त्तृव्युत्पत्त्यावाबाहुलकात्कर्तृल्युडंतोवा॥उभयथापिप्रवर्त्तकविधिपरःपुल्लिंगःप्रयोजनशब्दएकः॥फलपरः॰
क्लीबोपरः॥उभयोर्नपुंसकमनपुंसकेनेतिनपुंसकैकशेषेएकवद्भावस्यवैकल्पिकत्वात्प्रश्ने बहुवचनंउत्तरेएकवचनंचबोध्यम्॥तत्र
आगमःप्रवर्त्तकः॥रक्षोहलाघवासंदेहास्तुफलानिइतिविवेकः॥तत्रप्रवर्त्तकआगमोव्याख्यातः॥फलानिव्याख्यायंते॥तत्ररक्षावेदसं राम
रक्षणं॥तथाहि॥भाषायामदृष्टालोपागमवर्णविकाराश्छंदसिदृश्यंते॥तेकेवलप्रयोगशरणैःग्रामादिकाः संभाव्येरन्॥वैयाकरणस्तु ६

लक्षणदर्शनेन देवरूपं स्थापयति ॥ तत्र लोपे उदाहरणं ॥ त्मना देवेषु विविदे मितद्रुः । त्मना आत्मनेत्यर्थः ॥ मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः ॥ आ
गमो यथा ॥ देवासः ब्राह्मणासः । आज्जसेरसुगित्यसुगागमः ॥ लोपागमौ यथा ॥ देवा अदुह्र ॥ अदुहतेत्यर्थः ॥ दुहेर्लङो झस्यादादेशे कृते
लोपस्त आत्मनेपदेष्विति तलोपः ॥ बहुलं छंदसीति रुडागमः ॥ एतेन नाशिरं दुह्रे विश्वाद इत्तेधेनवो दुह्र इत्यादि लुङंतमपि व्याख्यातं ॥ वर्णविका
रो यथा ॥ गृभ्णामि ते सौभगत्वाय ॥ हृग्रहोर्भश्छंदसि हस्येति वक्तव्यमिति भकारः । प्रत्ययोऽपि छांदसोऽस्ति यथा ॥ उद्ग्राभं च निग्राभं चेति ॥ उदि
ग्रह इति सूत्रे उद्ग्राभनिग्राभौ च छंदसि स्रुगुद्यमननिपातनयोरिति वचनादुन्निपूर्वाद्ग्रहेर्घञ् ॥ तत्र उत्पूर्वात् सूत्रेण लोकेऽपि सिद्धो घञ् ॥ निपू
र्वात्तु वार्त्तिकोक्तश्छंदस्येव ॥ सन्निवेशविशेषयुक्ताः पात्रविशेषाः स्रुचः ॥ इह तु जुहूपभृतोरेव ग्रहणं ॥ उद्ग्राभं चेति जुहूमुद्यच्छति ॥ निग्राभं
चेत्युपभृतं नियच्छतीति वचनात् ॥ भकारादेशः प्राग्वत् ॥ ऊहोऽपि प्रयोजनं ॥ तथाहि ॥ यत्रांगजातं संपूर्णमुपदिष्टं सा प्रकृतिः ॥ यथा दर्शपूर्ण
मासौ ॥ यत्र नोपदिष्टं सा विकृतिः ॥ यथा सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति विहितो यागः ॥ तत्र वैकृतस्य विधेर्विषयभूतायां भावनायां करणी
भूते यागे उपकारकाकांक्षायां तन्मुखेन प्राकृतमंगजातं प्राप्यते ॥ वैदिके करणे तादृशानामेवांगानामपेक्षितत्वात् ॥ तेषामेव प्रकृतौ क्लृप्तसा
मर्थ्यत्वात् ॥ तद्विशेषस्य चैकदेवतात्वादिना शक्यज्ञानत्वात् ॥ तस्मात्प्रकृतिवद्विकृतिः कर्त्तव्येति पूर्वमीमांसायां स्थितं ॥ तत्र यस्यांग
स्य प्रकृतौ य उपकारः क्लृप्तस्तस्य विकृतावसंभवे निवृत्तिः ॥ यथा प्रकृताववघातस्य वैतुष्यमुपकारस्तया क्लृप्तं तस्य कृष्णलेष्वसंभवादव
घातस्य निवृत्तिः ॥ मंत्रा अप्यंगं ॥ तेषां चानुष्ठेयार्थप्रकाशनं कार्यं ॥ तत्र प्रकृतौ यस्य मंत्रस्य यदभिधेयं तच्चेद्विकृतौ साकल्येन नास्ति तदा कृ
त्स्नस्य मंत्रस्य निवृत्तिः ॥ यथा ॥ अवरक्षो दिवः सपत्नं वध्यासमित्यवघातमंत्रस्य कृष्णलेषु यस्य त्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मा

शा·कौ· त्रेनिवर्त्तते॥ यथा॥अग्नये त्वा जुष्टं निर्वपामीत्यस्य मंत्रस्यावयवभूतं दैवताभिधायिपदं औषधद्रव्यकत्वेन एकदेवताकत्वेन चाग्नेयविकारभूते सौ
७ र्येनिवर्त्तते॥अग्निशब्देन लुप्तद्वारकतया निवर्त्तमाने एकारोपि निवर्त्तते॥अकारांतेतरप्रकृतिसन्निधाने नैव हि एकारस्य संप्रदानं वाच्यं॥अ
शांतानुपशब्दस्य॥ततश्च जुष्टं सूर्यायेत्याद्युदात्तं अग्नय इत्यस्य मध्योदात्तस्य स्थाने ऊह्यं॥सोयं प्रकृत्यूहः॥लिंगस्य क्वचिदूहः। यथा। दे
वीरापः शुद्धाः स्थेत्यप्सु प्रनियुक्तो मंत्रः। तस्याज्ये ऊहः॥देवाज्य शुद्धमसीति॥प्रत्ययमात्रस्य क्वचिदूहः॥यथा॥ मा भेर्मा संविक्था इति पुरोडा
शावदानमंत्रः॥तस्य धानासूहः॥ मा भैष्ट मा संविग्ध्वमित्यादिरिति हरदत्तादयः॥ याज्ञिकास्तु संविग्ध्वमित्यूहमाहुः॥ युक्तं चैतत्॥ प्रकृता
वनिकृतमप्रतिजिघृक्षया व इत्यस्य प्रयोगो न तु ओविजी भयचलनयोरित्यस्येत्यवधारणात्॥लाघवमपि प्रयोजनं॥ तथाहि॥ अध्यापने ब्रा
ह्मणस्य वृत्तिः॥ जीविनिर्वाहश्च वैदुष्याधीनः॥ वैदुष्यं च साध्वसाधुविवेकः॥ स च न प्रतिपदपाठादिना संभवति॥ शब्दानामानंत्यात्॥ तस्मादुत्सं
गापवादरूपलक्षणद्वारा तद्बोधने लाघवं॥अन्यथा तु गौरवं॥असंदेहोपि प्रयोजनं॥तथाहि॥स्थूलपृषतीमनड्वाहीमालभेतेति श्रूयते॥तत्र सं
देहः कर्मधारयोयं बहुव्रीहिर्वेति॥तत्र कर्मधारयपक्षे पृषतीशब्देन मत्वर्थलक्षणया पृषत्वती बिंदुमती गौरेवाभिधीयते स्थूलापि सैव॥बिंदूनां
स्थौल्यं तानवं वा यथा तथास्तु॥ बहुव्रीहौ तु स्थौल्यं पृषत्त्वे वेति॥ गौस्तु स्थूला कृशा वेत्यत्रानादरः॥ तत्र लकाराकारे उदात्तत्वं दृष्ट्वा पूर्वपदप्र
कृतिस्वरेण बहुव्रीहिं वैयाकरणो निश्चिनोति॥ ततश्च निश्चयेन प्रतिबंधात्संशयानुत्पादः॥ स एवासंदेहः॥ अर्थाभावेव्ययीभावाद्संदेहोस्मि
ति स्यादिति चेन्न॥ पर्यायेणाव्ययीभावतत्पुरुषसंज्ञाद्वयमपीह भवतीति द्वितीये उपपादयिष्यमाणत्वात्॥ अत एवोभयथा मुनिप्रयोगः॥ अ राम·
द्रुतायामसंहितमिति॥ अथासंहितयेति च॥ एवं इंद्रपीतस्योपहूतो भक्षयामीत्यादावपि स्वरेणैव बहुव्रीहिनिर्णये इंद्रपीताधिकरणं अवे ७

याकरणान्प्रतिसार्थकं॥ कृत्वाचिंतान्यायेनवा नेयमितिदिक्॥ तदेवं रक्षोहलाघवासंदेहाख्यानि चत्वारि फलानि व्याख्यातानि॥ आगमस्तु
प्रवर्त्तक इत्युक्तं॥ भाष्ये तु संदर्भशुध्यर्थं फलचतुष्टयस्य प्राक् पश्चाद्वा प्रवर्त्तके वक्तव्ये मध्ये तदुक्त्या फलसंदेशेन नित्यानामपि फलपर्यवसानम
स्तीति सूचितं॥ फलंतु पापक्षयः प्रत्यवायानुत्पत्तिर्वा॥ धर्मेण पापमपनुदति॥ विहितस्याननुष्ठानान्निंदितस्य च सेवनात्॥ अनिग्रहाच्चेंद्रियाणां
नरः पतनमिच्छतीत्यादिवचनानीह साधकानीति दिक्॥ इमानि च भूय इत्यादिभाष्येण प्रवर्त्तकवचनांतराणि उदाहृत्य व्याख्यातानि॥ तद्यथा॥ ते
ऽसुरा हेलयो हेलय इति कुर्वंतः पराबभूवुस्तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इति ब्राह्मणं॥ अत्र न म्लेच्छितवा एत
स्य विवरणं नापभाषितवै इति॥ उभयत्रापि कृत्यार्थे तवैकेनकेन्यत्वन इति तवैप्रत्ययः॥ धातूनामनेकार्थतया निंदावचनान्म्लेछधातोः कर्मणि घञ्
॥ तेनापशब्दसामानाधिकरण्यं न विरुध्यते॥ अत्र न म्लेच्छितव्यमिति निषेधस्य ते सुरा इत्यर्थवादः॥ न चेह रात्रिसत्रन्यायेन आर्थवादिकं फलम
स्त्विति वाच्यम्॥ द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति न्यायेन अपापश्लोकश्रवणवत्वाशास्त्यमात्रपरत्वात्॥ प्रकरणा-
त्क्रत्वंगं ह्ययं निषेध इति यर्वाणस्तर्वाणो नामेत्यादावुत्तरग्रंथे भाष्यकारैरेव स्फुटीकरिष्यते॥ अत एव इहापि पराभूता मा भूमेत्यध्येयं व्याकर
णमिति नोपसंहृतं॥ किंतु म्लेच्छा मा भूमेत्येव॥ म्लेच्छा निंद्याः॥ शास्त्रबोधितविपरीतानुष्ठानादिति भावः॥ अत्र हैहेप्रयोगे हैहयोरिति प्लुते प्लुतत्व
प्रयुक्ते प्रकृतिभावे च कर्त्तव्ये तदकरणं म्लेच्छनमित्येके॥ ननु सर्वः प्लुतः साहसमनिच्छता विभाषा कर्त्तव्य इति भाष्यकृता वक्ष्यमाणत्वान्नैष दोष
इति चेत्॥ सत्यं॥ अत एवापरितोषाद्वाक्यद्विर्वचनं म्लेच्छनमित्यपरैर्व्याख्यातं॥ सर्वस्य द्वे इत्यत्र पदग्रहणस्य चोदितत्वादिति तेषां भावः॥ ननु वे
दशास्त्रीयं द्विर्वचनं किंतु तात्पर्यद्योतनार्थं म्लेच्छिकः पुनः प्रयोगः॥ अनावृत्तिः शब्दादनावृत्तिः शब्दादितिवदिति चेत्॥ तर्ह्याम्रेडितस्वरानुपपत्तिः

॥यदि तु तत्राम्रेडितस्वरविनिर्मुक्त एव पाठस्तर्हि अरिशब्दे रेफस्य लत्वमपशब्द इत्यवधेयम्॥ इदं च भाष्यादिषु प्रसिद्धं श्रुतिपाठमनुसृत्याख्या
तम्॥ अयं च पाठः कचिच्छाखायामन्वेषणीयः॥ माध्यंदिनानां। शतपथब्राह्मणे तु हेलवो हेलव इति वदंत इति पठित्वा तस्माद्ब्राह्मणो न म्लेच्छेदि
ति पठ्यते॥ तत्र यकारस्थाने वकारोपशब्द इति स्पष्टमेव॥ तथा शिक्षासु पठ्यते॥ मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह॥ स वा-
ग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोपराधादिति॥ स्वरेण स्वरतः। हीयमानपापयोगाच्चेति तसिः॥ मिथ्याप्रयुक्तः। यदर्थप्रतिपादनाय प्रयु
क्तस्ततोर्थांतरं स्वरवर्णदोषात्प्रतिपादयन्॥ अत एव तमर्थं नाहेत्यर्थः॥ वागेव वज्रः हिंसकत्वात्॥ यजमानं हिनस्तीति॥ यथाध्वर्युकृताद्धो
माद्यजमाने धर्मोत्पत्तिः॥ एवमध्वर्युकृतादपशब्दप्रयोगाद्यजमाने प्रत्यवाय इत्यर्थः॥ यथेत्युदाहरणे॥ इंद्रशत्रुः॥ इंद्रशत्रुशब्दः पुराकि
ल विश्वरूपाख्ये त्वष्टुः पुत्रे इंद्रेण हते सति कुपितस्त्वष्टा इंद्रस्य हंतारं वृत्राख्यं पुत्रांतरमुत्पिपादयिषुराभिचारिकं यागं कृतवान्॥ तत्र च इंद्र
स्य शातयिता शत्रुर्हिंसक इति यावत् तथाभूतः सन् वर्धस्वेति प्रतिपादितुं इंद्रशत्रुर्वर्धस्वेति प्रयुक्तं॥ ण्यंताच्छदेरौणादिकः कुन् प्रत्ययः॥
प्रज्ञादिगणे निपाताद्ध्रस्वः॥ इंद्रशत्रुस्त्वस्य विधेयत्वान्न संबोधनविभक्तिः॥ तस्या अनुवाद्यविषयकत्वात्॥ अत एव राजन् युध्यस्व राजा भव यु
ध्यस्वेत्यनयोर्व्यवस्थयैव प्रयोगः॥ राजत्वस्यासिद्धत्वे संबोधनविभक्तिर्न तु विधेयत्वेपीति॥ एवं स्थिते इंद्रशत्रुशब्दे तत्पुरुषसमासप्रयु
क्तेंतोदात्ते वक्तव्ये प्रमादादाद्युदात्तः किलोक्तः॥ तथा च पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो लब्धः॥ इंदेर्हि धातोरौणादिके ऋज्रेंद्रेत्यादिना रन्
प्रत्यये कृते इंद्रशब्द आद्युदात्तो ञ्नित्यादिर्नः॥ तेनेंद्र एवास्य हिंसकः संपन्न इति श्रुतीतिहासपुराणादिषु प्रसिद्धं॥ तदिहोदाहरणतयोक्तं॥ स्यादे
तत्॥ यज्ञकर्मणीत्येकश्रुत्येह भवितव्यं॥ सा च तत्पुरुषबहुव्रीह्योरविशिष्टेति॥ अत्राहुः॥ जपादिपर्युदासेन मंत्रेष्वेव एकश्रुतिर्विधीयते॥ स्वे-

च्छया प्रयुज्यमानश्च मंत्रो न भवति ॥ तदुक्तं भेदलक्षणे जैमिनिना ॥ अनाम्नातेष्वमंत्रत्वमिति ॥ आपस्तंबश्चाह ॥ अनाम्नाता अमंत्रा यथा प्रवरोह
नामधेयग्रहणानीति ॥ अतएव मंत्रोहीन इति पाठस्य शिक्षायां प्रसिद्धत्वेपि ऊह्यमानस्यामंत्रतया यथेंद्रशत्रुरिति वाक्यशेषो असंगतः स्याद्
तो मंत्रशब्दः शब्दमात्रपर इत्याशयेन भाष्ये दुष्टः शब्द इति पठितं ॥ ननु स्वाहेंद्रशत्रुर्वर्द्धस्वेति वेदे पठ्यत एवेति ॥ सत्यं ॥ ऊहितं यदमंत्रभूतं अत्र
कार्ये तदनुकरणस्य पाठेपि अर्थपरस्यानुकार्यस्य लौकिकत्वानपायात् ॥ नन्विंद्रशत्रुशब्दस्य लौकिकत्वे कथं स्वरप्रयुक्तयोर्गुणदोषयोः प्रसक्तिः
स्वरस्य वेदमात्रविषयकत्वादिति चेत् ॥ न ॥ स्वरविधौ छंदोधिकाराभावात् ॥ एतावानेव हि भेदः ॥ यच्छंदसि त्रैस्वर्यमेकश्रुतिश्च व्यवस्थया श्री
यते ॥ लोके त्वैच्छिको विकल्पः ॥ अतएव एकश्रुत्या सूत्रपाठस्त्रैस्वर्येण वेति पक्षद्वयमपि तत्र तत्रोपन्यस्तमिति वक्ष्यामः ॥ नन्वेवमुच्चैस्तरां वे-
ति सूत्राद्विकल्पानुवृत्त्यैव सिद्धौ विभाषा छंदसीत्यत्र विभाषाग्रहो व्यर्थः स्यात् ॥ प्रसज्यप्रतिषेधे तु नायं दोषः ॥ यज्ञकर्मणीत्यस्य निवृत्तये पुनर्वि
भाषाग्रहणात् ॥ न च पर्युदासपक्षेप्येवमेवास्त्विति वाच्यम् ॥ नित्यविकल्पविध्योर्विषयभेदस्यावश्यकतया आरंभसामर्थ्यादेव तन्निवृत्तिसि
द्धेः ॥ प्रसज्यप्रतिषेधे तु नारंभसामर्थ्यं ॥ ऊहादिष्वमंत्रेषु चरितार्थस्य पूर्वविधेरुत्तरेण छंदोमात्रविषयकेण बाधसंभवात् ॥ न त्वूहादीनां छंदस्त्व
मस्ति ॥ मंत्रब्राह्मणेतरत्वात् ॥ तस्मादसमर्थसमासमाश्रित्यापि प्रसज्यप्रतिषेध एवागत्या स्वीकर्तुमुचित इति चेन्न ॥ पर्युदासपक्षेपि मंत्रे नि
त्यं ब्राह्मणे वेति विषयविभागसंभवेन यज्ञकर्मनिवृत्तये विभाषाग्रहणसंभवात् ॥ उक्तपरितोषादेव तु केचिज्जपादिषु प्रसज्यप्रतिषेधमाश्रित्य
इहाप्येकश्रुतेः प्राप्तौ सत्यां तदकरणं बहुव्रीहिस्वरकरणं च स्वरितोपराधादित्यस्यार्थ इत्याहुः ॥ श्रूयते च ॥ यदधीतमविज्ञातं निगदेनैव शब्द्यते
॥ अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ निगदेन ॥ पाठमात्रेण ॥ शुष्कैध इति सांतेन क्लीबेन एधशब्देन अकारांतेन वा पुल्लिंगेन निर्वाह्यं ॥

नज्वलति॥ नप्रकाशतेनिष्फलंभवतीत्यर्थः॥ निरुक्तेतु॥ अथापिज्ञानप्रशंसाभवंत्यज्ञाननिंदाचेत्युपक्रम्य॥ स्थाणुरयंभारहारःकिलाभूदधीत्य
वेदंनविजानातियोर्थंयोर्थज्ञइत्सकलंभद्रमश्नुतेनाकमेतिज्ञानविधूतपाप्मेतिमंत्रमुदाहृत्ययद्गृहीतमविज्ञातमित्यादिपठितं॥ तत्रापिगृहीतंश
ब्दतः॥ अविज्ञातंतुअर्थतः॥ प्रकृतिप्रत्ययादिविभागेनवेत्यादिशेषंप्राग्वत्॥ अन्यत्रापिश्रूयते॥ एकःशब्दःसम्यग्ज्ञातःसुष्टुप्रयुक्तःस्वर्गेलोकेका
मधुग्भवतीति॥ एतच्चएङःपूर्वपरयोरितिसूत्रेभाष्यकृद्वक्ष्यति॥ एतन्मूलकमेवकात्यायनप्रणीतेषुभ्राजाख्येषुश्लोकेषुस्मर्यते॥ यस्तुप्रयुंक्ते
कुशलोविशेषेशब्दान्यथावद्व्यवहारकाले॥ सोनंतमाप्नोतिजयंपरत्रवाग्योगविद्दुष्यतिचापशब्दैरिति॥ दुष्यतिचापशब्दैरित्यत्रअवैयाकरणः
कर्त्तासामर्थ्याल्लभ्यः॥ तथा॥ अविद्वांसःप्रत्यभिवादेनाम्नोयेनप्लुतिंविदुः॥ कामंतेषुतुविप्रोष्यस्त्रीष्विवायमहंवदेत्॥ अयमहमित्यस्यअनु
करणंचानितिपरमितिनिगतिसंज्ञा॥ ततोगतिसमासेपिअस्यवामीयमित्यादाविवानुकरणत्वादेवविभक्तेर्लुङ्न॥ याज्ञिकाःपठंति॥ प्रयाजाःस
विभक्तिकाःकार्याइति॥ यद्यपिप्रकृतौप्रयाजमंत्राःसविभक्तिकाएवपठ्यंते॥ तथापियदिआधानादनंतरंयजमानउदरव्यथावान्स्याद्यदिवा
संवत्सरमध्येतस्यमहतीविपत्स्यात्तदानैमित्तिकींपुनराधेयेष्टिंविधायतत्रेदमाम्नातंप्रयाजाःसविभक्तिकाइति॥ तत्रकेवलविभक्तेःप्रयोगा
नर्हत्वात्प्रकृतिराक्षिप्यते॥ साचाग्निशब्दरूपा॥ ननुयाकावित्॥ निरुक्तेदैवतकांडेअथकिंदेवताःप्रयाजानुयाजाइतिप्रश्नमवतार्यमंत्रवर्णा
दीनुदाहृत्यआग्नेयाइतितुस्थितिरित्युपसंहारात्॥ तस्मादादितश्चतुर्षुप्रयाजेषुचतस्रोविभक्तयोग्निशब्दप्रकृतिकाःपठ्यंतेइत्यादिश्रौत
ग्रंथेषुद्रष्टव्यं॥ तथान्यत्रापियोवाइमांपदशःस्वरशोक्षरशोवाचंविदधातिसआर्त्विजीनइति॥ पदंपदमितिसंख्यैकवचनाद्वीप्सायामिति
शस्॥ स्वरउदात्तादिः॥ अक्षरंव्यंजनसहितोच्॥ ऋत्विजमर्हतीत्यार्त्विजीनोयजमानः॥ ऋत्विक्कर्मार्हतीत्यार्त्विजीनोयाजकः॥ यज्ञर्त्विग्भ्यां

घस्वज्ञाविति सूत्रेण यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानमिति वार्त्तिकेन च खञ्॥ यजने याजने च विदुष एवाधिकार इति भावः॥ ऋग्वेदेपि बहवो मंत्रवर्णाः॥ चत्वारि शृंगा॥ चत्वारि वाक्॥ उत त्वः पश्यन्॥ सक्तुमिवेत्यादयः॥ तितउ परिपवनं भवतीति भाष्यं॥ चालनीति तितउः पुमानिति तु अमरस्य प्रमाद इत्येके॥ वस्तुतस्तूक्तभाष्यानुरोधादमरग्रंथे पुंस्त्वायोगमात्रं व्यवच्छेद्यं न त्वन्ययोगोपि॥ तथा च पुंनपुंसकवर्गे॥ स्याद्धूलास्तु हिंगु तितउ इति त्रिकांडशेषः॥ अत एव तितउमाचष्टे तितापयतीत्यभियुक्तग्रंथा अपि संगच्छंते इति दिक्॥ याज्ञिकाः पठंति॥ आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति॥ तथा॥ दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यंतरंतस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितमिति॥ नामकरणे अधिकारिणः पितुर्ये त्रयः पुरुषास्ताननुकायति अभिधत्ते इति त्रिपुरुषानूकं॥ अन्येषामपि दृश्यत इति दीर्घः॥ त्रिपुरुष इत्यत्र पात्रादित्वात्स्त्रीत्वाभावः॥ मूलविभुजादित्वात्कः॥ यत्तु उपपदाविवक्षया आतश्चोपसर्गे इति कं कृत्वा ततः षष्ठीतत्पुरुष इति॥ तत्तु कर्मण्यणिति सूत्रे अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेति वार्त्तिकस्य नदीसूत्रे स्त्र्याख्याविति मूलविभुजादित्वात्क इति भाष्यस्य च अननुगुणं॥ अत एव गंगाधरादिशब्दानां संज्ञाशब्दत्वमिति प्राचः॥ वस्तुतस्तु॥ प्रथमं कर्माविवक्षायां अनूकपदं व्युत्पाद्य पश्चात्कर्मसंबंधेप्यदोषः॥ वार्त्तिकादिकं तु प्रथममेव कर्मविवक्षामभिप्रेत्य॥ अन्यथा कृतपूर्व्यादिषु का गतिः॥ अत एव शकं च क्षुद्रुपहेतुमिति भाष्यव्याख्यायां बहिरंगस्त्रीत्वप्रतीत्या अंतरंगः पदसंस्कारो न विहन्यत इति कैयटोपि वक्ष्यति॥ विवक्षा च लोकप्रसिध्यनुसारिणी न तु स्वायत्तेति विपराभ्यां जेरित्यादावपि पूर्वं धातुः साधनेन युज्यत इति पक्षमुपष्टभ्य विजयतीत्यादि नापादनीयमिति दिक्॥ तथा च ऋग्वेद एव पठ्यते॥ सुदेवो असि वरुण यस्य ते सप्त सिंधवः॥ अनुक्षरंति काकुदं सूर्म्यं सुषिरामिवेति॥ अस्यार्थः॥ हे वरुण सत्य देवो

शा॰ कौ॰ सि॥ यस्यते कम्कुदंतालुका कुर्जिव्हासाउद्यतेउत्क्षिप्यतेस्मिन्निति काकुदं॥ षदेरूत्क्षेपणमर्थः॥ धातूनामनेकार्थत्वात्॥ ततो घञर्थे कविधानमि
१० त्यधिकरणे कः॥ संप्रसारणं षष्ठीतत्पुरुषे शकंध्वादित्वात्पररूपं॥ नुदप्रेरणे इत्यस्मादधिकरणे कः पृषोदरादित्वान्नुशब्दस्य लोप इत्यन्ये॥ निरु
न्कः स्वरसोप्येवं॥ समसिंधवद्वसिंधवो विभक्तपः॥ अनुस्मरंतिना लुभाप्य प्रकाशंते इत्यर्थः॥ अत्र दृष्टांतः॥ यथा सच्छिद्रं लोहमयीं प्रतिमां प्रवि
श्याग्निः प्रकाशतेनथेति॥ अग्निर्हि तत्रस्थं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति तथा विभक्तयोपि शारीरं पापमपाकुर्वंतीति भावः॥ सूर्मी स्थूणाय
प्रतिमेत्यमरः॥ स्मर्यते च॥ सूर्मीं ज्वलंतीमालिंगेन्मृत्युवे गुरुतल्पग इति॥ अग्निपूर्व इत्यत्र वा छंदसीत्यनुवृत्तेर्यणादेशः॥ सुषिरामिस्यत्रा र्श
आद्यच् अभेदोपचारो वेत्याहुः॥ वस्त्र नस्त्र॥ ऊषसुषिमुष्कमधोरइ तिमत्वर्थीयो रप्रत्ययः॥ रंध्रं श्वभ्रं वपा सुषिरित्यमरः॥ स्रं ध्रे सुषिरं त्रिष्वि
ति च॥ सुषुस्यतीति सुषिरिति क्षीरस्वामी॥ गर्त्ते गर्त्तान्विते वाद्यविशेषे सुषिरं त्रिष्विति शाश्वतः॥ इति प्रयोजनप्रपंचः॥ इत्येवं विषयप्रयोजनयोर्भ
क्तयोः संबंधाधिकारिणावुक्तप्रायावेवेति पृथङ्नोक्तौ॥ इह येन प्रयोजनं पृष्टं ततोन्य एव तटस्थ इत्यं प्रत्यवतिष्ठते॥ ननु यथा अधीष्वेत्याचार्येणो
क्ते प्रयोजनप्रश्नमकृत्वैव वेदमधीयते॥ न ह्यदंगभूतं व्याकरणमप्यध्येष्यंते॥ तत्किं प्रयोजनवर्णनक्लेशेनेति॥ अत्रेदमुत्तरं॥ प्रायेणेदानींतना
नामल्पायुष्कत्वाद्धि प्रबहुलत्वाच्च प्रधानभूतो वेदस्तावत्पाठ्यते॥ तदध्ययनकाले च बाल्यात्प्रयोजनादिकं प्रष्टुमसमर्थाः शिष्या गुरुणा उप
दिश्यमानं वेदं गृण्हंतीति युक्तं॥ ततो गृहीतवेदाः प्रौढिमापन्ना विवाहार्थं त्वरमाणा व्याकरणाध्ययनाय गुरुणा प्रेर्यमाणा अपि न सहसा प्रवर्त्तंते॥
वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः॥ अनर्थकं व्याकरणं इति प्रत्यवतिष्ठंते॥ तान्प्रति युक्तमेव प्रयोजनादिवर्णनं॥ पूर्वकल्पेषु व्याक शा॰
रणशिक्षादीनि लक्षणानि प्रथमं पाठयित्वा तत्तल्लक्षणानुसंधानपूर्वकं लक्ष्यभूतं वेदं ग्राहयंतः स्थिताः॥ तदापरं बाल्यावस्थायां व्याकरणपाठात्प्रयो १०

जनप्रश्नविरहे तत्प्रतिपादनमपि न कर्त्तव्यमेवेति ॥ यद्यपि श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ॥ युक्तश्छंदांस्यधीयीत मासान्विप्रोर्द्धपंचमा-
न् ॥ ततः परं तु छंदांसि शुक्लेषु नियतः पठेत् ॥ वेदांगानि रहस्यं च कृष्णपक्षेषु संपठेदिति मनुवचनस्य इतऊर्ध्वमनध्यायेष्वंगान्यधीयीतेत्यादिस्मृ-
त्यंतराणां च पर्यालोचनया वेदवेदांगाध्ययनसमकालता लभ्यते ॥ तथापि ऋषिवचनत्वाविशेषाद्भाष्यकारोक्तेर्मानवादेश्च व्रीहियववद्विकल्प
एवेति तत्त्वं ॥ तदेवमनुबंधचतुष्टयस्य सुस्थत्वात्साधुशब्दव्युत्पादनं कर्त्तव्यमिति स्थितम् ॥ ननु किमिदं साधुत्वं ॥ साधयति बोधयतीति साधुरि-
ति व्युत्पत्त्या बोधकत्वं तदिति चेन्न ॥ गाव्यादावपि तत्सत्वात् शक्तत्वं तदिति चेन्न ॥ पचतीत्यादौ विकरणानामसाधुतापत्तेः ॥ तेषामनर्थकत्वा-
त् ॥ हुपचष्लदृड्त्यादीनां साधुतापत्तेश्च ॥ लाक्षणिकेष्वव्याप्तेश्च ॥ तेषामपि लक्ष्यार्थे शक्तेः ॥ क्वचिच्छक्ततायास्तु अश्वादिष्वतिप्रसक्तेः
॥ वृत्तिमत्त्वं तदिति चेत् ॥ न ॥ द्योतकेषु निपातेष्वव्याप्तेः ॥ औपसंदानिकी शक्तिरेव द्योतनेति चेत् ॥ न ॥ प्रोत्तरजित्व घोत्तरटत्वयोरविशेषेण विनि-
गमनाविरहाच्छक्ततापत्तौ व्यासज्यवृत्तिशक्तेर्विश्रांतेः ॥ ततश्च अदृहूर्वञ्चनाद्यव्यवस्थापत्तिः ॥ नच जातिविशेष एव साधुतेति वाच्यं ॥ क-
त्वादिना संकरापत्तेरिति ॥ अत्राहुः ॥ अनपभ्रष्टतानादिर्यद्वाभ्युदययोग्यता ॥ व्यक्तिप्रव्यंजनीया वा जातिः कापीह साधुतेति ॥ अस्यार्थः ॥ शक्तिवैकल्यादि-
प्रयुक्तमन्यथोच्चारणमपभ्रष्टमतद्विरहोऽनपभ्रष्टता ॥ ॥ सैव साधुता सा चार्थविशेषांतर्भावेणैव ॥ तथाहि ॥ यमर्थं शक्त्या लक्षणया वा बोधयितुं द्यो-
तयितुं वा यादृक्शब्दोनादिः प्रयुक्तस्तस्मिन्नर्थे दोषादन्यथात्वं प्राप्तः सोऽसाधुः ॥ अन्यथा तु साधुरिति ॥ येऽपि गाव्यादिष्वेव प्रथमं व्युत्पन्नाः संत-
स्तान्प्रयुंजते तेषामप्यन्यथोच्चारणमस्त्येव ॥ तत्र च दोषप्रयोज्यता नास्त्येव ॥ मूलप्रयोक्तुर्भ्रमाद्यन्यतमत्वात् ॥ यद्वा ॥ अनादिना साधुता ॥ अना-
दिरिति तु श्लोके भावप्रधानो निर्देशः ॥ आदेरभावो नादिरिति वा ॥ असंदेह इतिवत्तत्पुरुषः ॥ अभ्युदययोग्यता वास्तु साधुता ॥ एवं तत्त्व व-

श·कौ· च्छास्त्रपरिशीलनशालिभिर्गम्यो जातिविशेषो वेति॥ यत्तु जातिसंकर इत्युक्तं मंडने॥ गुणगतजातौ तस्यादोषत्वात्॥ तथाहि॥ यस्य देवदत्तादेरनो
११ ष्ठ्या वर्णा एव पूर्वं श्रुतास्तस्य कुड्यादिव्यवहितस्य ओष्ठ्यवर्णेषु श्रुतेषु यदनुमानं जायते तदोष्ठ्यानोष्ठ्यसाधारणतदनुमापकजात्यंगीकारे
सत्येव घटते॥ न तु तत्तद्व्याप्यनानाजातिस्वीकारे॥ ओष्ठ्यवर्णवृत्त्यसाधारणजातेः प्रागगृहीतत्वेनानुमितिसामग्रीवैकल्यात्॥ वस्तुतस्तु उ
पाधिसंकरवदेव जातिसंकरोपि सर्वत्रास्तु॥ दूषकताबीजानिरुक्तेः॥ विनिगमकाभावेन भूतत्वमूर्त्तत्वयोरिव शरीरत्वपृथिवीत्वयोर्द्वयो
रपि जातित्वभंगापत्तेश्च॥ तस्माच्चतुर्विधमपि साधुत्वं निर्दोषं॥ व्याकरणैकगम्यं च॥ एवमसाधुत्वमपि चतुर्द्धा॥ अपभ्रष्टता॥ सादिता॥ प्र
त्यवाययोग्यता॥ तदवच्छेदकजातिविशेषो वेति॥ टिघुभादिसंज्ञासु यद्यपि पुण्यपापजनकतारूपे साधुत्वासाधुत्वे न स्तस्तथापि अनप
भ्रष्टत्वरूपं साधुत्वमस्त्येव॥ तदेवानुशासनप्रवृत्तावुपयोगि॥ भस्येत्यादिसौत्रनिर्देशात् कुत्त्वे कस्मान्न भवतीत्यादिभाष्याच्चेत्याहुः॥ ए
वं चानादित्वमभ्युदययोग्यत्वं वा अनपभ्रष्टतामात्रेण न सिध्यति॥ किंतु पौरुषेयसंकेतविरहविशिष्टेनेत्यवधेयं॥ तदेतदुक्तं॥ यास्त्वेताः स्वे
च्छया संज्ञाः क्रियंते टिघुभादयः॥ कथं नु तासां साधुत्वं नैव ताः साधवो मताः॥ अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता॥ हस्तचेष्टा यथा लो
के तथा संकेतिता इमाः॥ ततश्च॥ नासां प्रयोगेभ्युदयः प्रत्यवायोपि वा भवेत्॥ लाघवेनार्थबोधार्थं प्रयुज्यंते तु केवलमिति॥ तदयं निर्गलितो
र्थः॥ यास्त्वेताः स्वेच्छया संज्ञाः क्रियंत इति पक्षे अनिदंप्रथमाः शब्दाः साधवः परिकीर्त्तिताः॥ त एव शक्तिवैकल्यप्रमादालसतादिभिः॥
अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिता इति च साध्वसाधुलक्षणे आश्रीयमाणे टिघुभादीनां साध्वसाधुबहिर्भावः स्पष्ट एव॥ तेषाम राम
प्यनादितेति पक्षे तु चतुर्विधापि प्रसक्तासाधुतास्त्येव॥ उक्तं च॥ व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्॥ नित्य एव तु संबंधो ११

डित्यादिषु गवादिवत्॥ रूढ्यादीनां च शास्त्रेऽस्मिन्नुक्त्वा वच्छेद लक्षणः॥ अकृत्रिमाभिसंबंधविशेषणविशेष्यभावे॥ नविषयतानिर्विवादेति॥ नामकरणे त्वयं विशेषः॥ कृतं कुर्यान्नतद्धितमित्यादिगृह्यसूत्राविरोधिनामेव साधुता॥ नहि शोधिनां तु देशभाषानुसारेण क्रियमाणानां कूचीमंचीत्यादिनामधेयानामसाधुत्वमेव॥ नदेतदृलकृसूत्रे वार्तिकव्याख्यावसरे स्फुटीकरिष्यते॥ इति साधुत्वनिर्वचनं॥ व्युत्पादनं च प्रकृतिप्रत्ययादिकल्पनया उत्सर्गापवादरूपलक्षणैरेव॥ नतु साध्वसाध्वोर्वा अन्यतरस्य वा प्रतिपदपाठेन॥ शब्दानामानंत्येन तदसंभवादित्युक्तं॥ स्यादेतत्॥ लक्षणप्रणयनमपि किं जातिपक्षमाश्रित्य उत व्यक्तिपक्षं आद्ये सकृत्प्रवृत्तौ यद्बाधितं तद्बाधितमेवेति न सिध्येत्॥ तथाहि॥ जातौ पदार्थे द्वयोर्विध्योः परस्परपरिहारेण न तज्जात्याक्रांतव्यक्तिविशेषे चरितार्थयोः क्वचिदेकत्र प्रसंगे परस्परप्रतिबंधादप्रतिपत्तिरेव॥ स्यात् सस्थानिपक्षवत्॥ तथा च वक्ष्यति॥ अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वादिति॥ तत्र च विप्रतिषेधसूत्रं विध्यर्थे परं तावद्भवतीति॥ तस्मिंश्च कृते यदि पूर्वस्य निमित्तमस्ति तर्हि भवत्येव तत्॥ यथा भिंधकीत्यत्र भिन्दृहि इति स्थिते परत्वाद्धिभावे कृते पुनः प्रसंगविज्ञानादकज्भवति॥ तदेवं जातिपक्षे पुनः प्रसंगविज्ञानं यद्यपि सिध्यति तथापि सकृद्गताविति न सिध्यति॥ तथा च जुहुतात्त्वमित्यत्र जुहुहि इति स्थिते धिभावं बाधित्वा परत्वात्तातङि कृते स्थानिवद्भावेन स्यादेव धिः॥ व्यक्तिपक्षे तु सकलव्यक्त्युद्देश्यकस्य शास्त्रस्य व्यक्त्यंतरे चरितार्थत्वासंभवाद्विकल्पप्रसंगे नियमार्थं सूत्रं परमेव भवति॥ न तु पूर्वमिति॥ तथा चैतत्सूत्रबलेन तत्र पूर्वलक्षणस्य व्यक्त्यंतरमात्रविषयत्वं कल्प्यत इति एतद्व्यक्तिविषयकलक्षणाभावं प्रपंचयिष्यति॥ तथा च जुहुतात्त्वमित्यादेः सिद्धावपि भिंधकीत्यादि व्यक्तिपक्षे न सिध्यति॥ तस्मादशक्यमन्यतरपक्षाश्रयणेन लक्षणप्रणयनमिति चेत्॥ सत्यं॥ अत एव लक्ष्यानुरोधात्पक्षद्वयमप्या[श्रीयते]॥ क्वचित्कस्मिंश्चित्पदार्थे इति॥ तत्र जातिवादिनामयं भावः॥ लाघ

सि·कौ· वाज्जातिर्वाच्या॥व्यक्तौनामानंत्येनतासांवाच्यत्वेगौरवं॥वाहदोहाद्यन्वयस्तुलक्षितायांव्यक्ताविति॥व्यक्तिवादिनस्त्वाहुः॥अनुपपत्तिंविना
१२ पिव्यक्तिप्रतीतेरनुभवसिद्धतयाव्यक्तिरेववाच्या॥त्वप्रत्ययादिकंविनाजातेःप्राधान्येनाप्रतीतेश्च॥वाहाद्यन्वयोप्येवंसमंजसः॥यत्तूक्तंव्यक्ती
नामानंत्यमिति॥नैतद्बाधकं॥शक्यतावच्छेदिकायाजातेरैक्यात्॥नन्वेवंजातेरपिवाच्यत्वमापाद्यमितिचेन्न॥अकार्यत्वेपिकार्यतावच्छेदकं
त्ववदशक्यत्वेपिशक्यतावच्छेदकत्वसंभवात्॥अतएवलक्ष्यतावच्छेदकेलक्षणानेतिनैयायिकाभ्युपगमः॥तस्माज्जातिरुपलक्षणंव्यक्तिमात्रंतु
वाच्यमिति॥यत्तुसरूपसूत्रेभाष्येवक्ष्यते॥नह्याकृतिपदार्थकस्यद्रव्यंनपदार्थइत्यादि॥तत्तुजातिव्यक्त्योरन्यतरेणविशिष्टस्यापरस्यवाच्यत्वेत्येवंरूपंमतांत
रं॥तथाचाकृत्यधिकरणेभट्टैरुक्तं॥नियोगेनविकल्पेनद्वेवासहसमुच्चिते॥संबंधःसमुदायोवाविशिष्टावैकयेतरेति॥तत्रजातिरेवव्यक्तिरेववावा
च्येतिद्वयंमतद्वयंनियोगेनेत्यनेनोपनिबद्धं॥चतुर्थचरणेनतुसरूपसूत्रोक्तंमतद्वयमुपनिबद्धमितिविवेकः॥यद्यपिजातिव्यक्तिपक्षयो
रन्यतरस्यन्यायेनबाधआवश्यकस्तथापीहशास्त्रेसंज्ञापरिभाषादिवल्लक्ष्यसिद्ध्युपायतयाउभयाश्रयणेकिमपिबाधकंनास्तीत्यवधेयम्॥
वस्तुतस्तु॥भट्टोक्ताष्टपक्षीमध्येविकल्पेनेतितृतीयःपक्षोत्रप्रक्रियादशायांस्थितः॥विकल्पश्चलक्ष्यानुरोधाद्व्यवस्थितोनत्वैच्छिकइत्यन्यदे
तत्॥समुच्चयपक्षंचतुर्थमाश्रित्यापिक्वचित्कस्यचिद्विवक्षाअपरस्यत्वविवक्षेतिगृहीत्वाप्रक्रियानिर्वाहःसुकरइतिदिक्॥यदिहिव्यक्तिरे
वेत्येतत्सार्वत्रिकमभिमतंस्यात्तर्हिजात्याख्यायामितिसूत्रंनारभेत॥यदिचजातिरेवेतितर्हिसरूपसूत्रंनारभेतेतिभाष्यं॥ननुयस्मिन्वने
एकएवाम्रवृक्षस्तत्रापिलक्षणयाजातिपरत्वेइहआम्राःसंतीतिप्रयोगंसाधयितुंजात्याख्यायामितिसूत्रमस्तु॥तथाजातिपक्षेपिनानार्था राम·
नुरोधात्सरूपसूत्रमस्तु॥वक्ष्यतिहिवार्त्तिककृत्॥व्यर्थेषुचमुक्तसंशयमिति॥सत्यं॥लक्ष्यानुरोधएवपक्षद्वयाश्रयेशरणं॥अतएवो १२

दात्तत सूत्रयोर्भाष्यकृता प्रत्याख्यास्यमानत्वेप्यदोषः ॥ इदानीं वार्तिककारः शास्त्रस्य नियमविधिरूपतया सार्थक्यमाह ॥ सिद्धे शब्दार्थसंबंधे
लोकतोर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु ॥ लोकादेव हि प्रथममव्युत्पत्तिः ॥ अव्युत्पन्नं प्रति व्याकरणादीनामप्रवृत्तेः
अर्थवदधातुरित्यादि हि व्याकरणं शक्तिग्रहोपजीवकं ॥ तथा च समर्थसूत्रेपि वार्त्तिकं ॥ अर्थानादेशनादिति ॥ अनेकमन्यपदार्थ इत्यादिकं हि
लोकसिद्धमर्थमनूद्य साधुत्वान्वाख्यानपरं ॥ ततश्च लोकादेव शब्दे अर्थे तयोः संबंधे च सिद्धे अर्थबोधनाय शब्दप्रयोगे पि प्रसक्ते गवादय एव
प्रयोक्तव्या न तु गाव्यादय इति नियमार्थं शास्त्रं ॥ नियमफलं तु धर्मः ॥ तत्र स्मार्त्तो दृष्टांतः ॥ प्राङ्मुखोन्नानि भुंजीतेत्यादि लौकिकशब्दे नोक्तः
॥ व्रीहीनवहंतीत्यादिश्च वैदिकशब्दे नोक्तः ॥ धर्मनियम इति च षष्ठीतत्पुरुषः ॥ अश्वघासादिवत् ॥ न तु चतुर्थीतत्पुरुषः ॥ प्रकृतिविकृति
भावविरहात् ॥ ननु यदि प्रयुक्तानामिदमन्वाख्यानं तर्हि किमर्थमप्रयुक्ता अपि ऊषतेरचक्रपेचेत्यादयो व्युत्पाद्यंत इति चेन्न ॥ आर्षज्ञानं वि
ना अप्रयुक्ततायाः दुरवधारणत्वात् ॥ महान् हि प्रयोगविषयः ॥ तथा च भाष्यं ॥ सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः सांगाः सरहस्याः
बहुधा भिन्नाः एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः वाकोवाक्यमितिहासः पुराणं वै
द्यकमित्येतावान् प्रयोगस्य विषय इति ॥ बह्वृचानामाम्नायो वा बाह्वृच्यं ॥ छंदोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य इति ञ्यप्रत्ययः ॥ चरणाद्धर्मा
म्नाययोरित्युक्तत्वादाम्नाये ॥ अथर्वणा प्रोक्तो वेदो अथर्वा उपचारात्तद्योग इत्येके ॥ वसंतादिषु अथर्वन् आथर्वण इत्युभयोः पाठसामर्थ्यात्प्रो
क्तप्रत्ययस्य वैकल्पिको लुगिति तु तत्त्वं ॥ अत एव भाष्ये वक्ष्यते ॥ तेन प्रोक्तमिति प्रकृत्य ऋषिभ्यो लुग्वक्तव्यः ॥ वसिष्ठोनुवाकः ॥ ततो वक्त
व्यमथर्वणो वेति ॥ तमधीते आथर्वणिकः वसंतादित्वाट्ठक् ॥ दांडिनायनादि सूत्रे निपातनाट्टिलोपाभावः ॥ आथर्वणिकस्याम्नायः आथ

शा·कौ र्वणः आथर्वणिकस्येकलोपश्चेति आथर्वणिकादण् तत्सन्नियोगेन कलोपश्च ॥ प्रकृतमनुसरामः ॥ एतावंतं प्रयोगविषयं पर्यालोचयितुम
१३ शक्यैरप्यस्मदादिभिर्लक्षणानुगतानां प्रयोगोऽस्तीत्यनुमेयं ॥ अस्ति च त्वयोदात्तनामपि वेदे प्रयोगः ॥ समास्थे रेवती रेवदूष ॥ यन्मे नरः
श्रुत्यं ब्रह्म चक्र यच्चानश्चक्रा जरसं तनूनामिति ॥ ननु यदि लक्षणे नानादिता सिद्धिस्तर्हि वचनं त्वादीनामपि स्यादिति चेत् न ॥ नहि वचिरंति
परः प्रयुज्यत इत्यभियुक्तानामविगीतव्यवहारेण सामान्यशास्त्रस्य संकोचात् ॥ अभ्युपगतो हि विशेषविषयिण्या पतितस्य कर्मानधि
कारस्मृत्या अग्निहोत्रादिश्रुतीनां संकोचः विशेषविषयेण शिष्टाचारेण सामान्यस्मृतेः संकोचश्च ॥ तदुक्तं आनर्थक्यप्रतिहतानां विपरीतं
बलाबलमिति ॥ यत्र तु अप्रयोगः संदिग्धः शास्त्रानुगमश्च तत्र निष्प्रत्यूहमनुमानं ॥ तदुक्तं ॥ यथा लक्षणमप्रयुक्ते इति ॥ अप्रयुक्ते अनि
श्चितप्रयोगे इत्यर्थः ॥ निश्चिताप्रयोगे तु लक्षणं न प्रवर्त्तत एवेति निष्कर्षः ॥ नचैवं ब्राह्मणो ब्रवणादिति कल्पसूत्रप्रयोगरूपेणापि विशेष
विषयं काचारेण ब्रुवो वचिरित्यादीनां संकोचापत्तिः ॥ त्रिशंकाद्यपाज्ययाजनेनापि स्मृतिसंकोचापत्तेस्तुल्यत्वात् ॥ तत्र धर्मबुध्यानुष्ठानं
नास्तीति चेत् ॥ इहापि साधुत्वबुध्या प्रयोगो नास्तीति तुल्यम् ॥ यर्वाणस्तर्वाण इतिवदभियुक्तानामपि असाधुप्रयोगस्य क्रतौ बर्हिरूपप-
त्तेश्च ॥ अत एवेतिहासपुराणादिष्वपशब्दा अपि संतीति हरदत्तः ॥ नदीसंज्ञासूत्रे भाष्येपि स्पष्टमेतत् ॥ केचित्तु आर्षग्रंथेष्वपि छंदसि विहि
तस्य व्यत्ययस्य प्रवृत्त्या साधुतां समर्थयंते ॥ नच गौणमुख्यन्यायेन मुख्ये छंदस्येव तत्प्रवृत्तिः ॥ स्वरितत्वप्रतिज्ञया तद्बाधात् ॥ वक्ष्यति
हि स्वरितेनाधिकार इति सूत्रे विशेषायाधिकं कार्यमिति ॥ गौणमुख्यन्यायो हि स्वरितत्वप्रतिज्ञास्थले न प्रवर्त्तत इत्यर्थः ॥ उपपादयि- राम
ष्यते चेदं ॥ अत एवार्षत्वात्साधुतेति तत्र तत्रोद्घोषः संगच्छत इति दिक् ॥ यद्यपि असमाप्तांशपूरणफलको नियमविधिः ॥ इतरव्यावृत्तिफ १३

लकस्तु नित्यप्राप्तिविषयकः परिसंख्या विधिरिति पूर्वोत्तरमीमांसयोर्व्यवहारस्तथापीहशास्त्रेपरिसंख्यापिनियमशब्देनव्यवह्रियत॥तन्न
पंचपंचनखा भक्ष्या इत्यस्यनियमोदाहरणतयाउपन्यासोनविरुद्धः॥नचासौमीमांसकरीत्यापिनियमोभवत्विति वाच्यं॥पंचातिरिक्त
भक्षणेप्रायश्चित्तविधेरसंगतत्वापत्तेः॥पंचानामभक्षणेप्रायश्चित्तापत्तौ गृहेपिनिवसन्विप्रोमुनिर्मांसविवर्जनादित्यादिस्मृतिव्या
कोपाच्च॥अतएवत्रिदोषापिपरिसंख्यैवतत्राश्रितेतिदिक्॥अत्रेदमवधेयं॥नियमातिक्रमेकृतेनअपूर्वंपरंनभवति॥दृष्टस्त्वर्थावबो
धोभवत्येव॥अवहननातिक्रमेपिवैतुष्यवत्दिगंतराभिमुखभोजनेतृप्तिवच्च॥नचापभ्रंशानामवाचकतयाकथमर्थावबोधकतेति
वाच्यम्॥शक्तिभ्रमवतांबाधकाभावात्॥विशेषदर्शिनस्तुद्विविधाः॥तत्तद्वाचकसंस्कृतविशेषज्ञानवंतस्तद्विकलाश्च॥तत्रआद्यानां
साधुस्मरणद्वाराअर्थबोधः॥द्वितीयानांतुबोध्यार्थसंबद्धार्थांतरवाचकस्यस्मृतौसत्यांततोलक्षणयाबोधः॥सर्वनामस्मृतेर्वा॥तदर्थ
ज्ञापकत्वेनरूपेणसाधुस्मृतेर्वा॥ ———————————— ॥अर्थाध्याहारपक्षाश्रयणाद्वेतियथायथंबोध्यम्॥अपरेत्वाहुः
अपभ्रंशाअपिवाचकाएव॥तथाहि॥अस्मात्पदादयमर्थोबोद्धव्यइतिईश्वरेच्छाशक्तिरितिमतेभगवदिच्छायाःसन्मात्रविषयकत्वाद
पभ्रंशेस्तुबोधजननस्यशक्तिभ्रमदशायांतेनाप्यभ्युपगमाद्दुर्वाराशक्तिः॥पदार्थांतरंतदितिमतेपिकल्पकंसाध्वसाध्वोस्तुल्यमेव॥
असाधुस्मारणद्वारासाधुर्बोधकइतिवैपरीत्यस्यापत्तेश्च॥स्वीकृतंहिपरेणतिबादिस्मारितानांलादीनामसाधूनामपिबोधकत्वं॥न
नुसाधूनामल्पत्वात्तत्रैवलाघवाच्छक्तिःकल्प्यतइतिचेत्॥नवयमपूर्वंकिंचित्कल्पयामः॥किंतुयथाघटजननसामर्थ्यमेवदंडादेः
शक्तिः तथाघटबोधजननसामर्थ्यमेवघटादिपदानांशक्तिः॥साचकाप्यात्वापरपर्याया शक्तिभ्रमाद्बोधंवदतात्वयाप्यभ्युपेतैव॥श

र्वणः आथर्वणिकस्येकलोपश्चेति आर्थ्वणिकाद्ण् तत्सन्नियोगेन कलोपश्च ॥ प्रकृतमनुसरामः ॥ एतावंतं प्रयोगविषयं पर्यालोचयितुम
शक्तैरप्यस्मदादिभिर्लक्षणानुगतानां प्रयोगोस्तीत्यनुमेयं ॥ अस्ति च त्वयोदात्तानामपि वेदे प्रयोगः ॥ स मास्त्वे रेवती रेवदूष ॥ यन्मेनरः
श्रुत्यं ब्रह्मचक्र यन्मानस्वक्राजरसंतनूनामिति ॥ ननु यदि लक्षणे नानादिता सिद्धिस्तर्हि वचंत्यादीनामपि स्यादिति चेत् न ॥ नहि वचिरंति
परः प्रयुज्यत इत्यभियुक्तानामविगीतव्यवहारेण सामान्यशास्त्रस्य संकोचात् ॥ अभ्युपगतो हि विशेषविषयिण्या पतितस्य कर्मानधि॰
कारस्मृत्या अग्निहोत्रादिश्रुतीनां संकोचः विशेषविषयेण शिष्टाचारेण सामान्यस्मृतेः संकोचश्च ॥ तदुक्तं आनर्थक्यप्रतिहतानां विपरीतं
बलाबलमिति ॥ यत्र तु अप्रयोगः संदिग्धः शास्त्रानुगमश्च तत्र निष्प्रत्यूहमनुमानं ॥ तदुक्तं ॥ यथालक्षणमप्रयुक्ते इति ॥ अप्रयुक्ते अनि॰
श्चितप्रयोगे इत्यर्थः ॥ निश्चितप्रयोगे तु लक्षणं न प्रवर्त्तत एवेति निष्कर्षः ॥ नन्वेवं ब्राह्मणो ब्रवणादिति कल्पसूत्रप्रयोगरूपेणापि विशेष॰
विषयं काचारेण ब्रुवो वचिरित्यादीनां संकोचापत्तिः ॥ त्रिशंक्वाद्ययाज्ययाजनेनापि स्मृतिसंकोचापत्तेस्तत्तुल्यत्वात् ॥ तत्र धर्मबुध्यानुष्ठानं
नास्तीति चेत् ॥ इहापि साधुत्वबुध्या प्रयोगो नास्तीति तुल्यम् ॥ यर्वाणस्तर्वाण इति वदभियुक्तानामपि असाधुप्रयोगस्य क्रतोर्बहिरूपप॰
नेश्च ॥ अत एवेतिहासपुराणादिष्वपशब्दा अपि संतीति हरदत्तः ॥ नदीसंज्ञासूत्रे भाष्येपि स्पष्टमेतत् ॥ केचित्तु आर्षग्रंथेष्वपि छंदसि विहि॰
तस्य व्यत्ययस्य प्रवृत्त्या साधुतां समर्थयंते ॥ न च गौणमुख्यन्यायेन मुख्ये छंदस्येव तत्प्रवृत्तिः ॥ स्वरितत्वप्रतिज्ञापातह्लाधात् ॥ वक्ष्यति
हि स्वरितेनाधिकार इति सूत्रे विशेषायाधिकं कार्यमिति ॥ गौणमुख्यन्यायो हि स्वरितत्वप्रतिज्ञास्थलेन प्रवर्त्तत इत्यर्थः ॥ उपपादयि॰
ष्यते चेदं ॥ अत एवार्षत्वात्साधुतेति तत्र तत्रोद्घोषः संगच्छत इति दिक् ॥ यद्यपि असमासांशपूरणफलको नियमविधिः ॥ इतरव्यावृत्तिफ

ल्कस्तु नित्यशक्तिविषयकः परिसंख्याविधिरिति पूर्वोत्तरमीमांसयोर्व्यवहारस्तथापीह शास्त्रे परिसंख्यापि नियमशब्देन व्यवह्रियते॥ तेन
पंच पंचनखा भक्ष्या इत्यस्य [illegible] दाहरणतयाउपन्यासो न विरुद्धः॥ न चासौ मीमांसकरीत्यापि नियमो भवत्विति वाच्यं॥ पंचातिरिक्त
भक्षणे प्रायश्चित्तविधेरसंगतत्वापत्तेः॥ पंचानामभक्षणे प्रायश्चित्तापत्तौ गृहेपि निवसन् विप्रो मुनिर्मांसविवर्जनादित्यादिस्मृतिव्या
कोपाच्च॥ अत एव त्रिदोषापि परिसंख्यैव तत्राश्रितेति दिक्॥ अत्रेदमवधेयं॥ नियमातिक्रमे कृते न अपूर्वं परं न भवति॥ दृष्टस्त्वर्थावबो
धो भवत्येव॥ अवहननातिक्रमेपि वैतुष्यवत् दिगंतराभिमुखभोजने तृप्तिवच्च॥ न चापभ्रंशानाम वाचकतया कथमर्थावबोधकतेति
वाच्यम्॥ शक्तिभ्रमवतां बाधकाभावात्॥ विशेषदर्शिनस्तु द्विविधाः॥ तत्तद्वाचकसंस्कृतविशेषज्ञानवंतस्तद्विकलाश्च॥ तत्र आद्यानां
साधुस्मरणद्वारा अर्थबोधः॥ द्वितीयानां तु बोध्यार्थसंबद्धार्थान्तरवाचकस्य स्मृतौ सत्यां ततो लक्षणया बोधः॥ सर्वनामस्मृतेर्वा॥ तदर्थ
ज्ञापकत्वेन रूपेण साधुस्मृतेर्वा॥ ———— ॥ अर्थाध्याहारपक्षाश्रयणाद्धेति यथायथं बोध्यम्॥ अपरे त्वाहुः
अपभ्रंशा अपि वाचका एव॥ तथाहि॥ अस्मात्पदादयमर्थो बोद्धव्य इति ईश्वरेच्छा शक्तिरिति मते भगवदिच्छायाः सन्मात्रविषयकत्वाद
पभ्रंशेस्तु बोधजननस्य शक्तिभ्रमदशायां तेनाप्यभ्युपगमाद् दुर्वारा शक्तिः॥ पदार्थांतरं तदिति मतेपि कल्पकं साध्वसाध्वोस्तुल्यमेव॥
असाधुस्मारणद्वारा साधुर्बोधक इति वैपरीत्यस्यापत्तेश्च॥ स्वीकृतं हि परेणतिबादिस्मारितानां लकाराणामसाधूनामपि बोधकत्वं॥ न
तु साधूनामल्पत्वात्तत्रैव लाघवाच्छक्तिः कल्प्यत इति चेत्॥ न वयमपूर्वं किंचित्कल्पयामः॥ किंतु यथा घटजननसामर्थ्यमेव दंडादेः
शक्तिः तथा घटबोधजननसामर्थ्यमेव घटादिपदानां शक्तिः॥ सा च कापभ्रंशात्वा परपर्याया शक्तिभ्रमाद्बोधं वदतां त्वयाप्यभ्युपेतैव॥ शा

त्किग्रहस्यभ्रमत्वं परंत्यज्यतां विषयाबाधादितिब्रूमः ॥ नन्वेवं गौणमुख्यविभागोच्छेदः सर्वे सर्वस्य वाचका इति पर्यवसानादिति चेत् ॥
त्वत्पक्षेपीश्वरेच्छाया गौणादावति प्रसंगस्य तुल्यत्वात् ॥ सुहृद्भावेन पृच्छामीति चेत् ॥ प्रचुरतरप्रयोगतदितराभ्यां गौणमुख्यविभाग इ-
ति गृहाण ॥ ननु जनकत्वेनागृहीतादपि तर्हि कारणात्कार्योदयः स्यादेवेति चेत् ॥ पदार्थस्मृतिरापाद्यते वाक्यार्थबोधो वा ॥ नाद्यः ॥ संबं-
धग्रहं विना तदयोगात् ॥ नांत्यः ॥ द्वाराभावात् ॥ पदार्थस्मरणं हि द्वारं ॥ एवं च महदेव लाघवं ॥ साधुस्मारणकल्पनाक्लेशश्च न भवतीति ॥
साधुत्वं तु जातिविशेषात्मकमित्युक्तमेव ॥ समानायामर्थावगतौ शब्दैश्चापशब्दैश्चेति भाष्यमप्येतत्संपातीति दिक् ॥ इति अपशब्दा-
नां वाचकत्वावाचकत्वविचारः ॥ प्रयोगशब्दमुपाददानो वार्त्तिककारः प्रयोगाद्धर्मो न तु ज्ञानमात्रादिति सूचयति ॥ युक्तं चैतत् ॥ एकः शब्दः
सम्यग्ज्ञातः सुप्रयुक्त इत्यत्र ज्ञानप्रयोगयोरुपादानस्याविशेषेपि प्रतिपत्राधिकरणन्यायेन यदैकस्मादपूर्वं तदेतरत्तदर्थमिति प्रयोगात्फ-
लं ज्ञानं तु तदंगमित्यभ्युपगमात् ॥ प्रयोगस्य फलप्रतिसंनिहितत्वाच्च ॥ ज्ञानस्य तु व्यवहितत्वात् ॥ ज्ञानस्य प्रयोगांगतायां दृष्टार्थता-
लाभाच्च ॥ उक्तं च भट्टैः ॥ सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ॥ परांगं चात्मविज्ञानादन्यत्रेत्यवधार्यतामिति ॥ अत एव तरति ब्रह्मह-
त्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेत्यादिष्वपि ज्ञानपूर्वकानुष्ठानात्फलमित्येव सिद्धांतः ॥ तदुक्तं वार्तिककृता ॥ तत्तुल्यं वेदशब्दे-
नेति ॥ वेदः शब्दो विधायको यस्यार्थस्य अश्वमेधादेस्तेनेदं तुल्यमित्यर्थः ॥ तेन वैदिकशब्दानामपि पक्षकोटिप्रविष्टतया दृष्टांतासंग-
तिरिति नाशंकनीयं ॥ तेसुरा इति पूर्वोदाहृतश्रुतिरपि अपशब्दप्रयोगात्प्रत्यवायं बोधयंती साधुप्रयोगाद्धर्मं गमयति ॥ वाजसनेयि-
नां ब्राह्मणे तस्मादेषा व्याकृता वागुद्यत इति श्रुतिरप्येवं ॥ भाष्ये तु अभ्युपेत्यवादेन साधुज्ञानात्फलमित्ययमपि पक्षः समर्थितः ॥ न

चैवं अपशब्दज्ञानाद्धर्मोऽपि स्यादिति वाच्यं॥ यावद्वचनं वाचनिकमित्यभ्युपगमात्॥ नम्लेच्छितवा इत्यादिना असाधुप्रयोगस्यैव निषेधा
त्॥ नच व्याकरणाध्ययने प्रवृत्तस्य परिनिष्ठितपचत्यादिबोधार्थं डुपचष्प्रभृतीनां प्रयोगोऽप्यावश्यक एवेति वाच्यम्॥ तदीयज्ञानमात्रेण
निर्वाहात्॥ अतएवालौकिकं प्रक्रियावाक्यमूहमात्रस्य गोचर इति नित्यसमासेष्वस्वपदविग्रहाभ्युपगमः॥ अथ व्युत्पादनार्थं तत्प्रयो
ग आवश्यक इत्याग्रहस्तथापि न क्षतिः॥ अनपभ्रष्टत्वेन तेषां प्रत्यवायाजनकत्वात्॥ नन्वेते शक्तिवैकल्यादिप्रयुक्ताः येन गाव्यादिसाम्यं
भजेरन्॥ अथ प्रमादित्वादसाधुतेत्याग्रहस्तथापि न क्षतिः॥ शब्दस्वरूपपरत्वात्॥ अनुकरणानां सर्वत्र साधुताभ्युपगमात्॥ नहि हेलयो
हेलय इति श्रुतिपाठोऽपि प्रत्यवायजनकः॥ शब्दस्वरूपमात्रपरा एते भिन्ना एव साधवश्चेति तु तुल्यं॥ अतएव स्वाहेन्द्रशत्रुर्वर्धस्वेति श्रु
तावाद्युदात्तस्य पाठेऽपि तत्त्वात्याख्यस्यार्थपरस्य ऊहितस्यानाम्नानाद् मंत्रत याजपादिपर्युदासेन मंत्रे विधीयमाना एकश्रुतिर्न प्रसक्ते
तिप्रागुक्तं॥ अतएव साधुत्वासाधुत्वयोरेकस्मिन् सद्भावो अभावश्चेति विरुद्धस्य दुरुपपादतया अर्थभेदाच्छब्दभेद इति दर्शनं प्रवृत्तम्।
नच प्रकृतिवदनुकरणमित्यतिदेशेन अपशब्दानुकरणस्य असाधुताशंक्या॥ असाधूनां शास्त्रीयप्रकृतित्वाभावात्॥ असाधुत्वस्य शा
स्त्रीयकार्यित्वाभावाच्च॥ नह्यशास्त्रीयमप्यतिदिश्यत इति ऋलृक्सूत्रे भाष्ये स्फुटमेतत्॥ डुपचष्प्रभृतिप्रयोगादपशब्दज्ञानाद्वा प्रत्य
वायो नास्तीति प्रागुक्तरीत्या स्थितेऽपि अभ्युपेत्यापि प्रत्यवायं भाष्ये कूपखानकन्याय उदाहृतः॥ तथाहि॥ कूपं खनन् यद्यपि कर्दमेन लिप्य
ते एव तथापि ततो लब्धेन जलेन तं मलं दूरीकरोति फलांतरं च लभते तथेहापि परिनिष्ठितरूपज्ञानात्पूर्वोत्पन्नप्रत्यवायनिरासं फलांतरं च ल
भत इति॥ सोऽयं कूपखानकन्यायः॥ कूपं खनतीति विग्रहे कर्मण्यण् प्राप्ते वाऽसरूपन्यायेन ण्वुल्॥ नित्यसमासत्वाभावात्कूपस्य खानक इ

तिस्वपदविग्रहः॥ नचशिल्पिनिष्वुनासरूपेणण्वुलोबाधः स्यादितिवाच्यम्॥ इहसर्वैर्नकर्तृत्वमात्रस्यविवक्षया शिल्पित्वस्याविवक्षितत्वात्॥ तस्मान्सर्वथापिगाव्यादिप्रयोगे प्रत्यवायइतिस्थितं॥ तत्रेदंभाष्येसिद्धांतितम्॥ याज्ञेकर्मण्येवायं॥ नम्लेच्छितवाइत्यस्यक्रतुप्रकरणेपाठात्॥ क्रतुप्रयोगाद्बहिस्तु अपशब्दं प्रयुंजानोनदुष्यति॥ एवंहिश्रूयते॥ यर्वाणस्तर्वाणोनामऋषयोबभूवुः प्रत्यक्षधर्माणः परापरज्ञाइति॥ प्रत्यक्षधर्माणोयोगजधर्मबलेनसाक्षात्कृतधर्माः॥ अत्रापंक्तेराशयः॥ योगिनएतेविरक्त्यतिशयाल्लौकिकेष्वर्थेष्वाग्रहविरहेणयथातथास्माकंभवत्वितिविवक्षवोयद्वानस्तद्वानइतिवक्तव्येयर्वाणस्तर्वाण इत्यूचुः॥ याज्ञेकर्मणिपुनः साधूनेवप्रयुक्तवंतः तेनयर्वाणस्तर्वाणइत्येवंरूपमेवसंज्ञांमुनयोलेभिरइति॥ भट्टाश्चाहुः॥ स्त्र्युपायमांसभक्षादिः पुरुषार्थमपिश्रितः॥ प्रतिषेधः क्रतोरंगमिष्टः प्रकरणाश्रयादिति॥ अपरेत्वाहुः॥ क्रतोर्बहिः प्रयोगेपिपुरुषः प्रत्यवैतीति॥ तेषामयमाशयः॥ नानृतंवदेदित्यनारभ्याधीतः पुरुषार्थोपिनिषेधस्तावदस्तीतिनिर्विवादं॥ तत्रनिषेध्यमनृतंद्विधा॥ शाब्दानृतमर्थानृतंचेति॥ शब्दस्यार्थस्यवाविपरीतप्रतिपत्तिहेतुभूतमुच्चारणमनृतवदनं॥ एवंचयथाअर्थानृतंवदतःप्रत्यवायस्तथाशाब्दानृतमपीतितुल्यं॥ क्रतुमध्येपुनरपभाषणेपुरुषोपिप्रत्यवैतिक्रतुरपिविगुणइतिवचनद्वयबलात्सिध्यतीतिदिक्॥ यथाचप्रयोगेसाधूनांनियमस्तथासाधुत्वज्ञानेपिव्याकरणस्यनियमएवेत्यवधेयं॥ व्याकृतावागुद्यतइतिऋगुक्तश्रुतेः॥ व्याकृताव्याकरणसंस्कृतेतिहितदर्थः॥ व्याकरणशब्दश्चयोगरूढ्यालक्ष्यलक्षणसमुदायपरः सूत्रमात्रपरोवेतिपक्षद्वयमपिभाष्येस्थितम्॥ तत्राद्येपक्षेसूत्रमात्रमधीयानेवैयाकरणशब्दप्रयोगोभाक्तः समुदायवाचकाहिशब्दाः क्वचिदवयवेपिप्रयुज्यंते॥ यथापूर्वेपंचालाउत्तरेपंचालाइति॥ द्वितीयपक्षेतुव्याकरणस्यसूत्रमितिप्रयोगोराहोःशिरइतिवन्नेयः॥ अष्टाध्याय्याएकदेशःसूत्रमित्यवयवा

वयविभावेषष्ठीतिवास्तु॥अस्यवनस्यापरंरक्षइत्यादिवत्॥नचैवमपि सूत्रमात्राच्छब्दप्रतिपत्तौनियमानुपपत्तिः॥पदच्छेदविग्रहयोज
नादिभिः सूत्रार्थस्यैवाभिव्यंजनात्॥अतएवत्सुत्सूत्रमुच्यमानमप्युपेक्ष्यते॥यत्रैवतुसूत्रस्यतात्पर्यलेशोप्यस्ति तदेवतुगृह्यते॥तदुक्तं
॥सूत्रेष्वेवहितत्सर्वंयद्वृत्तौयच्चवार्त्तिकइति॥अतएवबहुलग्रहणादिकंसार्थकमितिदिक्॥नन्वेवंकिंवर्णोपदेशेन॥नहितद्बलेनकस्यचि
च्छब्दस्यसाधुत्वमवगम्यते॥नचकलध्मातादिदोषरहितवर्णस्वरूपप्रतिपत्तिरेवतत्फलमितिवाच्यम्॥लोकतएवाविप्लुतवर्णप्रतीते
रवश्यंवाच्यत्वात्॥अन्यथाप्लुतादिपाठस्यापीहकर्त्तव्यतापत्तेः॥तदुक्तं॥इष्टबुध्यर्थश्चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्यु
पदेशइति॥एकश्रुत्यासूत्रपाठादुदात्तादिस्वरत्रयस्यापिकर्त्तव्यःपाठइत्युक्तं॥त्रैस्वर्येणपाठेहिअन्यतमस्यउच्चारणादेवसिद्धौद्वयोरेव
कर्त्तव्यतांब्रूयात्॥अतएवचलोकेत्रैस्वर्यमेकश्रुत्यासहविकल्प्यतइतिज्ञाप्यते॥एतच्चविभाषाछंदसीत्यत्रस्फुटीकरिष्यामः॥ननुनिर्दे
शस्यजातिपरत्वात्प्लुतादिसंग्रहः सेत्स्यतीतिचेन्न॥संवृतकलप्रभृतीनामपिसंग्रहापत्तेः॥तदुक्तं॥आकृत्युपदेशात्सिद्धमितिचेत्सं
वृतादीनांप्रतिषेधइति॥तत्रह्रस्वस्यअवर्णस्यसंवृतगुणकत्वेपितदितरेषामचांसंवृतत्वंदोषः॥आदिशब्दात्कलः॥सचस्वोचितस्थान
भ्रष्टः॥तथाश्वासभूयिष्ठतयाह्रस्वोपिदीर्घवल्लक्ष्यमाणोध्मातः॥एवंदीर्घोपिह्रस्ववत्कालसंकोचेनोच्यमानोर्धकः॥एवंकरणादिभ्रंशाद
पिबहवोदोषाःशिक्षाप्रातिशाख्यादिषुप्रसिद्धाः॥तन्नद्दोषविशिष्टानामपिअत्वादिजात्याक्रांतत्वाज्जातिपरनिर्देशपक्षेतेष्वतिव्याप्ति
रितिस्थितम्॥नचगर्गादिबिदादिपाठस्यतंत्रेणोभयार्थतयावर्णशुद्धिलाभः॥अपठितेषुप्रातिपदिकेषुतथाप्यगतेः॥स्यादेतत्॥सर्वो
अज्व्यक्तयोहल्व्यक्तयश्चशास्त्रांतेशुद्धाःपठिष्यंते॥अअइतिवत्॥नचैवंगौरवं॥तद्बलेनसर्वेषामनुबंधानांप्रत्याख्यानात्॥इत्संज्ञा

शः कौ ष्लोपयोरपित्यागात्॥ तथाहि॥ शीङ्धातोर्ङकारंपरित्यक्ष्यामः॥ ईकारंचैकलंपठिष्यामः॥ ङित आत्मनेपदं इत्यस्य स्थानेकलादात्मने
१६ पदमितिपठिष्यामः॥ कलश्चप्रक्रियादशायामेव॥ यथाङकारः॥ प्रयोगेतुशुद्धएव॥ प्रत्यापत्तेः शास्त्रांतेकरणमपिशास्त्रीयमकल
कार्यप्रत्यसिद्धत्वालाभाय॥ एवंचप्रक्रियायांदोषस्यकलादेराश्रयणेपिपरिनिष्ठितेरूपेनकश्चिद्दोषः॥ यथायथान्यासपक्षेपिअकारस्य
विवृतताप्रक्रियामात्रविषयानतुप्रयोगसमवायिनीतद्वदिहपक्षेकलादयोपीतिनकश्चि — द्विशेषः॥ धर्मिकल्पनातइतिन्यायः
श्चेहबोध्यः॥ ङकारादयोहिधर्मिणएवत्वयापाठ्याः॥ मयातुउभयपठनीयस्यईकारस्यकलत्वमात्रंकल्प्यमिति॥ नन्वस्मिन्पक्षेस्व
रितञितइत्यत्रकथंकार्यमितिचेत्॥ ध्मातात्कर्त्रभिप्रायइति॥ एवंआद्यंतौटकितावित्यत्रआद्यंतौकलध्माताविति॥ इडादयःआगमाश्च
निरनुबंधाःकलसाठ्याः॥ आनुगादयोध्माताः॥ डुकृञ्इत्यस्यस्थानेकृइतिहिदोषंपाठ्यं॥ आदिरंत्येनेत्यत्रापिआदिकल्लौसहेत्यु
क्ते अउइत्यादिकाः संज्ञाः करिष्यंते॥ कलेनेतितृतीयानिर्देशेसतितुअप्राधान्यात्सिद्धांतइवचरमवर्णस्यसंज्ञानस्यात्॥ हलंप इ
त्यादौ अणइत्यपनीयअओरितिकरिष्यते॥ स्वरसंधिस्त्वसंदेहायनकरिष्यते॥ तस्मात्सर्वमनुबंधकार्यादिकंकलादिभिरेवसिध्यती
तिचेत् सत्यं। सिध्यत्येवं॥ अपाणिनीयंतुभवतिइतिचेत् अत्रोच्यते॥ इष्टसिद्ध्यर्थोवर्णोपदेशः॥ एवंचाकृत्युपदेशादेवउदात्तादि
सिद्धिमंगीकृत्यकलादिष्वतिप्रसंगइत्थंपरिहार्यः॥ आगमाश्चविकाराश्चप्रत्ययाःसहधातुभिः॥ उच्चार्यंतेततस्तेषुनेमेप्राप्ताः कला
दयइति॥ यत्तुअग्रहणेषुप्रातिपदिकेषुप्राप्ता एवेति॥ तन्न॥ त्वयापिप्रतिपदपाठस्यावश्याश्रयणीयत्वात्॥ अन्यथाशशइत्यत्रषष राम
इत्यपिस्यात्॥ मंचकेमजकइति॥ पलाशेपलाषइति॥ स्यादेतत्स्वरवर्णानुपूर्वीनिर्णयाययदिप्रतिपदपाठस्तर्हिकलादिनिवृत्तिर १६

-पितत एवास्तु ॥ उणादिसूत्रात्पृषोदरादिसूत्राद्वा साधुत्वाभ्यनुज्ञानं विशेषावधारणं तु निघंटादिनेति चेत्कलादिनिवृत्तिरपि शिक्षादिग्रं
थेनास्तु ॥ सत्यं ॥ आनुषंगिकी कलादिनिवृत्तिः ॥ वर्णोपदेशस्य मुख्यं फलं तु प्रत्याहारनिष्पत्तिः ॥ प्रत्याहारशब्दस्तु अणादिसंज्ञापरः ॥
प्रत्याह्रियंते वर्णा एष्विति व्युत्पत्तेः ॥ नच ग्रहणकशास्त्रेण निष्पादितासु अकारादिसंज्ञास्वतिप्रसक्तिः ॥ योगरूढ्यभ्युपगमात् ॥ तस्मादादि
रंत्येनेत्येतत्सूत्रसिद्धाः संज्ञाः प्रत्याहारशब्दवाच्यास्तन्निष्पत्तये च वर्णोपदेश इति स्थितम् ॥ ॥ इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकं समाप्तम् ॥ १ ॥ ॥ श्रीगणेशाय नमः ॥ अइउण् ॥ संज्ञासूत्रमिदं ॥ आदिरंत्येन सहेतेत्यनेन सहैकवाक्यत्वा
त् ॥ अइउणित्येषामादिरकारः अंत्येन णकारादिना सहितः सन् आद्यंताभ्यामाक्षिप्तानां मध्यगानां स्वस्य च संज्ञेति हि वाक्यार्थः । अत्र अकारा
दीनां स्वरूपेण अनुकार्येण वा सतोप्यर्थवत्त्वस्याविवक्षितत्वात्प्रातिपदिकत्वं नेति गवित्ययमाहेत्यादाविव विभक्तेरनुत्पत्तिः सुपां सुलुगि
ति लुग्वा ॥ छंदोवत्सूत्राणीति भाष्यकारेष्टेश्छंदोंगेषु व्याकरणसूत्रेष्वपि छांदसकार्यातिदेशात् ॥ यूस्त्र्याख्याविति सूत्रे छेदः प्रश्लेषो गौ
णमुख्यन्यायेन प्रवर्तत इति वक्ष्यमाणत्वाद्वा ॥ स्यादेतत् ॥ स्वरसंधिनेह भाव्यम् ॥ तत्र अइ इत्यत्र विभक्तेः रुत्वयत्वलोपेषु ह्रस्व इइ इत्यादा
विव लोपासिध्या संधिर्नेति समाधानेपि इकारस्य इको सवर्ण इति ऋकारस्य ऋत्यक इति प्रकृतिभावसंभवेपि एदैतो गुयायावादुवोरौ ॥ यत्तु व
र्णोपदेशकाले अजादिसंज्ञानामनिष्पन्नत्वात्संधिर्नेति ॥ तच्चिंत्यं ॥ वर्णोपदेश इत्संज्ञायां अच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां
सुध्युपास्य इत्यादौ तटस्थ इव उद्देश्यतावच्छेदकरूपाक्रांते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात् ॥ अन्यथा तुल्यास्यप्रयत्नमित्यादौ
सवर्णदीर्घो न स्यात् ॥ तथा अर्थवत्सूत्रांतर्गतानां प्रातिपदिकत्वं प्रत्ययः परश्च स्यादौ सुप्प्रत्ययो ङ्याप्प्रातिपदिकात् द्व्येकयोर्द्विवचनैकव-

शा·कौ· चनेबहुषु बहुवचनमित्यादौ तत्त द्विभक्तिः ससजुषोरुः अत्र रुः खरवसानयोरिति सूत्रे विसर्गश्च नस्यादिति सर्वोपप्लवः स्यात्॥ स्वाध्यायो
१७ ध्येतव्य इत्यस्यनेह मानेत्यादिश्रुतेश्च स्वस्मिन्नपि कथाप्रवृत्तिस्तथा दीर्घादिनामपीति चेत्तुल्यंयणादावपि॥ नन्वेवं ग्रहणकशास्त्रम
पि अणोप्रगृह्यस्येत्यादौ तटस्थ इव स्वस्मिन्नपि प्रवर्त्तेत॥ ततश्च दीर्घाणामनण्त्वेन सवर्णग्राहकत्वंनास्तीति सिद्धांतोपि भज्येतेति चे
न्नवैषम्यात्॥ पदार्थसंसर्गो हि वाक्यार्थः॥ तद्बोधश्च पदार्थबोधोत्तरभावी तथाच अण् शब्देन ये उपस्थितास्तेषांसवर्णग्राहकत्वं सू
त्रार्थः॥ अण् शब्दश्च आदिरंत्येनेति सूत्रेण अक्षरसमाम्नाय पठितेषु संकेतित इति तानेवाओपस्थापयति॥ तथाच अष्टादशानामपि
अकारः संज्ञेति पर्यवसन्ने सूत्रांतरेष्वस्य चावित्यादिषु अकारोष्टादशानामुपस्थापक इत्युचितं॥ ननु ग्रहणकसूत्रेपि॥ एतद्वाक्यार्थ
बोधात्प्रागष्टादशस्वगृहीतशक्तिकत्वात्॥ नहि सिचि वृद्धिरित्यादावादैचामुपस्थापकोपि वृद्धिशब्दो वृद्धिरादैजिति संज्ञासूत्रे तानुप
स्थापयति॥ किंतु स्वरूपमेव॥ संज्ञासूत्रे च सामानाधिकरण्यादादैचां वृद्धिशब्दवाच्यत्वावधारणे सूत्रांतरेषु संज्ञिनामुपस्थितिर्निर्बाधेति
दिक्॥ तस्माद्दध्युणित्यादौ स्वरसंधिः प्राप्नोत्येवेति चेत्॥ सत्यं॥ संहितावि रहान्नयणादयः॥ अनित्या हि वाक्ये संहिता॥ उक्तंच॥ संहि
तैकपदे नित्या नित्या धातूपसर्गयोः॥ नित्या समासे वाक्ये तु सा विवक्षामपेक्षत इति॥ समासस्य पृथग्ग्रहणं गोबलीवर्दन्यायेन॥ एक
पद इत्यनेनैव तत्संग्रहसिद्धेः॥ इयंच प्राचां परिभाषा एकदेशानुमतिद्वारा संहिताधिकारेणैव ज्ञापिता॥ असंहितायां यणादिनिवृत्य
र्थो हि संहिताधिकारः॥ अतएव॥ हेरोहिणि त्वमसि शीलवतीषु धन्याए नं निवारय पतिं सखि दुर्विनीतं॥ जालांतरेण मम वासगृहं प्रवि राम·
ष्टः श्रोणीतटं स्पृशति किं कुलधर्म एष इत्यत्र धन्याएनमित्यस्य नासाधुता॥ अतएव आलंकारिकैश्च्युतसंस्कृतित्वापेक्षया पृथगे १७

वविसंधितानामदोषांतरंगणितं॥तच्चेहास्तीत्यन्यदेतत्॥नन्वेवमप्यसंहितायांकालव्यवायादेवयणादेरप्राप्तौकिंसंहिताधिकारेणेतिचेन्न॥
संहिताधिकारबहिर्भूतानांकालव्यवायेपिप्रवृत्तिंज्ञापयितुंतदारंभात्॥तेनअग्नाविष्णूइत्यग्नाविष्णूइत्यादाववग्रहेप्यानङादयः॥अग्निमीळे
इत्यत्रपदविभागेपिनिपातः॥तेनोरासंज्ञामित्यादौनसादयश्चसिध्यंति॥नन्वेवंपुरःहितमित्यवग्रहेहितशब्दस्यस्वरितत्वंबह्वृचैःपठ्यमानमसंगतंस्यात्॥
॥तयोर्य्वावचीतिसंहिताधिकारआशास्त्रसमाप्तेरितिसिद्धांतात्॥स्वरितविधेश्चतदंतर्भूतत्वात्॥अतएवतैत्तिरीयावग्रहेहितशब्द-
मनुदात्तंपठंति॥अतएवचबह्वृचाअप्यग्निमीळइत्यस्यपदविभागपाठेनिघातमेवकुर्वंतिं ननुस्वरितमपीतिचेत्॥सत्यं॥प्रातिशाख्ये
विशेषविधानात्स्वरितसिद्धिः॥उक्तंहि॥यथासंधीयमानानामभेकौभवतःस्वरः॥उपदिष्टस्तथाविद्यात्स्वराणामवग्रहइति॥तेस्वं
अइउणित्यादौसंहिताविरहान्नसंधिरितिस्थितम्॥केचित्तुचादिषुपाठान्निपातसंज्ञा॥निपातएकाजितिप्रगृह्यत्वं॥ततःप्रकृतिभावः
॥यद्यपि अनिपातानामपीहग्रहणमिष्टंदध्यश्वोदास्त्रिःस्त्राक्षिरित्यादिसिद्धयेतथापिनसर्वाव्यक्तयःसाक्षान्निर्देष्टव्याः॥आनंत्यात्॥किंतु
काश्चिद्व्यक्तिःनिर्दिश्यमानास्वसदृशीमितरांअपिगृह्णातीतिवक्ष्यते॥तत्रकिंनिपातव्यक्तिरेवनिर्दिश्यतांउततदितरेतिसंशयेआद्यकोः
टिरेवयुक्ता॥संहिताकार्यविरहेणनिर्दिश्यमानरूपस्यस्फुटप्रतीतिसिद्धेरित्याहुः॥कारप्रत्ययस्तुनभवति॥बहुलग्रहणात्॥सहिरोगा
ख्यायांण्वुल्बहुलमित्यत्रोपसंख्यानतः॥अन्येतुइकृश्तिपौधातुनिर्देशइत्यतोनिर्देशशब्दःकारप्रत्ययविधावनुवर्तते॥निर्देशश्चप्रतिपा
दनं॥तेनप्रयोगविशेषनिष्ठानांवर्णानांप्रतिपादनेप्रत्ययः इहंतुआनुपूर्वीसंपादनमात्रेतात्पर्यंनतुऋविपुत्रइत्यादौदृष्टानामकारादीनांप्रति
पादने अतःकारप्रत्ययाभावइत्याहुः॥अनुकार्यानुकरणयोरभेदविवक्षापक्षेतु अर्थवत्त्वस्याविवक्षिततयावर्णवाचित्वाभावात् कारप्रत्य-

श॰कौ॰ याभावः॥ अत्रेदमवधेयं॥ अकारः संवृतः॥ विवृतकरणाः स्वराः तेभ्यः एओ विवृततरौ ताभ्यामैऔ विवृततरौ ताभ्यामप्याकारः संवृतो
१८ कार इति शिक्षावाक्यात्॥ विवृतसंवृतादयः शब्दाः शुक्लादिवद्धर्मे धर्मिणि च प्रयुज्यंते तेन विवृतं करणं प्रयत्नो येषां ते तथाभूताः स्वरा इ
कारादय इत्यर्थः॥ यत्तूक्तं छंदोगविशेषैरिवर्णोवर्णऋकाराणां संवृततामिकुड्भिरुक्तं प्रवृत्तः संवृता अन्यत्राभवसाम्न इति॥ तत्तु तदीयशाखा
विशेषमात्रपरं न तु सार्वत्रिकं॥ यथा सात्यमुग्रिराणायनीयानामेव सुजाते एश्वसूनृते अध्वर्यो ओद्रिभिः सुतमित्यादावेकमात्र एकार ओ
कारश्च न त्वन्येषां तद्वत्॥ इकारादौ वा यथा तथास्तु॥ अकारस्य संवृतत्वं तु निर्विवादमेव॥ तथाप्यसौ प्रक्रियादशायां अकारेण दीर्घेण
प्लुतेन च सह सावर्ण्यसिद्धये विवृततरोस्मिन्सूत्रे निर्दिश्यते॥ विवृततरत्वं च प्रयोगदशायां मा भूदित्येतदर्थं शास्त्रांते अ अ इति सूत्रेणोक्तं॥
तेन हि विवृततरमनूद्य संवृतो विधीयते॥ न चानुवाद्यसमर्पकेण अकारेण दीर्घप्लुतयोरपि ग्रहणकशास्त्रबलात्संग्रहः स्यादिति वाच्यं॥ अ
द्भितपरनिर्देशस्य एकशेषेण ह्रस्वपदनिर्देशस्य वा सिद्धांतयिष्यमाणत्वात्॥ वक्ष्यति हि तत्र वार्तिककारः॥ सिद्धं तु तपरनिर्देशाद्वा एक
शेषनिर्देशाद्वा स्वरानुनासिकभिन्नानां भगवतः पाणिनेः सिद्धमिति॥ शास्त्रांते च विधीयमानं प्रत्यापत्तिवचनमेव ज्ञापकं इह विवृत उपदि
ष्ट इत्यस्यार्थस्य॥ यत्तु अत्रत्यं वार्त्तिकं अकारस्य विवृतोपदेश आकारग्रहणार्थ इति॥ तत्र विवृतशब्दो विवृततरत्वपरः॥ उदाहृतशिक्षा
नुरोधात्॥ ननु शुक्लतरोपि शुक्लो भवत्येव यथा तथेह विवृततरस्याप्याकारस्य विवृतत्वानपायात्सावर्ण्यं यथाश्रुतेपि सेत्स्यतीति चेत् न। सव
र्णसंज्ञायां तुल्यप्रयत्नत्वस्य विवृततरत्वाद्यवांतरधर्मपुरस्कारेणैव वक्तव्यत्वात्॥ अन्यथा ओदौतोरपि सावर्ण्यापत्तौ गां गा इत्यत्रेव नावं ना राम॰
व ग्लावं ग्लाव इत्यादावपि औतोम्शसोरित्यात्वं प्रवर्त्तेत॥ ईदूदेद्द्विवचनमिति एकारांतस्य विधीयमाना प्रगृह्यसंज्ञा करवावहै इत्यादावपि प्रवर्त्तेत॥ १८

एङः पदांतादतीति पूर्वरूपं कस्मै अग्रात् विष्णो अस्तीत्यादावपि स्यात्॥ किंचैवं हकारादीनामीषद्विवृतत्वादकारादीनां विवृतत्वात्सावर्ण्ये
प्रसक्ते नाज्झलाविति सूत्रं न कर्तव्यमिति भाष्यसिद्धांतो व्याकुप्येत॥ एओङित्यादिसूत्रद्वये ङकारचकाररूपानुबंधद्वयकरणं चैव लिंगं॥
अन्यथा हि अन्यतरेणैव सर्वत्र व्यवहरेत् किं बहुना ऐकारौकारावपि न निर्दिशेदाकारादीनामिव सावर्ण्येन सिद्धेरिति दिक्॥ तस्मादत्रत्यभाष्यवा
र्तिकयोर्विवृतशब्दो विवृततरं लक्षयतीत्येव तत्त्वं॥ यद्वा॥ विवृतप्रतिज्ञानसामर्थ्याद्विवृततरेण सह सावर्ण्यं सेत्स्यतीत्यवधेयं॥ एवं च भा
ष्यादिग्रंथो यथाश्रुत एवास्तु॥ एतच्च न्यासकारहरदत्तयोर्ग्रंथमनुसृत्य उदाहृतशिक्षावाक्योपष्टंभेन व्याख्यातं॥ परमार्थतस्तु॥ आका
रो विवृत इत्येव भाष्यवार्तिकस्वरससिद्धं न तु विवृततर इति॥ तथा च पाणिनीयशिक्षा॥ स्वराणामूष्मणां चैव विवृतं करणं स्मृतं॥ तेभ्यो
ऽपि विवृतावेङौ ताभ्यामैचौ तथैव चेति॥ प्रागुक्तं तु मतांतरं न तु पाणिनीयं॥ अत एव एओङ्सूत्रे भाष्यकैयटादौ अकारस्य विवृतत्वाद्वि
वृततराभ्यां संध्यक्षराभ्यां न सावर्ण्यमित्युक्तं॥ एवं च वृत्तिग्रंथस्यापि यथाश्रुतस्य सौष्ठवे न्यासकारहरदत्ताभ्यां कृतं भंगं व्याख्या
नमनादेयं॥ अथ वा नाज्झलाविति पठतः सूत्रकृतो मते विवृततरस्यापि विवृतत्वमात्रेण सावर्ण्यमस्तु॥ चत्वार आभ्यंतराः प्रयत्नाः स
वर्णसंज्ञायामाश्रीयंत इति वृत्तिग्रंथस्वरसात्॥ न चैवमेङिचोरतिप्रसंगः॥ वर्णसमाम्नाये पृथङ्निर्देशसामर्थ्यात् अनुबंधद्वयसामर्थ्याद्वा तत्र
सावर्ण्याप्रवृत्तेरिति दिक्॥ ननु दंडाढक इत्यादौ दीर्घेण सह दीर्घ एकादेशः सावर्ण्यस्य फलमित्ययुक्तं प्लुतेन तु सावर्ण्ये किं फलमिति चेन्न॥
इह आ३ मिद्र इति गुरोरनृत इति प्लुते कृते तेन सह पूर्वस्य दीर्घ एकादेशः फलमिति गृहाण॥ न च दीर्घे कर्तव्ये प्लुतस्यासिद्धत्वं शंक्यं॥ प्लुतप्र
गृह्या अचीति ज्ञापकेन सिद्धः प्लुतः स्वरसंधिष्विति वक्ष्यमाणत्वात्॥ स्यादेतत् आक्षरसमाम्नायिकस्य अकारस्य कृतेऽपि विवृतत्वे धातुप्राति

कौ पदिकप्रत्ययनिपातस्यास्य संवृतत्वादच्त्वं न स्यात्॥ आक्षरसमाम्नायिकेन भिन्नप्रयत्नानाममीषामग्रहणात्॥ ततश्च शमामहानामिति
१९ दीर्घो अलोन्त्यपरिभाषया अंत्यस्यैव स्यान्न तकारस्य॥ अचश्चेति परिभाषाया बाधादनुपस्थितेः॥ तथा दृषदित्यत्र प्रातिपदिकस्यांतउदात्तो अ-
वत्येतन्न स्यात्॥ नापक इत्यत्र प्रत्ययाकारस्यानच्त्वादाद्यादेशो न स्यात्॥ अवनर्मनीत्यत्र निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जमित्या-
द्युदात्तत्वं न स्यात्॥ किंच॥ अस्य च्वावित्यादौ अकारस्य विवृतत्वेनानणत्वात् सति ग्राहकत्वे शुक्ली भवतीत्यादावेवेत्त्वं स्यान्न तु माली भवती-
त्यादौ॥ न चाक्षरसमाम्नायिकस्य विवृतत्वप्रतिज्ञासामर्थ्यान्न तत्सदृशेषु धात्वादिस्थेष्वपि तत्कार्यप्रवृत्तिरिति वाच्यं॥ खट्वाढकमित्यादौ दी-
र्घसंपादनेन विवृतत्वप्रतिज्ञायाः साफल्ये सति सामर्थ्यविरहात्॥ तथाहि॥ अकः सवर्ण इत्यत्र आदिरंत्येनेति वचनादनयोरेव अकारककार-
यो रनुकरणमिति निर्णीतं तेन प्रत्याहारगतेन विवृतेनाकारेण सावर्ण्याद्दीर्घप्लुतयोर्ग्रहणे खट्वाढकमित्यादि सिध्यति॥ असति तु विवृतत्वे-
अस्य च्वावित्यादिष्विव प्रत्याहारेष्वपि संवृतस्य ह्रस्वस्यैव कार्यं स्यान्न तु दीर्घप्लुतयोरिति फलभेदस्य स्पष्टतया क्व विवृतत्वप्रतिज्ञायाः सा-
मर्थ्यं॥ अथोच्येत॥ प्रत्यक्षमस्या आक्षरसमाम्नायिकस्यैव विवृतत्वं ज्ञाप्यत इति न ब्रूमः॥ किंतु सामान्यापेक्षं ज्ञापकं इह शास्त्रे या वानकारः
स सर्वोपि प्रक्रियायां विवृतो बोद्धव्य इति॥ एवमपि प्रत्युच्चारणं वर्णानां भेदेन अस्य च्वावित्यादावुच्चारितस्यानण्त्वेन सवर्णग्राहकता न स्या-
त् किं त्वकः सवर्ण इत्यादौ प्रत्याहार एव सवर्णग्राहकत्वं स्यात्॥ एवमिकारादयोपीकोयणचीत्यादावेव ग्राहकाः स्युर्न तु एरुनेकाचोपस्य-
ति चेत्यादौ॥ ननु एक एव अकारः तत्कस्यानण्त्वमाशंक्यते॥ नैवमुदात्तानुदात्तत्वादिविरुद्धधर्मानुपपत्तेः॥ तेषां व्यंजकध्वनिधर्मत्वा- राम
त्॥ अनुबंधत्वस्यापि लोकवद्भविष्यति॥ लोके हीह मुंडो भव इह जटिलो भवेत्यादिक्रमेण एकस्यानेकधर्मोपदेशेपि तत्तद्देशभेदेन — १९

धर्मीव्यवतिष्ठंते तथेहापि कर्मण्यणि त्यत्रैव णित्वं चरेष्ट इत्यत्र टित्वं गापोष्टकि टित्वं कित्त्वे असांप्रतिक इत्यादौ तु नैकमप्यनुबंधकार्यमिति
व्यवस्था अत एव प्राग्दीव्यतोण् शिवादिभ्योणित्यादौ पुनः पुनर्णित्करणं सार्थकं॥ कथं तर्हि घटेन तरतीति घटिकः॥ तरतीत्यधिकारे नौद्व्यचष्ठ
न्निति ठन्॥ कथं च धनस्य निमित्तं संयोग उत्पातो वा धन्यः॥ तस्य निमित्तं संयोगोत्पातावित्यधिकारे गोद्व्यचोसंख्यापरिमाणाश्वादेर्यत् इति चेत्
॥आवृत्तिकृताद्व्यच्व्यपदेशाद्भविष्यति॥ न च बाहुक इत्यादौ मुख्यद्व्यचि चरितार्थत्वाद्गौणे कार्यासंभव इति वाच्यं॥ अश्वादिप्रतिषेधेन ह गौ
णस्यापि मुख्यसमकक्षतया ज्ञापनात्॥ अत एव किरिणेत्यादौ सावेकाच इति विभक्तेरुदात्तत्वं न भवति॥ आवृत्तिकृते नद्व्यच्व्यपदेशेन स्वा
श्रयस्य एकाच्व्यपदेशस्य निवर्त्तितत्वात्॥ नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते॥ तस्मादुक्तरीत्या बाधकाभावाल्लाघवरूपसाधकबलाच्चाप
व्यक्तिरेकैवेति सर्वं सुस्थमिति चेन्न॥ उदात्तत्वादिविरुद्धधर्माध्यासेन व्यक्त्यैक्यस्य बाधात्॥ ध्वनिधर्मा एवैत इत्युक्तमिति चेत्तर्हि कत्व
मत्वादिकमपि तस्यैवास्त्विति अकारे कारादीनामप्यैक्यप्रसंगः॥ तदेतदुच्यते॥ अखंडं पदं वाक्यं वा वाचकमिति॥ किं बहुना मास्त्वेव व्यं
ग्यो वर्णः व्यंजकत्वाभिमतैर्ध्वनिभिरेव सर्वनिर्वाहात्॥ उक्तं च हरिणा॥ अनेकव्यक्त्यभिव्यंग्या जातिः स्फोट इति स्मृता॥ कैश्चिद्व्यक्तय एव वा
स्या ध्वनित्वेन प्रकल्पिता इति॥ तस्माद्यदि ध्वनिभिरेव निर्वाहस्तर्हि जातिस्फोटेपि नो चेत् कखयोरिवोदात्तानुदात्तादीनामपि भेद एवेति न्या
य्यतः परिनिष्ठिते सति एवं ध्वनिरात्मन् भेदानुदात्तस्वरितादिकान्॥ वर्णा अनुपतंते स्युरर्थानुगंतिहेतव इति मीमांसकमतमर्द्धजरतीयत्वा
दुपेक्ष्यमिति स्थितम्॥ एवं च अनंता वर्णा इति नैयायिकाद्यभ्युपगतरीत्या प्रत्ययं जातिपरो निर्देशस्तर्हि अस्य च्वावित्यत्रापि तथैवास्त्विति
किं ग्रहणकशास्त्रेण॥ तदुक्तं॥ सवर्णेण्ग्रहणमपरिभाष्यमाकृतिग्रहणादिति॥ तपरसूत्रं तु जातिनिर्देशप्रयुक्तस्यैवातिप्रसंगस्य भंगाय॥ स्ये

शे. दादीनामइत्वादौ एकमात्रव्यक्तिरपि जातिविशेषणतया विवक्ष्यते॥ विधेयविशेषणत्वात्॥ पश्वेकत्ववत्॥ अस्य च्वावित्यादौ तु अनुवाद्यविशेषण-
२७ त्वान्न व्यक्तिर्विवक्षिता॥ ग्रहेकत्ववत्॥ किंतु अण्ग्रहणं कुर्वतः सूत्रकृतो नायं पक्षोभिप्रेतः॥ एका अवर्णव्यक्तिरिति पक्षस्तु दूषितः एवं अ-
ष्टादश अवर्णव्यक्तय इति पक्षे तु अइउणिति यदि जातिपरो निर्देशस्तर्हि पुनरण्ग्रहणं व्यर्थं॥ व्यक्तिनिर्देशो तु उक्तरीत्या अस्य च्वावित्यादौ सवर्णग्र-
हणानुपपत्तिरिति महत्संकटं॥ तस्मादिह सूत्रकारस्याशयो दुर्वच इति चेत्॥ उच्यते॥ त्रिष्वपि पक्षेषु अस्त्येव सूत्रस्योपपत्तिः॥ तथाहि॥ स एवा-
यं अकार इति प्रत्यभिज्ञाबलाद् अकार एक एवेति पक्षे धर्मस्य वस्यायास्त्वयैवोपपादनाद्यथाके अण्कार्यं न भवति यथा च अप्रत्ययादिविधिस्थ-
ले न दीर्घादिप्रवृत्तिः तथा अस्य च्वाविति विधिरपि मा ल्ली भवतीत्यादौ न प्रवर्ततेति ग्रहणकशास्त्रं क्रियते॥ तच्च सावर्ण्याधीनसिद्धिं कूत्स्वस्य विवृत-
त्वं प्रतिज्ञायते॥ ननु आक्षरसमाम्नायिकस्यैव चेत्स्वरस्य अपि न भवतिष्ठेतेति मा वैत्रिकी प्रतिज्ञा॥ एवमपि अस्य च्वावित्यादौ अनण्त्वादेव ग्राहकत्वं
न स्यादिति चेत्॥ विवृतं ह्रस्वत्वादेरविशेषेण तस्याप्यण्त्वात्॥ नहि मुंडत्वजटिलत्वादिवद्देशभेदेनानुपात्ताः स्वरूपमात्रानुवादे न विहितो अपि
श्यामो दीर्घश्च वतुर्बाहुरित्यादौ योन्यवतिष्ठंते॥ उदात्तानुदात्तस्वरितानुनासिकत्वगुणास्तु शब्देनानुपात्तान भेदका इति वृद्धिसूत्रे वक्ष्यते॥ अनंता
एव व्यक्तय इति पक्षे अष्टादश अवर्णव्यक्तय इति पक्षे च यद्यपि ह्रस्वदीर्घप्लुतसाधारणी एका जातिः कंठादिजन्यतावच्छेदिका तज्जन्यध्वनित्वव्याप्यता-
वच्छेदिका वास्त्येव तथापि तद्व्याप्य ह्रस्वमात्रवृत्तिरपि जातिरस्ति॥ तथा च॥ अइउण्सूत्रेप्यापि जातिपरो निर्देशः तेन तज्जातीये एकत्र कृतं वि-
वृतत्वं सर्वेष्वपि सिध्यति॥ अतएव सर्वेपि ह्रस्वा अणो भवंत्येवेति अस्य च्वावित्यादौ न कश्चिद्दोषः॥ अवात्तामित्यादिष्वपि त्येषैव गतिः॥ अन्यथा राम
अवात्स्तामिति स्थिते सिचः पूर्वपरयोस्तकारयोर्मध्ये अन्यतरस्यैव झल्त्वं स्यान्न तूभयोः अक्षरसमाम्नाये उभयोरपागत्॥ ततश्चझ्ब- २०

लोऽझलीति न प्रवर्त्तेत सूत्रस्यावकाशस्तु अभित्याद्इत्यादिः स्यात्॥ एवं च दीर्घेणामनण्त्वेन सवर्णग्राहकत्वं नास्तीत्यपि सिद्धान्तः संगच्छ
ते॥ अथ व्यापकजातिपरमेव निर्देशं स्वीकृत्य अण्ग्रहणं त्यज्यतामिति चेन्न॥ एवमपि उपसर्गादृतीत्यादौ ऌवर्णग्रहणाय ग्रहणकशास्त्रस्याव
श्यकत्वात्॥ न च ऋऌवर्णयोरिति सावर्ण्यविधानसामर्थ्यान्न दूहः॥ अकः सवर्ण इत्यादौ चारितार्थ्यात्॥ किंच॥ अस्य चावित्यादेर्व्यापकजातिनि
र्देशः स्वदादीनामद्इत्यादौ तु व्याप्यजातिनिर्देश इत्यस्य नियामकाभावे संकरोऽपि स्यात्॥ न चानुवाद्यविशेषणं विधेयविशेषणं च ग्रहे कत्वपश्वेकत्व
वद्विवक्षितमविवक्षितं चेति मीमांसकमर्यादा वैयाकरणैः स्वीकर्त्तुं शक्या॥ उपेयिवाननाश्वानन्नूचानश्चेत्यत्र उपेत्य विवक्षितं नञ्प्रभृतिषु तु विव
क्षितमिति स्वीकारात्॥ आर्द्धधातुकस्येड्वलादेरित्यादावनुवाद्यविशेषणस्यापि बहुशो विवक्षणाच्च॥ तस्माद्व्याख्यानतो विशेषप्रतिपत्तिरिति परि
भाषैव सिद्धान्ते शरणं॥ व्याख्यानं तु लक्ष्यानुरोधीति यद्यप्यगत्या तत्र तत्राश्रीयते, तथापि नैतद्बलेन ग्रहणकशास्त्रस्य प्रत्याख्यानं चमत्कारमावहते
॥ ग्रहणकशास्त्रबलेन हि अप्रत्ययो अविधीयमानः सवर्णग्राहक इति स्फुटतरं प्रतीयते॥ उल्लंघितायां चैवं मीमांसकमर्यादा धर्मशास्त्रेऽपि बहुशः
श्रेयांसं न प्रबोधयेदित्यादिषु॥ एकः पूर्वपरयोरिति सूत्रे सकारग्रहणमपीह ज्ञापकं॥ अन्यथा आहुण इत्येकत्वस्य पश्वेकत्ववद्विवक्षासंभवात्किं
तेनेति दिक्॥ अथवा अर्थवत्त्वस्याविवक्षायामपि इहोच्चारितो गोः कारादिः सुसदृशीर्भिन्नव्यक्तीः सादृश्याख्यसंबंधेनोपस्थापयति॥ नन्वेवमपि
वृत्त्या अनुपस्थितत्वात्तासां शाब्दबोधे अन्वयप्रतियोगितानुपपत्तिः॥ अर्थाध्याहारवादे तु दोषाभावात्॥ अतिप्रसंगभंगस्तु तात्पर्यग्राहकबलेनैव॥
अन्यथा तवापि लक्षणाध्याहारादेरतिप्रसंगस्य तदवस्थत्वात्॥ स्पृहेरीप्सित इत्यनुशासनबलात्पुष्पेभ्य इत्यादौ पदाध्याहारः क्लृप्त इति वैच
ल्यत्रो पेरुर्मणि क्रियार्थोपपदस्य च कर्मणि स्थानिन इत्याद्यनुशासनादर्थाध्याहारस्यापि स्थलविशेषे क्लृप्तत्वात्॥ अन्यथा गवित्ययमाहे

त्यास्यगतं प्रोक्तं वक्ष्यते॥ ऋलृक्॥ ननु विधिवाक्येषु ऋकारो ग्रहणकशास्त्रबलेन ऋकारादीनष्टादश यथा गृह्णाति तथा लृवर्णानपि द्वादश गृह्णी
२१ यादिति किं पृथग्लृकारोपदेशेन॥ न च भिन्नस्थानतया सावर्ण्यविरहादग्रहणमिति वाच्यं॥ ऋकारलृकारयोः सवर्णविधिरिति वार्तिकबलेन वाच
निकस्येव सावर्ण्यस्यावश्यं वाच्यत्वात्॥ अन्यथा इहोपदिष्टे पि लृकारे प्लकारीयतीत्यादौ उपसर्गादृति धातौ वा सुप्यापिशलेरित्यस्य अप्रवृत्तिप्रसं
गात्॥ ननु क्लृपिस्थस्य लृकारस्येदमनुकरणं॥ तस्य च स्वरकार्येष्वसिद्धत्वात् रकार एवायमिति उपसर्गादृतीत्यादि सेत्स्यतीति चेन्न॥ कृपो रो ल इति
विहितस्यासिद्धत्वेपि तदनुकरणस्यास्य असिद्धत्वविरहात्॥ स्यादेतत्॥ प्रकृतिवदनुकरणमिति अतिदेशादयमप्यसिद्ध एव॥ सर्वातिदेशो वश्या
श्रयणीयः॥ हि: पचं त्वित्येति तैत्तिरीयवाक्ये पचपिपर्त्तीत्याद्युदात्तं पठ्यते तथापि भाष्योदात्तते ... तरीयेपचे तु शब्दस्येति कृतिङङ्
ङिति धातो यथा स्यात्॥ नत्वेतत्तिङन्तं॥ तिङन्तपदार्थकत्वात्॥ ... स्वाद्युत्पत्तिस्तु विवक्षाभेदेन वैकल्पिकीत्यर्थवत्सूत्रे वक्ष्यते॥ अग्नी इ
त्यादेः स्यादौ प्रगृह्यत्वमप्यतिदेशादेव॥ अतिदेशे ज्ञापकं तु यत्तदेतेभ्यः परिमाण इति सौत्रनिर्देशः॥ न ह्यत्रातिदेशं विनात्यदाद्यत्वं लभ्यते॥
अभिव्यक्तपदार्था ये इति ... येन लोकप्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः॥ तथा च प्रयुज्यते॥ यत्तदोर्नित्यसंबंध इति॥ नन्वनेनैवातिदेशे
न भत्वस्यावश्यकत्वादुदात्ततप्रयोगो नुपपन्न एवेति चेत् न॥ उदात्तत्वज्ञापकसूत्र एव त्यदादीनि सर्वैरित्येकशेषस्याकरणे न एतत्तदोः
सुलोप इत्यादिनिर्देशैश्चातिदेशस्यानित्यताज्ञापनात्॥ अथवा प्रावृट्शरत्कालदिवां ज इति सूत्रे अपो योनियन्मतुषु चेति वार्तिके नैवं
परिभाषा अस्या अनित्यता चेत्युभयमपि ज्ञाप्यते॥ तथाहि॥ कारीर्यामप्सुमंतावाज्यभागाविति श्रुतं॥ अप्सु मे सोमः अप्स्वग्ने सधिष्टवे राम·
ति हि तत्र मंत्रौ॥ तत्राप्सुशब्दादनुकरणभूतान्मतुपि अस्य वामीयमित्यादिविवानुकरणस्य विभक्तित्वाभावादे बहुकोप्रसंगाद्वृत्ति २१

धानमुक्तपरिभाषां ज्ञापयति॥ न नु बुत्सत्तेश्च प्रथमांततां विना दुर्लभत्वात्प्रातिपदिकताप्यावश्यकी सा च प्रत्ययांतत्वे सति दुर्लभेति प्रातिपदि
कसंज्ञायां अतिदेशप्रवृत्तिविरहात्प्रभ्यनुज्ञानादनित्यतापि सिद्धा॥ एतेन युष्मदस्मत्प्रत्ययगोचरयोरित्यादिप्रयोगा व्याख्याताः॥ प्रकृतम
नुसरामः॥ लृकारानुकरणस्याप्यतिदेशेनासिद्धत्वात्प्लाकारीयतीत्यादावुपसर्गादृतीत्यस्य प्रवृत्तिसिद्धौ किं सावर्ण्येनेति चेन्न॥ तथा
सति रेफपरत्वभावात्प्लकारपरत्वासिध्या प्रकृते अनित्यत्वेनातिदेशप्रवृत्तेरवश्यवाच्यत्वात्॥ ननु रेफपरत्वे सिद्धे अतिदेशाद्रेफस्य
लकारो भविष्यतीति चेन्न॥ एवमपि गम्लृसृप्लृ इत्यादिस्थस्य लृकारस्यानुकरणे त्वदुक्तातिदेशाद्रेफत्वसंभवाभावात्॥ तस्मात्सवर्णत्व
स्यावश्यकत्वे लृकारोपदेशो व्यर्थ एवेति चेत्॥ अत्रोच्यते॥ न तावद्वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्तिः॥ आरब्धेपि वार्तिके ऋकारलृकारयोः
सवर्णस्यानित्यतां ज्ञापयितुं कर्तव्य एव लृकारोपदेशः॥ क्लृप्तशिखेत्यत्र गुरोरनृत इति प्लुतः सिध्यति॥ अन्यथा अनृत इति निषेधः स्या
त्॥ ऋकारेण लृकारस्य ग्रहणात्॥ कृप्यमानश्च क्लृप्यमान इत्यादौ ऋवर्णान्नस्येत्युपसंख्यानिकस्य णत्वस्याप्रवृत्तिस्तु क्षुभ्नादित्वेनापि सु
वचा॥ अन्यथा प्रक्लृप्यमानादौ कृत्यचइति णत्वस्य दुर्वारत्वात्॥ इदं त्ववधेयं॥ वार्तिकमते सवर्णेण ग्रहणमपरिभाष्यमिति सिद्धांतादृका
रे लृकारसाधारणजातिविरहेण जातिग्रहणासंभवाच्च प्लाकारीयतीत्यत्र कथंचिन्निर्वाहस्तद्वत्स्यात्॥ सावर्ण्यविधिस्तु सवर्णदीर्घे होतृ
लृकार इत्यत्र इको सवर्ण इत्यस्य प्रवृत्तिप्रतिबंधे च चरितार्थः॥ न च ऋत्यक इत्यस्य प्राप्तिः॥ ग्रहणकशास्त्राभावादेव॥ एवं च दीर्घसंपा
दकतया लृकारपाठे सावर्ण्यानित्यत्वमपि कथं ज्ञापयेदिति॥ तस्मादण्ग्रहणं प्रत्याचक्षाणस्य तत्स्थाने ऋग्रहणं कर्तव्यं॥ अथवा प्रत्य
ग्रहणं वा न कार्यमित्याशयः कल्प्यः॥ यद्यप्येवं पट्लृप्रभृतीनां लृदित्तां नाग्लोपिशास्वृदितामिति प्राप्नोति॥ पृथगनुबंधकरणं तु लृदित्त्वप्रयुक्तस्य

रा अज्ञादेशस्यैःदित्वप्रवृत्याचरितार्थत्वात् संकरं ज्ञापयितुमसमर्थं तथापि सावर्ण्यस्यानित्यत्वमेवेदमुपिसमाधेयं॥ पंडा॥ स्वरसंधिप्रक
२२ रणे ऌवर्णस्य ऋवद्भाव एव वाच्यः॥ सावर्ण्यवचनोपसंख्यानं प्लुतस्तु प्रकरणांतरस्थ इति न तत्रातिदेशप्रवृत्तिः॥ उरण्रपर इति परिभाषा तु
क्रा वैकालतया स्वरसंधिप्रकरणस्थेति उपरित्यनेन लवर्णग्रहणोपपत्तिः॥ अस्मिन्नपि पक्षे ऌकारोपदेश इह कर्तव्य एव॥ कॢप्तशिख इत्य
त्र प्लुतो यथा स्यात्॥ कॢप्त इति चहुतं॥ प्रकॢप्त इति च स्वरितः॥ अत्र त्वंतभावितण्यर्थात् कर्मणि क्तः॥ गतिरनंतर इति पूर्वपदप्रकृतिस्व
रः॥ कर्मणि यः क्तस्तदंते उत्तरपदे तद्विधानात्॥ ततः शेषनिघाते कृते उदात्तादनुदात्तस्य स्वरितः॥ न चात्र कृपो रो ल इत्यस्यासिद्धत्वाशं
कापि॥ पूर्वत्वात्॥ परं हि पूर्वं प्रत्यसिद्धं न तु परं प्रति पूर्वं॥ एवं च गम्लृप्रभृतीनां ऌकारस्य इत्संज्ञानायासेन सिध्यति॥ अन्यथा तु पु
ष्कदिद्युताद्यॢदित इति ऌकारे परतः कृतेन यणादेशेन इत्संज्ञानुवादेन च ज्ञापकेन कथंचित्साधनीया स्यात्॥ एवं इदितो नुम् इत्याद्यनु
वादो नांत्रत्यक इत्यादिनिर्देशानां च साम्यादिकारादयोपि न निर्दिश्येरन्॥ यथाश्रुतसूत्ररीत्या तु ब्रूमः॥ ऋकारमुच्चारयितुं प्रवृत्ता कुमारी
करणापाटवाद्यदा लकारमुच्चारयति तदनुकरणस्यापि अच्कार्यसिद्धिः फलम्॥ अनुकरणानामनुकार्येणार्थवतां सर्वत्र साधुताभ्युपगमात्॥
नन्वेवं ऌवर्णस्य दीर्घा न संतीति व्याहन्येत॥ अनुकरणस्य तत्रापि सुलभत्वादिति चेन्न॥ न्यायप्राप्तस्यापि वचनेनु बाधात्॥ इदं च स्याप्य
भावात्कल्पनं संज्ञादिष्विति वार्त्तिकाल्लभ्यते॥ तथाहि॥ ऌकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुताद्यर्थ इति पूर्ववार्त्तिकेन ऌकारोपदेश
स्य प्रयोजनत्रयमुक्तं। दध्लृतकाय देहीति यदृच्छाशब्दः॥ कुमारी ऌज्जु इत्याहेति अशक्तिजानुकरणं॥ प्लुतादि वचनस्वरितार्थ प्लुत्यादयः राम
॥ एतदर्थं ऌकारोपदेश इति हितस्यार्थः॥ तत्र प्रथमप्रयोजननिराकरणायेदं वार्त्तिकं॥ न्याय्यभावादिति॥ अस्यार्थः॥ ऋतकनिमित्तावहतेरीपदि २२

तिनिर्दिष्टः सौत्रो धातुः तस्मादौणादिकः क्वुन्॥ तत्रत्यैवं सूत्रितं॥ क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापीति॥ शिल्पिन्यभिधेये संज्ञायां च सोपपदान्निरु
पपदाच्च धातोः क्वुन् स्यादित्यर्थः॥ रजकः तक्षक इत्यादि शिल्पिनि॥ चरकः भषकः कटकं कनकमित्यादि संज्ञायामुदाहरणं॥ तथा च कृतक
शब्दः शास्त्रानुगतत्वान्न्याय्यः॥ तत्सद्भावात्स एव संज्ञा तथा च कृतं कुर्यान्न तद्धितमित्यादि गृह्यस्मृतिरप्यनुकूलिता भवतीति॥ एवं वदता
शास्त्राननुगतदेशभाषया यत्कूंची मंचीत्यादि नाम क्रियते तदसाध्विति स्फुटीकृतं॥ आदिशब्दादनुकरणेपि शिष्टानुरोधं दर्शयता लृव
र्णस्य दीर्घो न भवतीति शास्त्रमर्यादामुल्लंघ्य क्रियमाणस्य दीर्घानुकरणस्याप्यसाधुता दर्शिता॥ तस्माट्टिघुभादिभ्यः कूंची मंच्यादीना
मिव गावी गोण्याद्यनुकरणेभ्यो दीर्घलृवर्णानुकरणस्यापि न्यायतो न किंचिद्वैलक्षण्यं किंतु वाचनिकमिति स्थितम्॥ मंत्रशास्त्रे तु मा
तृकान्यासादौ दीर्घलृवर्णो यद्यपि स्वीकृतस्तथापि प्राति[illegible] न्यायेन अन्यत्रासौ नोपयुज्यत एवेत्यवधेयं॥ एवं च त्वादीनामपि शिष्टै
रनंगीकृतानां न्यायसाम्यादसाधुतोक्ता॥ तथा चाहुः॥ नहि वचिरंतिपरः प्रयुज्यत इति॥ एवं च न्याय्यभावादिति वार्तिके न पूर्ववार्तिकोक्तप्र
योजनत्रयमध्ये प्रथमप्रयोजनं निराकृतं॥ लृतकस्त्वसाधुरेव॥ इदं त्वत्र यी शब्दानां प्रवृत्तिर्न संति यदृच्छाशब्दा इति पक्षेणोक्तं। पक्षांतरैरपि
हि परिहारा भवंतीति भाष्यकारः॥ एतत्[illegible] पर्यालोचनया तु चतुष्टयीति पक्षे लृतकादयोपि टिघुभादिवदसाध्वसाधुबहिर्भूताः साधव एव
[illegible] टिघुभादिविलक्षणा इति लभ्यते॥ अन्यथा हि पक्षांतरैरिति न ब्रूयादिति॥ न च गृह्यस्मृतिविरोधः॥ तावतापि कृतं कुर्यान्न तद्धितमिति गृ
ह्यमूलत्वकृतस्याप्यौपगवादेरिव शब्दसाधुताभ्युपगमे बाधकाभावात्॥ पुरुषस्कंसापूर्नपि प्रयुंजानो देवब्राह्मणादिनिंदकवद्धर्मभ्र
श्यो लृघनात्सत्यवैतीत्यन्यदेतत्॥ यत्तु द्वितीयप्रयोजननिराकरणार्थं वार्तिकम्॥ अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु इति॥ तस्यायमर्थः

॥ शिष्टस्यसाधोरनुकरणंसाध्वेव॥ अशिष्टंचतदप्रतिषिद्धंचसाध्वसाधुवहिर्भूतं टिघुभादितस्यानुकरणमपिनाहगेव अर्थादसाधोरनु
करणमप्यसाध्वेवेति॥ इदंतुभाष्येदूषितमेव॥हेलयोहेलयइत्यादीनांशिष्टपरिगृहीतानामसाधुतापत्तेर्बीजाभावात्॥ नह्यपशब्दवाचक
त्वमात्रेणतथात्वं॥अपशब्दइत्यस्याप्यसाधुतापत्तेः॥नचप्रकृतिवदनुकरणमित्यनेनअसाधुतातिदेशः॥ अशास्त्रीयस्यातिदेशायो
गादितिदिक्॥तस्माद्वार्तिककृतादूषितमपिद्वितीयप्रयोजनंभाष्यरीत्यास्थितं॥यदपितृतीयप्रयोजननिराकरणपरंवार्त्तिकं॥ एकदेश
विकृतस्यानन्यत्वात्प्लुत्यादयइति॥ तस्यायमर्थः॥तुदिधिलादेशविनामेष्वप्रतिविधानमितिवक्ष्यमाणत्वादृकारैकदेशस्यरेफस्यलत्वे
कृतेएकदेशविकृतन्यायेनात्र कार्यसिद्धिरिति॥ नचैवमबृतइतिप्रतिषेधापत्तिः॥अरवतइतिन्यासात्॥ ह्येकदेशविकृतन्यायेनरेफवत्ताः
न्याय्याति॥लोकेपिहिछिन्नपुच्छस्यपुच्छवत्त्वप्रयुक्तकार्येप्राप्त्येव॥ नचहोतृकारादेर्दीर्घस्याप्यरवतइतिप्लुतप्रतिषेधापत्तिः॥ ह्रस्वस्य
रवतोनेतिन्यासात्॥किंत्वेवंसतिएकस्यलृकारस्यप्रत्याख्यानायसूत्रभंगाश्रयणेविपरीतमेवगौरवमितितदे तदाहभाष्यकारः॥सेयंमहतो
वंशस्तंबाल्लट्वानुलभ्यतइति॥लट्वापक्षिविशेषः फलविशेषोवा॥लटलीत्यइतिधातोरशूप्रुषिलटिकणिखटि विशिभ्यः क्वन्नित्यौणादिकःक्व
न्॥नेड्वशिकृतीतीडभावः॥लट्वाकरंजभेदेस्यात्फलेऽवद्येखगांतरेइतिविश्वः॥ननुक्तृपोरोलइतिसूत्रंअअइत्यस्मात्पूर्वमस्त्क॥एवंचल
त्वस्यासिद्धत्वादेवप्लुत्यादयः सेत्स्यंतीतिचेन्न॥एवंहिसतिग्रोपडीत्यस्याप्युत्कर्षःस्यात्तत्तश्चलत्वस्यासिद्धतयानिजेगिल्यतइत्यत्रह लि
चेतिदीर्घःस्यात्॥ननुबह्वृचप्रातिशाख्येऋकारलृकाराविथषष्ठोष्माजिह्वामूलीयाइतिऋलृवर्णयोःस्थानसाम्योक्तेस्तद्रीत्याग्रहणकशा राम
स्त्रेणैवनिर्वाहाल्लृकारोपदेशोमास्त्वितिचेन्न॥ उक्तरीत्याऋलृवर्णयोः सावर्ण्योपसंख्यानंपरंप्रत्याख्यायतांलृकारोपदेशस्तूक्तरीत्याक्लृप्तशि २३

२ ... प्राप्तमिति योगविभागेनव्यवस्थितविभाषाश्रयणेनतदप्रवृत्तेः। अगतिकगत्याश्रयणंतुसर्वेषांसममितिचेन्न। ३

रवेप्लुतसिद्धयेसावर्ण्यानित्यतांज्ञापयितुंकर्त्तव्यएवेतिदिक्॥एओङ्॥ऐऔच्॥यद्यपिछंदोगानांमध्येसात्यमुग्रिराणायनीयाअर्द्धमेकारंअर्द्ध
मोकारंच अधीयते सुजाते एश्वसूनृते अध्वर्यो ओद्रिभिः सुतमिति अतः पादस्य स्याव्यपरस्य तदीयप्रातिशाख्ये अर्द्धमेकारमोकारंचविदध्यति
तथापि प्रातिशाख्यसमाख्याबलादेवसर्वशाखासाधारणे अस्मिन् शास्त्रेनस्य नग्रहणं॥ज्ञापकाच्च॥यदिहि अकारादिभिरष्टादशानामिव
एङ्भिरपिएकमात्राणांग्रहणंसंमतंस्यात्तर्हिहलाघवार्थमेकमात्रावेवएङावुपदिशेत्॥अकारादिवत्॥ नचैवमदेङ्गुणइत्यत्रतपरत्वा
न्मात्रिकयोरेवगुणसंज्ञास्यादितिवाच्यम्॥ तत्रएओइतिस्वरूपेणैवदीर्घयोर्निर्देशेअनण्त्वेनसवर्णाग्रहणोपपत्तेः।एवमप्यर्द्धमात्रालाघवा
त्॥ तवहिवर्णोपदेशेएओइतिदीर्घयोर्मात्राचतुष्टयं॥ गुणसंज्ञायांतुएङितिसार्द्धद्वयं॥संकलनयासार्धाषण्मात्राः ममतुवर्णोपदेशेमात्रा
द्वये॥गुणसंज्ञायांतुअतस्त्वइतिमिलिताःषडेवमात्राः॥ तस्माद्द्विमात्र निर्देशसामर्थ्यादप्येकमात्रयोरनभिमतत्वंनिर्णीयते॥ नन्वेवं एचइ
ग्घ्रस्वादेशइतिव्यर्थंस्यात्॥ तद्धिस्थानेंतरतमपरिभाषयाप्लुवतोरईकाराऊंकारयोर्निवृत्त्यर्थंक्रियतइतिचेन्न॥ वैकल्पिकप्राप्तिमत्तोअका
रस्यव्यावृत्त्येनदारंभात्॥एवंहिपूर्वोभागोअकारसदृशः उत्तरस्तुइवर्णोवर्णसदृशः तत्रउभयांतरतमस्यह्रस्वस्याभावात्पर्यायेणअका
रःस्यात्॥ इकारोकारौचस्यातांतस्मान्माकदाप्यवर्णोभूदितिसूत्रारंभः॥वस्तुतस्तुप्रत्याख्यास्यतेसूत्रे॥तथाचतत्रवार्तिककारोवक्ष्यति॥
सिद्धमेङःसस्थानत्वात्॥ऐचोश्चोत्तरभूयस्त्वादिति॥अस्यार्थः॥शब्दपरविप्रतिषेधेनएङउत्तरभागेतवर्णौइउवर्णावेवेतिसिद्धं॥यद्वा
॥एकारस्तुह्रस्वतालव्यः ओकारस्तुह्रस्वोष्ठ्यइतिमतेसिद्धमित्यर्थः॥ तथाचबह्वृचानांप्रातिशाख्ये।तालव्यावेकारश्चवर्गाविकारैकारौय
कारःशकारइति॥शेषओष्ठ्योपपाद्यइतिच॥पूर्वोक्तेभ्यः शेषोवर्णराशिरोष्ठाभ्यामुपपादयितव्यः॥उवर्णःपवर्गः ओऔउपध्मानीयश्च

२२ ॥ शिष्टस्यसाधोरनुकरणंसाध्वेव॥ अशिष्टंचतदप्रतिषिद्धंचसाध्वसाधुवहिर्भूतंटिघुभादितस्यानुकरणमपिनाहगेवअर्थादसाधोरनु
कर्णामप्यसाध्वेवेति॥ इदंतुभाष्येदूषितमेव॥हेलयोहेलयइत्यादीनांशिष्टपरिगृहीतानामसाधुतायांवीजाभावात्॥ नह्यपशब्दवाचक
त्वमात्रेणतथात्वं॥अपशब्दइत्यस्याप्यसाधुतापत्तेः॥नचप्रकृतिवदनुकरणमित्यनेनअसाधुतातिदेशः॥ अशास्त्रीयस्यातिदेशायो
गादितिदिक्॥तस्माद्वार्तिककृतादूषितमपिद्वितीयप्रयोजनंभाष्यरीत्यास्थितं॥यदपितृतीयप्रयोजननिराकरणपरंवार्त्तिकं॥एकदेश
विकृतस्यानन्यत्वात्प्लु त्यादयइति॥ तस्यायमर्थः॥नुडिधिलादेशविनामेषुप्रतिविधानमितिवक्ष्यमाणत्वादृकारैकदेशस्यरेफस्यलत्वे
कृतेएकदेशविकृतन्यायेनाच्कार्यसिद्धिरिति॥ नचैवमरृतइतिप्रतिषेधापत्तिः॥अरवतइतिन्यासात्[illegible]ह्येकदेशविकृतन्यायेनरेफवत्ताः
प्याप्रीति॥लोकेपिहिछिन्नपुच्छस्यपुच्छवत्त्वप्रयुक्तकार्येनाप्त्यैव॥ नचहोतृकारादेर्दीर्घस्याप्यरवतइतिप्लुतप्रतिषेधापत्तिः॥ ह्रस्वस्य
रवंतोनेतिन्यासात्॥किंत्वेवंसतिएकस्यलृकारस्यप्रत्याख्याना यस्सूत्रभंगाश्रयणेविपरीतमेवगौरवमितितन्देद् तदाहभाष्यकारः॥सेयंमहतो
वंशस्तंबाल्लद्वानुलब्धनइति॥लङ्गापक्षिविशेषःफलविशेषोवा॥लटलैल्येइतिधातोरशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्नित्यौणादिकःक्व
न्॥नेडुशिकृतीतीडभावः॥लड्वाकरंजभेदेस्यात्फलेऽवद्यरवगांतरेइतिविश्वः॥ननुक्लृपोरोलइतिसूत्रंअअइत्यस्मात्पूर्वमस्तु॥एवंचल
त्वस्यासिद्धत्वादेवप्लुत्यादयः सेत्स्यंतीतिचेन्न॥एवंहिसतिग्रोयङीत्यस्याप्युत्कर्षःस्यात्तनश्च लत्वस्यासिद्धतयानिजेगिल्यनइत्यत्रहलि
चेतिदीर्घःस्यात्॥ननुबह्वृचप्रातिशाख्येऋकारलृकारावथषष्ठोप्माजिह्वामूलीयाइतिऋलृवर्णयोःस्थानसाम्योक्तेस्तद्रीत्याग्रहणकशा राम
स्त्रेणेवनिर्वाहाल्लृकारोपदेशोमास्त्वितिचेन्न॥उक्तरीत्याऋलृवर्णयोः सावर्ण्योपसंख्यानंपरंप्रत्याख्यायतांलृकारोपदेशस्तूक्तरीत्याकृतशि २२

२ नचानृतइतिनिषेधापत्तिः॥ प्राचामितियोगविभागेनव्यवस्थितविभाषाश्रयणेनतदप्रवृत्तेः। अगतिकगत्याश्रयणंतुसर्वेषांसममितिचेन्न। २

रेवप्लुतसिद्धपेसावर्ण्यानित्यतांज्ञापयितुं कर्त्तव्य एवेति दिक्॥ एओङ्॥ ऐऔच्॥ यद्यपिछंदोगानांमध्येसात्यमुग्रिराणायनीयाअर्द्धमेकारं अर्द्ध
मोकारंच अधीयतेसुजाते एश्वसूनृते अध्वर्यो ओ३द्रिभिःसुतमितिअतः पादस्य स्याव्यपरस्य तदीयप्रातिशाख्ये अर्द्धमेकारमोकारंचविदध्यति
तथापि प्रातिशाख्यसमास्याबलादेवसर्वशाखासाधारणेअस्मिन् शास्त्रेनस्य नग्रहणं॥ ज्ञापकाच्च॥ यदिहि अकारादिभिरष्टादशानामिव
एङ्भिरपिएकमात्राणांग्रहणंसंमतंस्यात्तर्हिहलाघवार्थमेकमात्रावेवएङावुपदिशेत्॥ अकारादिवत्॥ नचैवमदेङ्गुण इत्यत्र तपरत्वा
न्मात्रिकयोरेवगुणसंज्ञास्यादितिवाच्यम्॥ तत्रएओइतिस्वरूपेणैवदीर्घयोर्निर्देशेअनण्त्वेनसवर्णाग्रहणोपपत्तेः। एवमप्यर्द्धमात्रालाघवा
त्॥ तवहिवर्णोपदेशेएओइतिदीर्घयोर्मात्राचतुष्टयं॥ गुणसंज्ञायांतु एङितिसार्द्धद्वयं॥ संकलनयासार्धषण्मात्राः ममतुवर्णोपदेशेमात्रा
द्वये॥ गुणसंज्ञायांतुअन्तस्त्वइतिमिलिताः षडेवमात्राः॥ तस्माद्दीर्घमात्र निर्देशसामर्थ्यादप्येकमात्रयोरनभिमतत्वंनिर्णीयते॥ नन्वेवं एच इ
ग्घ्रस्वादेशइतिव्यर्थंस्यात्॥ तद्धिस्थानेंतरतमपरिभाषयाप्रप्लुवतोरर्द्धकारार्द्धौकारयोर्निवृत्त्यर्थंक्रियतइतिचेन्न॥ वैकल्पिकप्राप्तिमतोअका
रस्यव्यावृत्तयेनतदारंभात्॥ एवंहिपूर्वोभागोअकारसदृशः उत्तरस्तुइवर्णोवर्णसदृशः तत्रउभयांतरतमस्यह्रस्वस्याभावात्पर्यायेणअका
रःस्यात्॥ इकारोकारौचस्यातांतस्मान्माकदाप्यवर्णोभूदितिसूत्रारंभः॥ वस्तुतस्तुप्रत्याख्यास्यतेसूत्रं॥ तथाचतत्रवार्तिककारो वक्ष्यति॥
सिद्धमेङःसस्थानत्वात्॥ ऐचोश्चोत्तरभूयस्त्वादिति॥ अस्यार्थः॥ शब्दपरविप्रतिषेधेनएङउत्तरभागंतस्यचोइउवर्णावेवेतिसिद्धं॥ यद्वा
॥ एकारस्तुह्रस्वस्तालव्यःऔकारस्तुप्रदुष्टोष्ठ्यइतिमतेसिद्धमित्यर्थः॥ तथाचबह्वृचानांप्रातिशाख्यं॥ तालव्यावेकारश्चवर्गोविकारैकारौय
कारःशाकारइति॥ शेषओष्ठ्योपपाद्यइतिच॥ पूर्वोक्तेभ्यः शेषोवर्णराशिरोष्ठाभ्यामुपपादयितव्यः॥ उवर्णःपवर्गःओऔउपध्मानीयश्च

श॰कौ॰ औष्ठ्य इतिसूत्रार्थः॥ इदंच प्रातिशाख्यवृत्तिकृतांव्याख्यानं॥ तद्भाष्येतुशेष ओष्ठ्योपवाद्येतिपाठः॥ तत्र अपवाद्येत्यस्यउत्तरसूत्रेवक्ष्यमा
२५ णान्विद्यायेत्यर्थः॥ न्यापसिद्धस्यैवबाध्यबाधकभावस्यस्फुटीकरणार्थंचेदं॥ तदेवंशब्दपरविप्रतिषेधान्मतभेदेनस्थानसाम्याद्यसिद्धमि
तिसमाधानद्वयं सद्भूतुफलितं॥ एतच्चयद्यप्यैस्वपितुल्यंतथापितत्रसमाधानांतरमप्यस्तीत्याह॥ ऐचोश्चेति॥ चकारोभिन्नक्रमः॥ हेतो
रनंतरंबोध्यः॥ अर्द्धमात्रा अवर्णस्य॥ अध्यर्द्धमात्राइवर्णोवर्णयोरितिपक्षेमल्लग्रामादिवद्भूयसाव्यपदेशादपि इकारोभविष्यतइत्यर्थः॥
सममविभागपक्षोप्यस्तीत्यग्रेवक्ष्यते॥ तत्रतुपूर्वोक्तसमाधानद्वयमेवशरणं॥ तत्रापिशब्देपरविप्रतिषेधपरंप्रथमव्याख्यानंयद्यपिविव
रणेस्थितं॥ तथापितदभ्युपगमेअप्रतिपत्तिर्वोभयोरित्यादिविप्रतिषेधेपरमितिसूत्रेवार्त्तिकंभाष्यंचविरुध्येत॥ नहिगोस्त्रियोरिति सूत्रे
गोशब्देविधीयमानोह्रस्वोन्यत्रचरितार्थः॥ येनाप्रतिपत्तिःस्यात्॥ ननुप्रतिलक्ष्यंलक्षणभेदेविकल्पेप्राप्तेपरमेवेतिनियमोस्त्विति चेन्न
॥ एवंहिसति अचःपरस्मिन्निति सूत्रेनित्यःपरयणादेशःपरश्चासौव्यवस्थया॥ युगपत्संभवोनास्ति बहिरंगेणसिध्यतीत्यादिभाष्यसंद
र्भोविरुध्येत॥ तेद्भूलेनहिलक्षणवाक्ययोःपूर्वापरीभावएवविप्रतिषेधसूत्रस्यविषयोऽन्यस्तुअंतरंगंबलवदित्यस्येतिलभ्यते॥ इदंच
तत्रैवस्फुटीकरिष्यामः॥ द्वितीयव्याख्यानमपि अर्द्धेकारादिवत्प्रातिशाख्याक्तस्यप्रायेणानादराद्दुर्बलं॥ अथवंदोगाभिमतस्यापिचतु
र्मात्रस्यतपरकरणव्यावर्त्यतोक्तेस्तद्वदिहाप्यभ्युपगमस्तर्हि ऋलृक् सूत्रोक्तरीत्याऋकारलृकारयोःसवर्णविधिरितिवार्त्तिकमपिप्रत्या
ख्यातुंशक्यं॥ अथशिक्षांतरानुसारेणवार्त्तिकारंभस्तर्हि एच इगितिसूत्रारंभोपितथैवास्त्विति दिक्॥ तस्मादेचइगितिसूत्रबलेनाईका राम
रादैकारौनलभ्येते इति स्थितं॥ ननुप्रातिशाख्योक्तावपितौविहगृह्येते चेत्तदाकिमनिष्टमापद्यतेयेनतयोरग्रहणंयत्नतःप्रतिपाद्यसी २४

तिचेत्॥ न॥ एचो ह्रस्वविधौ अंतरतमत्वेन तयोरेव प्रसंगात्॥ एचइगिति सूत्रं तु प्रत्याख्यातमेव॥
॥एतदर्थमेव सूत्राभ्युपगमे तु गौरवमेव दोषः॥ स्यादेतत्॥ एत् ओत् ङ इत्यादिक्रमेण तपरानेव निर्देक्ष्यामः॥ तथा च ऊकालसूत्रे अचू शब्दे
न तपराणामेवोपस्थितौ सत्यां तत्कालग्रहणादर्धएकार ओकारो वा ह्रस्वसंज्ञां न लभेते तेन ह्रस्वविधिविधेयोप्यसौ नेति॥ मैवं॥ त्रिमात्रा
णामप्यनच्त्वापत्तेः॥ ततश्च गोत्रातइत्यत्र अनचि चेत्यचः परस्य विधीयमानं द्वित्वं नकारस्य न स्यात्॥ प्रत्यङ्ङैतिकायनउदङ्ङौपगवेति
ङमुड् न स्यात्॥ प्लुतसंज्ञाविरहात्तु तविधिर्न प्रवर्तेत॥ न च ओमभ्यादान इत्यादिविधिसामर्थ्यात्तत्सिद्धिः॥ उवर्णविधानेन चरितार्थत्वा
पत्तेरिति दिक्॥ तदेतदाह वार्त्तिककारः॥ संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं॥ प्लुत्यादिष्वज्विधिः॥ प्लुतसंज्ञा च॥ अतपरएचइग्घ्रस्वा
देशे एकादेशे दीर्घग्रहणमिति॥ अस्यार्थः॥ श्लिष्यमाणवर्णद्वयसदृशावयवत्वात्संधीयमानमक्षरं संध्यक्षरमित्यन्वर्थापूर्वाचार्यसिद्धा
एचां संज्ञा॥ तपरस्त्वपदिश्यतेनेनेति करणव्युत्पत्त्या प्रयोजनमुच्यते॥ तथा च एचां तपरत्वोच्चारणे फलमस्ति चेत्तर्हि तपरोच्चारणं तावत्कर्त
व्यं॥ प्लुतत्वे सत्यपि अज्विधिः द्वित्वङमुडादिर्न सिध्यति॥ तत्र प्लुतस्यैव ङमुडादिः॥ तस्मात्स्वरस्य द्वित्वमिति सूचयितुं आदिशब्दः॥ प्लुते
तदुत्तरवर्णेषु च इष्टकार्यं न सिध्यतीत्यर्थः॥ अभ्युपेत्यवादोयं॥ वस्तुतस्तु अनच्त्वात्प्लुतसंज्ञैव न सिध्यति॥ तस्माद्दुष्टस्तपरनिर्देश इ
तिवार्त्तिकत्रयेणोक्तं॥ यथान्यासपाठे त्वाह॥ अतपरइति॥ सूत्रं कर्त्तव्यं स्यादर्द्धैकारादिनिवृत्तये इत्यर्थः॥ वस्तुतस्तु उभाभ्यामपि सूत्रं
कर्त्तव्यं॥ उभाभ्यामपि वा न कर्त्तव्यमिति समनंतरमेवोपपादितं॥ तस्मान्न्यासेदोषउद्भावनमाहः॥ पक्षद्वयसाधारण्यात्॥ स्यादेतत्॥
तपरत्वाभावपक्षे गंगोदकं रमेश इत्यादौ त्रिमात्रचतुर्मात्राणां स्थाने त्रिमात्रचतुर्मात्रा एवादेशाः स्युः॥ आंतरतम्यात्॥ न चाकः सवर्णे इ

मा॰ कौ॰ निसूत्रेदीर्घइतियोगंविभज्यएकःपूर्वपरयोरित्यधिकारेयोविहितःसदीर्घोभवतीतिव्याख्यानात्नत्रिमात्राद्यादेशइतिवाच्यं॥पशुंविद्धंप
२५ चंतीत्यत्रदोषप्रसंगात्॥ननुअमीत्येवसूत्रमस्तु॥प्रथमयोरितिसूत्रात्पूर्वसवर्णोनुवर्त्तते॥एकःपूर्वपरयोरितिच॥एवंसिद्धेपूर्वग्रहणं
पश्चाज्जातोयःपूर्वःसएवपश्चात्स्यात्॥दीर्घोमाभूदिति॥तेनपशुमितितावत्सिद्धं॥संप्रसारणाच्चेत्यत्रापिसएवपूर्वशब्दोनुवर्त्तते॥ह
लइतिसूत्रारंभसामर्थ्याद्धासंप्रसारणाच्चेत्यनेनदीर्घोनविधीयते॥तेनविद्धमित्यपिसिद्धं॥अतोगुणइत्यत्रापिपरइत्येवसिद्धेरूपग्र
हणसामर्थ्याद्यादृशःपरस्तादृशएवादेशोनतुतद्भिन्नलक्षणः॥तेनपचंतीत्यपिसिद्धं॥तस्माद्योगविभागेसएकादेशोदीर्घोभवतीतिपक्षो
निर्दोषएवेतिदिक्॥एवंसतिकृष्णर्द्धिस्तवल्कारइत्याद्यसिद्धिप्रसंगात्॥इहहिदीर्घवचनादकारोनाअनांतर्यादेदोतौन॥तस्माद्दीर्घइ
तियोगविभागोदुष्टएव॥तेनगंगोदकंरमेशइत्यत्रत्रिमात्रचतुर्मात्रप्रसक्तिर्दुर्वारैवेति॥नचप्लुतश्चविषयेस्मृतइतिवाच्यं॥प्लुताप्लुतप्रसंगे
सत्येवतदितिवक्ष्यमाणत्वात्॥ननुतथापिचतुर्मात्रःकथमापद्यतेतस्यलोकवेदयोरप्रसिद्धेरितिचेत्॥न॥छान्दोग्येप्रसिद्धेरित्याहुः॥वस्तु
तस्तुलोकेप्यस्तिप्रसिद्धिः॥तथाचप्लुतावैचइदुतावितिसूत्रेभाष्यकारोवक्ष्यति॥इष्यतएवचतुर्मात्रःप्लुतइति॥अत्रोच्यते॥गुणसंज्ञायां
वृद्धिसंज्ञायांचतपरनिर्देशान्नोक्तदोषः॥तदेतदुक्तंवार्त्तिककृता॥एकादेशेदीर्घग्रहणंइति॥तस्यैवसंज्ञित्वादितिभावः॥नत्वेतद्वार्त्तिकंदी
र्घग्रहणांतर——कर्त्तव्यतापरंनापियोगविभागपरं॥उक्तयुक्तेः॥स्यादेतत्॥संज्ञासूत्रेअदातोःतपरकरणेपिएङैचोःकथंतत्कालग्राहकं
ता॥सहिवहोरोदितिसूत्रेवर्णग्रहणेनतात्परइतिपंचमीसमासस्यापिज्ञापितत्वादितिचेत्॥एवमपितात्पराभ्यामेङैच्छब्दाभ्यामस्तुदी राम
र्घाणामेवोपस्थितिः उपस्थितेस्तुदीर्घैःस्वसवर्णानामशेषाणांग्रहणंदुर्वारमेव॥नहितेपितात्पराः॥अनुच्चारितत्वात्॥ग्राहकत्वंपरमत्र २५

च्चारितानामपि प्रत्याहारैरुपस्थितानामस्त्येव॥ दीर्घोज्जसि चेति ज्ञापकात्॥ ल्वादिभ्यः षादीनामित्यादिनिर्देशाच्च॥ तेन च मूष्विस्यादिषु ष
त्वादिकं सिध्यतीति वक्ष्यते॥ तस्मात्तात्परस्तत्कालस्येति तु उच्चारितेष्वेव स्यादिति चेत्सत्यं॥ ङमो ह्रस्वादिति सूत्रे ङमुडिति प्रत्याहारे रु
तं टित्वं संज्ञापाद्यर्थं स त्सामर्थ्यात्संज्ञिषु ङादिषु उपकरोतीति यथा स्वीकृतं तथेहापि तात्परत्वं संज्ञायामनुपयुज्यमानं तदुपस्थाप्येषु संज्ञिषु
तत्कालावधारणं सामर्थ्यात्करोतीति न कश्चिद्दोषः॥ यद्वा॥ अणुदित्सूत्रे अशब्दसंज्ञेत्यनुवर्त्तते॥ शब्दस्य संज्ञायां विधेयायामण् सवर्णान्न गृ
ण्हातीति ऊकालोऽज्झित्यत्र भाष्ये स्फुटं॥ उपपादयिष्यामश्चेदं तत्रैव॥ अतो गुणवृद्धिसंज्ञाविधावपि न सवर्णग्रहणं॥ तपरकरणं तु स्पष्टार्थं॥
ईदूदेदिनिवत्॥ अन्यथा हि किमैचावेवेह निर्दिष्टौ किं वा आकारोपीत्यादिसंदेहः स्यात्॥ तत्र च मालादीनां चेत्यादिज्ञापकानुसरणक्लेशः स्यादि
ति दिक्॥ युक्ततरश्चायमेव पक्षः॥ आद्यपक्षे हि वृद्धिसंज्ञायां आदिति दीर्घस्याणत्वेन सवर्णाग्राहकत्वात्तपरकरणमैजर्थमिति स्थिते ङमुटी
वत्सामर्थ्यमस्तु गुणसंज्ञायां तु तपरकरणस्योभयार्थताभ्युपगमात्सूत्रेऽचरितार्थस्यक सामर्थ्यं येनैरं संज्ञिनोरेदोतोरुपकुर्यादिति न तत्र सवर्ण-
ग्रहणं स्यादेव॥ अस्मिन्नपि पक्षे एकादेशो दीर्घग्रहणमिति वार्त्तिकं दीर्घस्यैव संज्ञित्वादिति पूर्ववदेव न्याय्यं स्यादेतत्॥ प्रथमपक्षे तादपि पर-
स्य तत्कालग्राहकत्वाद्धु दोः पूर्वः त्व वद् इत्यादावेव स्यान्न तु लवः पवद् इत्यादावपीति चेत्॥ अत्र भाष्यं॥ नायं तकारः किं तर्हि असंदेहार्थः
सुखसुखार्थोवादकारोयमिति॥ नन्वेतज्ज्ञाप्यति तिप्रत्ययग्रहणमित्येतद्वार्त्तिकप्रत्याख्यानपरं गतित्त्वरि [illegible] न्यत्र तत्य भाष्येण सह विरुध्य-
ते॥ तथाहि॥ नत्रतितिप्रत्ययग्रहणं कर्त्तव्यं इह माभूत् दिव उत् द्युभिः द्युभिः इति पूर्वपक्षयित्वा भेदित्वमाश्रित्य समाहितं॥ ततो भाव्यमान-
स्याप्युकारस्यादसोसेर्दादित्यत्रैव सवर्णग्राहकता स्यादित्याशंक्य तपरसूत्रे दकारस्यापि चर्त्वभूतस्य निर्देशाद्भाव्यमानोपि तत्कालग्राहक इति

श॰कौ॰ परित्यक्तं ॥ एवं च उक्ऌदित्यादावपि दपरत्वमेव ॥ अन्यथा स्वरितप्रसंगात् ॥ अयमेव चदपरनिर्देशो भाष्यमानस्याप्युकारस्य सवर्णग्राहकतां ज्ञाप-
२६ यतीति स्थितम् ॥ इह तु ऋदोरिति तकारनिर्देशाल्लवः पव इत्यादौ दीर्घे पीष्टं साध्यते ॥ अत्र प्राञ्चः ॥ थकारस्थानिकोऽथ धकारस्थानिको वा दकारोऽ-
त्र भाष्ये [illegible]सो विवक्षितः अतो न पूर्वोत्तरविरोध इति ॥ ऋजवस्तु वार्त्तिकमते स्थित्वेदं भाष्यम् ॥ अतो न विरोध इत्याहुः ॥ वस्तुतस्तु तपरस्त-
त्कालस्येत्यत्र तकारेण न निर्दिश्यते प्रयोजनाभावात् ॥ दिव उत् इत्यादौ तु तपरत्वादेवेष्टसिद्धिः ॥ नन्वेवं तित्स्वरितमित्यस्य प्रसंग इति चेन्न
॥ प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणमिति परिभाषया तत्समाधानात् ॥ यत्तु तित्स्वरितमिति सूत्रे हरदत्तेनोक्तं ॥ तस्यास्तु परिभाषाया भाष्य
वार्त्तिकयोरिह ॥ अदर्शनादयं यत्नो महानस्माभिरादृत इति ॥ तत्रेदं वक्तव्यम् ॥ थकारस्थानिको धकारस्थानिको वा दकार इत्येवं रूपं यन्त्रं ज्ञाव-
दे ओङ्सूत्रे स्थितत्वात् पूर्वाचार्यैरेवोक्तं इति ॥ अन्नत्यके परग्रंथ एव स्फुटं ॥ नन्वत एवास्माभिरादृत इति ब्रूमो न तून्नीत इतीति चेत् ॥ सत्यमादृतः
॥ तथापि परिभाषाया अदर्शनादित्यसिद्धो हेतुः अंगस्येति सूत्रप्रत्याख्यानाय भाष्यकंठरवेणैव एतत्परिभाषोपन्यासात् ॥ निरुक्तं दुरुक्तमि-
त्यादिसिद्ध्यै सूत्रं कर्त्तव्यमिति स्थितेऽन्यथैयं परिभाषेत्याशय इति चेत् ॥ तथापि थकारधकारस्थानिको दकार इत्यर्थ इति व्याख्यानक्लेशो निष्फल-
तया मूलस्वरसविरुद्धतया चादरणानर्ह एव ॥ दिव उदित्यादौ तित्स्वरितमित्यस्य प्राप्तेरेव विरहेण दकारप्रश्लेषादेर्निर्बीजत्वात् ॥ तथाहि ॥ उदि-
त्येषा उकारस्य संज्ञा ॥ तया प्रत्यायित उकारस्तु विधीयते ॥ तथा च संज्ञायास्तित्त्वेऽपि संज्ञिनः किमायातं ॥ वस्तुतस्तु संज्ञापितोऽता न तु तित् ॥ न
प्र इति हि सूत्रितं न तु तिदिति ॥ यदि हि संज्ञावत्संज्ञिनोऽपि तान्तत्वं तर्हि अतो भिस ऐस् भवद्भिरित्यादावेव स्यान्न तु वृक्षैरित्यादौ ॥ तपरस्तत्कालस्येति राम
सूत्रं चान्यर्थमेव स्यात् स्वं रूपं शब्दस्येत्यनेनैव गतार्थत्वात् ॥ न च ङमुडादाविव संज्ञायां कृतं लिंगं संज्ञिनि लब्धुं शक्यं ॥ न ह्यदिह सामर्थ्यविर २६

हात्॥ एवं च तित्स्वरितमिति सूत्रे भाष्यवार्तिकग्रंथः सर्वोप्यभ्युपेत्यवाद एव॥ स्थाघ्वोरिच्चेति सूत्रे इच्चकस्य तकारेत्त्वमित्यादिग्रंथोप्येवमेव तस्मान्नायं तकारः किन्तर्हि दकार इति इहत्य भाष्यग्रन्थो यथाश्रुत एव साधुरिति सहृदयैराकलनीयं॥ अयमेव च ग्रन्थोभ्युपेत्यवादस्फुटतामुत्तरग्रंथानां गमयति॥ एतेन औत् इटोत् इत्यादिष्वपि विधेयस्य तपरत्वाभावो व्याख्यातः॥ तित्त्वं तु दूरापास्तमिति दिक्॥ इह आकारादयो वर्णाः सांशाः इष्यंते॥ यदाह तस्यादित उदात्तमर्द्धह्रस्वं पूर्वस्यार्द्धं स्यादुत्तरस्येदुताविति॥ वार्त्तिककारोप्याह॥ ऐचोश्चोत्तरभूयस्त्वादिति॥ तत्र संति केचिदंशाः स्वतंत्रवर्णांतरस्य सदृशाः यथा॥ आकारादिष्वकारस्य सदृशौ भागौ॥ एसु पूर्वभागो अकारस्य उत्तर इवर्णोवर्णयोः ऋकारे उभयतोज्भक्तिरर्द्धमात्रा॥ मध्ये रेफस्य सदृशोर्द्धमात्राभागः ऌकारेप्युभयतोज्भक्तिः मध्ये स्वतंत्रलकारसदृशो भागः तत्र स्वतंत्रतत्तद्वर्णग्रहणेन विधीयमानं कार्यं तत्तत्सदृशेष्वंशेषु न प्रवर्त्तते॥ तत्सदृशा हि ते न तु त एव नरसिंहवज्जात्यंतराक्रांतत्वात्॥ गोनौग्रहणं चात्र ज्ञापकं॥ यदिह भागा अपि स्वतंत्रवर्णप्रयुक्तं कार्यं प्रवर्त्तयेयुस्तर्हि गोद्यचोसंख्यापरिमाणाश्वादेर्यदिति नौद्व्यचष्ठन्निति च सूत्रद्वये द्व्यज्ग्रहणेनैव चरितार्थत्वाद्गोशब्दं नौशब्दं च नोपाददीत॥ तेनाग्नेइंद्र वायोउदकमित्यत्र सवर्णदीर्घो न॥ न चैचोयवायाव इत्यनेनैतस्य बाधोस्त्विति वाच्यं॥ अयादयो हि येन नाप्राप्तिन्यायेन मध्येपवादन्यायेन वा यण एव बाधकतया अग्न आयाहीत्यादौ चरितार्थाः आग्नेइंद्रमित्यादौ परेण दीर्घेण बाध्येरन्॥ अंतरंगैरपि दीर्घैः अवयवमात्रापेक्षत्वात्॥ तथा अग्नए तीति एङः पदांतादित्येतन्न॥ आलूय प्रमापेत्य च तुङ्मा[illegible]भिरित्यत्र ऐरस्न॥ पातेस्वादावंतो लोपश्चेन॥ वा चातरति वाचोनिमित्तमित्यत्र द्व्यज्लक्षणो ठन्न भवतीति दिक्॥ तुड्विधिलादेशविनामेषु ऋतुप्रतिविधेयं॥ तथा हि ह्रहलग्रहणमपनीय तस्मात्तुडेत्येव सूत्रं कर्त्तव्यं॥ ननैवमानृपतुरित्यत्रैव आरतुरित्यादावपि तुट्प्रसंगः अश्नोतेश्चेत्यस्य नियमार्थत्वात्॥ नियमश्च सा

मान्यापेक्षः॥अकारोपधस्य यदि भवति अभ्रोतेरेव न तु अटत्यादेरिति॥यदि तु अभ्नाति मात्रं निवर्त्त्यं स्यात्तर्हि नाभ्र ईत्येव ब्रूयात् रो ल इत्यत्र स्वतं-
त्रास्वतंत्रसाधारणी जातिरनुवाद्ये विधेये च विवक्षिता॥एकदेशस्य च पृथङ् निष्कर्षायोगात्तद्द्वारा ऋकारस्यैव लकारादेशः फलति॥स्वतंत्रवर्णे
वृत्तिर्जातेर्न्नाणं निर्देशः किंतु अंशांशिसाधारण्या एवेत्यत्र ज्ञापकं तु लुटि च कॢपः तासि च कॢपः ऋदुपधाच्चाकॢपिचृतेरिति निर्देशाः स्पष्टा॥कॢपउः
रः लः इति छेदः कृप इति लुप्तषष्ठीकं पदं॥तच्च तंत्रेणावृत्त्या वा योज्यं॥कृपेर्यो रेफस्तस्य लः कृपेर्ऋकारस्यावयवो यो रेफः रेफसदृशः इति
पावत्॥तस्य च लकार इति तेन चलीकॢप्यत इत्यादि सिद्धं॥ईदृशपदविभागप्रदर्शनपरभाष्यादेव कृपोरिति सूत्रपाठस्य प्रमादिकृतत्वं नि-
र्णीयते॥तदेवं तु द्विविधलादेशयोः समाहितं॥विनामे नतिः तल्लक्षणं चोक्तं प्रातिशाख्ये। नतिर्दंत्यमूर्द्धन्यभाव इति प्रकृते तु नस्य णत्वं न-
तिः तत्रेदं प्रतिविधानं॥छंदस्यृदवग्रहादित्यत्र योगविभागः कार्यः ऋतः ऋतः परस्य नस्य णः स्यात्॥गृणाति वृणोतीत्यादि॥ततः छंदस्य
वग्रहात्॥ऋत इत्येव पितृयाणं द्युमत् इत्यादि॥नन्वेवमपि तपरकरणात् पितॄणामित्यादौ णत्वं न स्यादिति चेत्॥एवं तर्हि लत्वविधावि-
वेहापि रषाभ्यामिति रेफतत्सदृशभागस्य साधारणी जातिर्निर्दिश्यते सुभ्नादिषु तृप्नोति शब्दपाठात् ज्ञापकात्॥न च पर्याज्यभक्त्या व्यव-
धानं व्यवायेपीति विभज्य सामान्ये न व्यवायेपि णत्वविधानात्॥न चैवं कृते नेत्यादावति प्रसंगः॥अट्कुप्वाङ्नुम्भिरिति नियमात्॥आस्र-
रसमाम्नायिकैस्तत्र्यत्यापि तैर्वा व्यवाये यदि भवति तर्ह्येतैरेवेति नियमसूत्रस्यार्थः।पद्यात् तृप्नोति शब्दपाठेन होतृपोतृप्रशास्तॄणामित्या-
दिनिर्देशे न च ऋवर्णान्नस्य णत्वमेव ज्ञाप्यते लाघवात्॥एवं हि व्यवायेपि इति योगविभागोपि न कर्त्तव्यो भवतीति॥भाष्ये तु वर्णैकदेशा वर्ण-
ग्रहणेन गृह्यंते इति द्वितीयोपि पक्षः समर्थितः॥स तु बहुमतिविधपत्वेन गौरवभयान्नेह प्रपञ्च्यते॥ननु यदि वर्णैकदेशा वर्णग्रहणेन न गृ-

ह्यंते नहिं कुक्कुटः पिप्पलीपिन इत्यादौ संयोगसंज्ञा न स्यात्॥ अखंडस्य मात्राकालस्य क्लृपृत्त् इत्यस्य एकहल्त्वात्। तदवयवयोश्च हल्ग्रहणेना
ग्रहणात्॥ नन्वखंडस्यानुपदेशात् कथं हल्त्वं इति चेत् माभूत्तर्हि तदपि॥ अवयवानां हल्त्वं तु कुतः संय्यता संवत्सरः यंल्लोकं इत्यादौ तु एकव
र्णानामपि हल्त्वं भविष्यति॥ अण्सूपदिष्टैर्ग्रहणात्॥ तदवयवयोस्तु हल्त्वं न स्यादेव॥ ततश्च संयोगसंज्ञाविरहे ततः पूर्वस्य गुरुत्वाभावेप्यु
तो न स्यादिति॥ अत्राहुः॥ व्यंजनमर्धमात्रं एव॥ आभ्यूच्चारणात्तु तुल्यरूपयोर्द्वयोरेकत्वभ्रमः॥ इदं च शिष्टसमाचारात् प्रक्रियादशायामवश्यं
स्वीकार्यं॥ परमार्थदशायां तु पदे न वर्णा विद्यंते वर्णेष्ववयवा न च॥ वाक्यात्पदानामत्यंतं प्रविवेको न कश्चनेति वाक्यपदीयोक्तरीत्या स्फोटं
सिद्धांतयतां क्वास्य पूर्वपक्षस्यावसरः॥ हयवरट्॥ हकारो यं हि रूपदिश्यते॥ यदि तु परत्रैवोपदिश्येत॥ अडशहशइण् ग्रहणेषु न गृह्येत
॥ ततश्च अर्हेणेत्यत्राड्व्यवायेपीति णत्वं न स्यात्॥ महान् हि इति स्थिते महां हि इति न स्यात्॥ अत्र हि दीर्घादटि समानपाद इति रुः॥ आतो
टि नित्यमित्यनुनासिकः॥ भोभगोअघोअपूर्वस्येति यत्वं॥ हलि सर्वेषामिति यलोपः॥ तत्राप्यशीत्यनुवर्त्तत इति वक्ष्यते॥ ब्राह्मणो हसतीत्य
त्र हशि चेत्युत्वं न स्यात्॥ तथा लिलिहिढ्वे लिलिहिध्वे इत्यत्र विभाषेट इति मूर्धन्यविकल्पो न स्यात्॥ तत्र हि इणः षीध्वमिति सूत्रादिण इत्येत
नुवर्त्तते॥ तदेवं अशि हशि इणि चेति चतुर्षु ग्रहणं प्रथमोपदेशस्य फलमिति स्थितं॥ यदि तु परत्र नोपदिश्येत॥ वलरलझलशल्ग्रहणेषु न गृ
ह्येत। तेन रुदिहि स्वपिहि इत्यत्र रुदादिभ्यः सार्वधातुक इति वलादित्वप्रयुक्त इण् न स्यात्॥ ष्णिह प्रीतौ॥ स्निहित्वा स्नेहित्वा सिस्निहि
षति सिस्नेहिषति इत्यत्र रलो व्युपधादिति कित्वं न स्यात्॥ अदाग्धां अदाग्धमित्यत्र घत्वस्यासिद्धत्वात्कोऽदझलःपरः सिजिति॥ झलो झलि
ति न प्रवर्त्तेत॥ अघुक्षत् अलिक्षदित्यत्र शल इगुपधादनिट इति क्सो न स्यात्॥ तस्मात्प्रत्याहारार्थं च तुष्टये प्रथमोपदेशस्य चतुष्टये विहि

श॰कौ॰ तीयोप — देशस्य फलमस्तीतिस्थितम्॥ स्यादेतत्॥ रेफस्य यत्कार्याणि प्राप्नुवंति॥ तद्यथा मद्रह्रदो भद्रह्रद इत्यत्र अचः परस्मिन्हकारात् परस्य यस
२८ इतिविधीयमानं द्वित्वं नह्यस्तीत्यादौ यकारस्यैव प्राप्नोति॥ नच रोरीतिलोपः सुकरः लोपं प्रति द्वित्वस्यासिद्धेः हलोयमामितिलोपस्त्वैकल्पिक
इति वक्ष्यमाणत्वात् पक्षे रेफद्वयं श्रूयेत नच व्यंजनपरैकस्यानेकस्य वा उच्चारणे विशेषो नास्तीति असिद्धत्ववचनं भाष्यकृतावश्यमाश्रितत्वा
न्नायंदोष इतिवाच्यं॥ सूक्ष्मत्वाद्धलोर्विशेष इतितदर्थात्॥ नतु सर्वथा विशेषविरहो भिप्रेतः॥ शरोचि हलो यमामित्योर्शास्त्र वैयर्थ्याप
त्तेः॥ तथा चेत्तु मुखइत्यादौ परो नुनासिके नुनासिको वेति पक्षे णकारः प्रवर्त्तेत॥ स्थानसाम्यात्॥ कुंडरथेनेत्यादौ वा पदांतस्येति पक्षे रेफ
प्रवर्त्तेत रेफोष्मणां सवर्णा नसंतीत्येतद्धि जातीयः सवर्णो नास्तीत्येवंपरं॥ स्वस्य स्वयं सवर्णो भवत्येव तुल्यास्यप्रयत्नत्वात्॥ रोरि ... प
स्तु नास्ति॥ तं प्रति परसवर्णस्यासिद्धत्वात्॥ अथ द्वित्वानुनासिकपरसवर्णनिवृत्तये यवाभ्यां पूर्वत्र रेफो नुकृष्येत॥ हयवरडिति॥ तर्हि र
लो व्युपधाद्धिल्येत हकारांतेष्वपि प्रवर्त्तेत॥ ततश्च देवित्वा दिदेविषतीत्यत्र पक्षे गुणो निषिध्येत॥ ननु अव्युपधादिति छित्वा अवकारांता
द्व्युपधादिति व्याख्यास्यत इति चेत्॥ एवमपि गोधेरः पचेरन्नित्यादौ लोपो व्योरिति न प्रवर्त्तेत। रेफस्य वल्यनंतर्भावात्॥ रलीति वक्ष्यामीति
चेत्॥ हृषगतौ हर्यादित्यादौ यकारे तिप्रसंगः ननु यथाश्रुतएव सूत्रे वलीति सरेफं पदं छित्वा रेफे वलि चेति व्याख्यानान्नोक्तदोष इतिचेत्॥
एवमपि इकोरण्विसंयोगादेशतो धातोरण्वतः उदात्तरणो हल्पूर्वादित्यणः संप्रसारणमित्यादिक्रमेण यण्ग्रहणानि सर्वाणि रेफेण ग्राह्याणि
स्युः॥ नैचतावतापीष्टनिर्वाहः इकोयणीत्यत्र संख्यातानुदेशेन इकारस्य रेफः उकारस्य यकारः ऋकारस्य वकारः इतिबहुपप्लवप्रसंगात्॥ न राम
नु यथाश्रुतेपि यथासंख्येन निर्वाहो दुरुपपादः। तथाहि॥ विधीयमानतया यवलाः सवर्णान्न गृण्हंतीति चत्वारस्तावद्यणः गुणानामभेद २८

कतयानुनासिक संग्रहेपिपृथग्गणनाविरहात्॥ इकस्तु सवर्णग्रहणात् षट् षष्टिः॥ नचषट्षष्टेरूपस्थापकानांइक्शब्दवाच्यानाम्ॠ
कारादीनांचतुष्ट्वमस्त्येवेतिवाच्यं॥ तृतीयचतुर्थाभ्यामृकारऌकाराभ्यांप्रत्येकंतस्याएवत्रिंशतउपस्थितौसत्याम्ऌकारेरेफादेशस्यऋ
कारेचलकारादेशस्यदुर्वारत्वात्॥ तस्मात्स्थानेंतरतमइत्यनेनैवप्रकृतेनिर्वाहः॥ यथासंख्यसूत्रंतुनंदिग्रहिपचादिषूपयोक्ष्यत(?)इत्ये
वनिष्कर्षः॥ तथात्रइकोरणितिन्यासेपिते नैवनिर्वाहोस्त्वितिचेन्न॥ वैषम्यात्॥ यथाश्रुतेह्यविरोधात्परिभाषाद्वयमपिइकोयणित्यत्रप्रवं
र्तते॥ इकोयथासंख्यमंतरतमोयण्स्यादितिरणितिन्यासेतुपरिभाषयोर्विरोधात्॥ परत्वेनयथासंख्यमेवप्रवर्त्तेत॥ तस्मादनुचितोरेफ
स्यस्तस्थानादप्रकर्षः यथाश्रुतेतुहित्वादिदोषत्रयंदुर्वारमिति॥ अत्रोच्यते॥ रेफस्याविशेषतःश्रुतेनहित्वंप्रतिनिमित्तत्वेनसामान्यतः
श्रुतंकार्यित्वंबाध्यते॥ यथाब्राह्मणाभोज्यंतांमाठरकौंडिन्यौपरिवेविष्टामितिविशेषतःश्रुतेनपरिवेषणेनमाठरकौंडिन्ययोःसामान्यतःप्रा
प्तंभोजनंबाध्यतेतद्वत्॥ यद्यपीहलक्ष्यव्यक्तिभेदेनोभयंसंभवतितथापिसत्यपिसंभवेसामान्यतःप्राप्तंविशेषप्राप्तेनबाध्यतइत्यु[illegible]
न्नदोषः॥ एवंचाचोरहाभ्यामितिसूत्रेयरइतिरेफभिन्नपरमेवेतिस्थितेअनचिचेत्यत्रापितथैव॥ अर्थाधिकाराश्रयणात्॥ तेनहर्यनुभेव
इत्यादावपिरेफस्यनहित्वं॥ नन्वेवंदध्युदकादौयण्नस्यात्॥ विशेषतःश्रुतेनस्थानित्वेनइकांनिमित्तत्वस्यबा[illegible]इतिचेन्न॥ तत्रलक्ष्या
नुरोधेनव्यक्तिपक्षाश्रयणात्व्यक्तिपक्षेहिप्रतिलक्ष्यमसकृल्लक्षणंप्रवर्त्तते॥ यद्वा॥ प्रतिलक्ष्यंभिन्नानांसर्वेषांलक्षणानांतंत्रेणोच्चार
णमिकोयणचीति॥ ततश्चैकामपितात्पर्यतोनिमित्तत्वप्रतिपादनाददोषः॥ नचैवंश्रीशइत्यादावपियण्प्रसंगः॥ व्यक्तिपक्षेपिप्रतिषे
धेपरमेवेतिनियमबलेनतद्व्यक्तिविषयकशास्त्रस्यैवविरहकल्पनात्॥ एवंअपवादविषयेसुत्सिपावित्यादौबोध्यम्॥ परिहृत्यापवादो

विषयं तत उत्सर्गोभिनिविशत इति न्यायात्॥ जातिव्यक्तिपक्षौ च लक्ष्यानुरोधाद्व्यवस्थया आश्रीयेते इति पस्पशायामेवोक्तं॥ तस्माद्दिर्वचनः रस्य परत्युत्तरपदाण्यद्वत्यादिनिर्देशाश्चेह लिंगं॥ भाष्ये तु नेमौ रहौ कार्यिणौ द्विर्वचनस्य किं तर्हि निमित्तमिमावित्युक्तं॥ तत्र हकारग्रहणं रेफस्यानार्थं तस्य यद्बहिर्भूततया यथा न हि त्वे कार्यिता तथा परंतर्भूतस्यापि रेफस्येति॥ एवं अनुनासिकपरसवर्णविधी अपि स्थानेन्तरतमपरिभाषासंस्कृतौ स्थानप्रयत्नोभयोतरतमे एतन्मुरारिः त्वङ्करोषीत्यादौ क्वचित्लब्धावकाशौ अनंतरतमे प्रागुक्तेन [illegible]ते॥ नातिप्रसंगः प्रणादेवेति संक्षेपः॥ अत्र वार्त्तिकं॥ अयोगवाहानामट्सु णत्वं शर्षु जश्भावषत्वे॥ अविशेषेण संयोगोपधासंज्ञालोंत्यविधिद्विर्वचनस्थानिवत्त्वनिषेधाद् इति॥ अस्यार्थः॥ अविद्यमानो योगः प्रत्याहारेषु संबंधो येषां ते ऽयोगाः अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारैर्[illegible] इत्यर्थः॥ वाहयंति निर्वाहयंति प्रयोगमिति वाहाः॥ अयोगाश्चेति कर्मधारयः॥ अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः॥ ते च विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमा इति भाष्यं॥ एतच्च ऋ इति ऋवा ऌ इति ऌवेति विहितयोरीषत्स्पृष्टयोरप्युपलक्षणं॥ तथा च तुल्यास्यसूत्रे भाष्यं॥ तयोरच्त्वं वक्ष्यामीति॥ तत्फलं तु तत्रैव स्पष्टं॥ तत्र यमानां लक्षणं अनुनासिकसंज्ञासूत्रे प्रपंचयिष्यामः॥ एषामट्सूपदेशः कर्त्तव्यः णत्वं फलं॥ उरः केण उरः पेण उर ᳵ केण उर ᳶ पेण अड्व्यवाय इति णत्वं विसर्जनीयजिह्वामूलीयोपध्मानीयैर्व्यवायेपि सिध्यति॥ नायमज्ञाताद्यर्थे कः॥ सोपदादाविति सत्वप्रसंगात्॥ किं तु उरः कायति उरः पाति इति विग्रहः॥ कै शब्दे॥ पा रक्षणे॥ आभ्यामातोनुपसर्गे कः॥ कुप्वोः ᳵ क ᳶ पौ चेति चकारात् प्राप्तः क्षिको विसर्गः॥ न चैवमपि गतिकारकोपपदानां प्राक्सुबुत्पत्तेः समासाभ्युपगमात् सोपदादाविति प्रवर्त्तेतेति वाच्यं॥ तस्य दधिसेचौ धनक्रीतेत्यादिसिध्यर्थमनित्यताया वक्ष्यमाणत्वात् पाशकल्पेत्यादिपरिगणनाच्च॥ प्रोंभणं॥ अट्

कुर्वा डि॰ति सूत्रे नुम्ग्रहणं न कर्त्तव्यं भवति ॥ अथेदमवधेयं ॥ अट्सु त्रि॰यमाण उपदेशोऽकारानंतरमिकारात् प्राक्कर्त्तव्यः ॥ तेन इण्सु अनंत
र्भावात्य ङ्सु पशः सु इत्यादौ इण्कोरित्यधिकृत्य विधीयमानमादेशप्रत्यययोरिति षत्वं न भवति ॥ असु चांतर्भावात्संस्कर्तेत्यत्रानुस्वारादच्च
परत्वमाश्रित्य सकारस्य द्वित्वं कैयटेनाष्टमे वक्ष्यमाणं संगच्छते ॥ न चैवं हरिः करोतीत्यादाविको यणचीति यण्प्रसंगः ॥ विसर्गस्यासि
द्धत्वात् ॥ एवं हरिंपश्यतीत्यादावनुस्वारस्यासिद्धत्वं बोध्यम् ॥ शर्षु चोपदेशः कर्त्तव्यः ॥ जश्भावस्तावत्प्रयोजनं ॥ तथा हि ॥ वार्त्तिकमस्सेउ
ब्ज आर्जव इति धातुरुपध्मानीयोपधः पठ्यते ॥ तत्र झलां जश् झशीति जश्भावे आंतरतम्याद्बकारादेशः ॥ उब्जिता उब्जितुं ॥ शर्षूपदेशाद्द्विनां
तरीयकत्वादेव झत्त्वमप्यापाति ॥ भाष्यकारस्तु नैतन्मेने ॥ तथा हि ॥ उपध्मानीयोपधत्वपक्षे उब्जिजिषतीति न सिध्यति ॥ अभ्यासे बकारमा
त्रश्रवणप्रसंगात् ॥ हलादिशेषेण जकारस्य निवृत्तेः ॥ यदि — तु पूर्वत्रासिद्धं न द्विर्वचने इत्युक्तेः पूर्वं वकारस्य द्वित्वं तदा स्पष्ट एव बकारस्य शेषः
॥ अथ उभौ साभ्यासस्येत्यनेनानित्यता ज्ञापनाद्द्विर्वचनेऽप्यसिद्धत्वमाश्रीयते ॥ औजिढदित्यत्र यथा ॥ तथाप्यभ्यासे उपध्मानीयस्य श्रवणे
अभ्यासे चर्चेति जश्त्वेन बकार एव श्रूयेत ॥ इष्यते त्वभ्यासे जकार इति प्राञ्चः ॥ वस्तुतस्तु द्वितीयपक्षे उपध्मानीयमात्रमभ्यासे श्रूयेत ॥ तेनोच्चा
चारयितुमप्यशक्यं ॥ जश्त्वं तु दुर्लभं ॥ प्रकृतिचरां प्रकृतिचर इत्यष्टमे सिद्धांतयिष्यमाणत्वात् ॥ उपध्मानीये ऽच्चु [illegible] सत्वेन ता[illegible] न्मात्र
द्वित्वापत्त्याऽभ्यासे इकारदौर्लभ्याच्च ॥ किंच ॥ अत्र पक्षे अस्मात् [illegible] ते उपध्मानीयस्य जश्त्वे अभ्युब्जाः समुब्जा इति स्यात् ॥ इष्यते त्वभ्युद्गः
समुद्ग इति ॥ नन्वत एव कुप्वोरित्यधिकारे सोपदादाविति सूत्रे उपध्मानीयस्य चेति वार्त्तिकेन कवर्गे परत उपध्मानीयस्य सकारो विधीयते तत्रा
जश्त्वेन दत्वं विधीयत इति चेत्सत्यं ॥ उपध्मानीयस्य च इति वार्त्तिकारंभ एव तु गौरवाहं इति ब्रूमः ॥ वकारोपधोऽयं इति वृत्तिकारमते तु बका

रस्य ह्रित्वनिषेधः समुद्र इत्यादौ दकारादेशश्चेत्युभयमपि वचनेनैव साधनीयं स्यात्॥ तस्माद्दकारोपध एवायं अभ्युद्गः समुद्ग इति प्रयोगः स्या
त्॥ कथं तर्हि उब्जिता उब्जितुमित्यादि सिध्यतीति चेत्॥ शृणु॥ भुजन्युब्जौ पाण्युपतापयोरित्यस्मिन्कुत्वाभावनिपातनार्थे सूत्रे बकारोच्चारणे
नानुमीयते॥ उब्जेरकुत्वविषये दकारस्य भकारविधायकं बकारविधायकं वा वचनमस्तीति तच्चानुमीयमानं वचनं भुजउदः उब्जेरिति वा॥ उब्जेरि
ति वा उभयथापि स्तोः श्चुना श्चुरित्यस्यानन्तरं कल्प्यते॥ उब्जेः स्तोर्दकारस्यैतदेव॥ श्चुना योगे भकारो बकारो वा भवतीति सूत्रार्थः॥ उब्जेरिति किं
॥ तज्जः॥ श्चुनेति किं॥ अभ्युद्गः समुद्गः इह हि चजोः कु घिण्यतोरिति अत्वे कृते श्चुना योगो नास्ति स्तोः श्चुनेति पदद्वयोपजीवनार्थं ॥स्तो
स्य लएव कल्पनं युक्तं॥ अन्यथा बहुतरकल्पने गौरवं स्यात्॥ एवं उब्जिजिषतीत्यपि सिद्धं॥ नन्द्राः संयोगादय इति दकारस्य ह्रित्वनिषेधात्॥ ... रत्वा
द्गत्वबत्वे॥ पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति वक्ष्यमाणत्वात्॥ अन्तरङ्गत्वाद्गत्वे ... त्वे इत्यपि न॥ असिद्धत्वादेव॥ न च पूर्वत्रा
सिद्धीयमद्विर्वचने इत्यसिद्धत्वप्रतिषेधः शंक्यः द्वित्वे कर्तव्ये सति हि स निषेधः॥ न तु द्वित्व ... पि॥ इह तु नन्द्रा इति सूत्रेण द्वित्वनिषेधे
कर्त्तव्ये निबाधमेवासिद्धत्वमिति दिक्॥ अथवा मास्तु वाक्यशेषानुमानं भुजन्युब्जाविति निपातनादेव बकारोस्तु॥ न चैवमसिद्धतावि र
हाद्दकारस्यैव द्वित्वं स्यादिति वाच्यं॥ दकारोपधनिर्देशसामर्थ्यात् ज्जिशब्दस्य द्वित्वे कृते ततो दकारस्य बकारप्रवृत्तेः॥ न चास्मिन्पक्षे अभ्यु
द्ग इत्यादावपि बकारप्रसंगः॥ उक्तविषय एव बकारो निपात्यत इत्यभ्युपगमात्॥ नन्वेवं कत्वविषये चरितार्थत्वात्कथं दकारोपदेशस्य
सामर्थ्यमुक्तं॥ येन द्वित्वानन्तरमेव बकारः प्रवर्त्तेतेति चेत्॥ अनभिधानादतो घञादिमास्तु निपातनं चैवमविशेषेणास्तु॥ अभ्युद्गः स
मुद्ग इत्येतन्नोब्जेरूपं॥ किंतु उपसर्गद्वयपूर्वकाद्गमेरन्येष्वपि दृश्यत इति डप्रत्ययः॥ व्युत्पत्तिमात्रं चेदं॥ रूढिशब्दत्वात्॥ समुद्गकः

संपुटकइत्यमरः॥तदेवमयोगवाहानां शर्षूपदेशस्यजश्भावरूपंप्रयोजनंवार्त्तिकमते अस्ति॥भाष्यकारमतेतुनास्तीतिस्थितं॥तथाषत्वमपिप्र-
योजनंसर्पिःषुधनुःषु॥नुम्विसर्जनीयशर्व्यवायेपीतिसूत्रेविसर्जनीयग्रहणंनकर्त्तव्यंभवति॥शर्व्यवायइत्येवसिद्धत्वात्॥नुम्ग्रहणंतू
भयथापिकर्त्तव्यमेवनुम्स्थानिकेनैवानुस्वारेणव्यवधानेयथास्यात्॥इहमाभूत्॥पुंस्विति॥नुम्ग्रहणंहिस्वस्थानिकस्यानुस्वारस्यल
क्षकं॥अन्यथाप्रसंगात्॥नहिइण्कवर्गाभ्यामुत्तरःसकारोनुमाव्यवहितःषत्वविधौसंभवति॥अनुस्वारेषत्वस्यासिद्धत्वादित्याहुः
॥अस्तुवास्थानिवद्भावेननुम्त्वं॥तथापिस्वाश्रयस्यानुस्वारत्वस्यापिसत्वात्शर्त्वेनैवसिद्धेनियमार्थतायुक्ता॥नियमश्चसजातीयापेक्ष
इति अनुस्वारेणव्यवायेचेद्भवतिनर्हिनुमैवनत्वन्येनेतिफलितं॥वस्तुतस्तु अतिदेशंप्रति अनुस्वारस्यासिद्धत्वादतिदेशएवदुर्लभः॥सु
ह्निसुइत्यादौविधायकत्वसंभवेनियामकत्वानुपपत्तिश्च॥तथापिलक्ष्यानुरोधाल्लक्षणेत्येवर्थपर्णं॥यथा॥कुप्वाङ्सूत्रे॥नत्रप्रेन्वनादोण
त्वंमाभूत् प्रेंभणादौचस्यादित्येवमर्थंलक्षणेतिचेत्॥इहापिसुहिन्सुपुंस्वित्यादौमाभूदितितुल्यं॥णत्वविधावनुस्वारमात्रेलक्षणाष
त्वेनुम्स्थानिकएवेत्यन्यदेतत्॥अस्मिंश्चपक्षेशर्षूपदेशोपिअल्त्वमिवहल्त्वयत्वेअपिनान्तरीयकत्वादेवसिद्धे॥तत्फलंतूत्तरंवार्त्ति
कव्याख्यानावसरमनन्तरमेवस्फुटीभविष्यति॥तथाखर्त्वमपि॥तेनकस्कःकःपौचेतिसूत्रांतर्गतोविसर्गःसिद्धः॥एवंचसौत्रनिर्देशोनै
वोक्तवार्त्तिकस्यार्थोज्ञाप्यतइतिबोध्यम्॥अनेनसौत्रेविसर्गग्रहणमपिवोपष्टभ्यशर्षूपदेशंप्रत्याचक्षाणापर्याश्रलमट्सूपदेशपरंवृ-
त्तिग्रंथंव्याचक्षाणाःपरास्ताः॥अट्सूपदेशेनअल्त्वअट्त्वयोर्लाभेपिहल्त्वयरत्वालाभात्॥तत्फलस्यचवक्ष्यमाणत्वात्॥नचा
स्त्वेवचयकारोत्तरमुपदेशाद्लाभइतिवाच्यम्॥तथासतिपयःस्विसाध्ना विणःपरत्वेनषत्वापत्तेः॥अचूत्वासिद्ध्यासमःसुटीस्यस्य

प्र·कौ· वैःपटादिग्रंथविरोधापत्तेश्चेतिदिक्॥ अविशेषेणेत्यादिवार्त्तिकस्यायमर्थः॥ यत्र यत्रप्रदेशे प्रयोजनं दृश्यते तत्र तत्रोपदेशः कर्त्तव्यः प्रयोजना
३१ नितुसंयोगसंज्ञादीनि पंचेति॥ तथाहि॥ वार्त्तिकमतेउञ्ञेरूपभ्मानीयोपधतयाउपध्मानीयस्यहल्संज्ञांविनासंयोगसंज्ञान सिद्ध्यतिज
श्त्वंत्वमिद्धं।ततश्चसंयोगेगुर्विति गुरुसंज्ञाया अपिविरहात् उभ्रूक इस्यत्रगुप्तीरन्‌व इतिप्लुतोनस्यात्॥ तस्मात्तु तुग्रुक्संज्ञासंयोगसंज्ञाह
ल्संज्ञानांउत्तरोत्तरसापेक्षतया प्लुतसिध्यर्थं हल्संज्ञा एषितव्या॥ तदेतदभिप्रेत्योक्तं संयोगसंज्ञाप्रयोजनमिति॥ त[illegible]पधासंज्ञापि प्रयो
जनं॥ निष्कृतंदुष्कृतं इदुदुपधस्य चेतिषत्वं यथास्यात्॥ भाष्यकारस्त्वाह॥ इदुदुपधस्यानिको योविसर्गइतिव्याख्यानान्नेदं प्रयोजनं॥ उप
धाग्रहणमत्याख्यानां ह्य॥ इदुद्भ्यांपरस्यविसर्गस्येत्येव इष्टसिद्धेरिति॥ अलोन्त्यविधिश्च प्रयोजनं॥ वृक्षस्तरतिविसर्जनीयांत[illegible] पदस्य
स इतिपक्षेअंत्यस्यसत्वं यथास्यात्॥ पदस्ययोविसर्जनीय इतिव्याख्यानान्निर्दिश्यमानस्येतिपरिभाषया वासिद्धत्वादिदमपिनिर्प्रयोजनं
॥ द्विर्वचनंच प्रयोजनं॥ उरःकः उरःपः अनचिचेति अचउत्तरस्ययरो विधीयमानं द्वित्वं सिद्धंभवति॥ तथा स्थानिवद्भाव प्रतिषेधोपि प्रयोज
नम्॥ यथाउरःकेणेत्यादौ॥ अड्व्यवायेतिणत्वं सिद्धं भवति॥ एवंव्यूढोरस्केनेत्यादावपि प्राप्नोति स्थानिवद्भावात्सकारस्य तत्रानल्विधाविति
प्रतिषेधोऽलत्वेसमाश्रीयते [illegible]॥ नच पूर्वत्रासिद्धेनस्थानिवदितिनिषेधोस्त्विति वाच्यं॥ नपदांतसूत्रशेषभूतस्यनस्य भचःपरस्मिन्नित्येत
द्विषयकत्वात्॥ स्थानिवद्भावप्रतित्रिपादीस्थस्यासिद्धतयान्यायसिद्धं तदितिपक्षेतु नेदंप्रयोजनं॥ उरःकेणेतिणत्वं संस्कर्त्तेत्यत्र सकारस्य
द्वित्वंचाधिकंप्रयोजनंबोध्यमितिदिक्॥ यद्यपि सर्वमिदं अट्शरोरूपदेशेनसिद्ध्यत्येव तथापि वार्तिकाक्षररचनाया द्वैधापिसंभव इतिभावः॥ राम
लण्॥ अत्राकारोनुनासिकः प्रतिज्ञायते॥ ननु हकारादिष्विवोच्चारणार्थः॥ तेनोरण्रपर इत्यत्र रप्रत्याहारग्रहणंभवति॥ प्रत्याहारग्रहणेज्ञाप ३१

कस्तु ऋकारऌकारयोः सवर्णविधिरिति वार्तिकनिर्देशः ॥ ननु अइउणित्यत्रानुबन्धो णकारः स एवेहानुबध्यते तेनाण्ग्रहणेष्विण्ग्रहणेषु
च पूर्वेण परेण वेति संदेहः प्राप्नोति। तस्मादसंदेहायेह अनुबंधांतरमेव कुतो न कृतमिति चेत्॥ न। व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदे-
हादलक्षणमिति परिभाषां ज्ञापयितुमनुबन्धस्यैव पुनरनुबंधात्॥ ञमङणनम्॥ झभञ्॥ अत्र मकारानुबंधो भाष्ये प्रत्याख्यातः॥ स हि प्र-
त्याहारत्रये उपयुज्यते॥ अम् यम् ङम् इति तच्च त्रयं ञकारेणैव निर्वहति॥ तथा हि॥ पुमः खय्यम्परे इत्यत्र॥ न च ञकारभकारपरः खयस्ति
॥ येनातिप्रसंगः स्यात्॥ तथा हलो यमां यमि लोप इत्येव पाठ्यं॥ न च ञकारभकारौ ञकारभकारपरौ स्तः हलुत्तरयोस्तयोः संभवे तु झरो
झरि इति लोपेन भाव्यमेव॥ तथा ङमो ह्रस्वादचि ङमुण्नित्यमिति पाठ्यं॥ न च ञकारभकारौ पदांतौ स्तः॥ उज्झेर्लभेश्च क्विपि तौ स्त एवेति
चेन्न॥ उज्झेर्दीप धत्वे संयोगांतलोपे सति उदिति रूपाभ्युपगमात्॥ लभेस्तु जश्त्वविधानात्॥ एवमपि आगमिनस्त्रयो ङणनेभ्यः परे
अचः आगमास्तु पंचेति संख्यातानुदेशो न स्यादिति चेत् न॥ यथासंख्यमित्यत्र हि विध्यर्थप्रमितिवेलायां निर्दिश्यमानगतसंख्यसाम्य-
मांश्रीयते॥ न तु लक्ष्यसंस्कारवेलायां प्रयोगगतं॥ तस्मान्मास्तु मकारोऽनुबंध इति स्थितं॥ घढधष्॥ जबगडदश्॥ खफछठथचटतव्॥ क-
पय्॥ शषसर्॥ हल्॥ इति माहेश्वराणि अक्षरसमाम्नायसूत्राणि॥ अत्रायं संग्रहः॥ एकस्मान्ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः॥ ज्ञे-
यौ चयौ चतुर्भ्यो रः पंचभ्यः शलौ षड्भ्य इति॥ अस्यार्थः॥ ङञणवटा एकस्मात्परे ग्राह्याः स्युः॥ तथा हि॥ ङकार एकस्मादेव परो ग्राह्यः एङिपर-
रूपमिति यथा॥ ननु षिड्गिदादिभ्यो ङस्यतिवक्तिख्यातिभ्यो ङित्यकारणग्रहणमस्त्विति चेन्न॥ आदिरंत्येनेत्यत्राणुदित्सवर्णस्य चेत्यतो
प्रत्यय इत्यनुवृत्तेः॥ अत एव रोः सुपीति न प्रत्याहारग्रहणं॥ सुपि चेत्यत्र तु अप्रत्यय इति प्रतिषेधो नास्ति॥ यञादाविति विशेषणात्॥ उ

प्र॰कौ॰ न्तरत्रच बहुवचने झलीति विशेषणात्॥ सुप्तिङंतंपदमित्यत्रतिङ् साहचर्यात् शासेइदङ्हलोरित्यत्रतुअङ्ग्रहणसामर्थ्यादपिप्रत्या
३२ हारग्रहणंनभवति॥ अङादौहलादौचेतिहिव्याख्याने अङ्हलोरितिव्यर्थमेवस्यात्॥ द्विविधाएवहि क्ङितःप्रत्ययाः अङादयोहलाद
यश्च॥ व्यतिशासेइत्यत्रतुक्ङित्वमेवनास्ति॥ अटामहेकादेः स्थानिवद्भावेन अझादित्वाच्च॥ ऋदृशोऽङीत्यपिनप्रत्याहारः॥ ऋकारांते
षु ऋच्छत्यॄतामितिगुणविधानात्तज्ज्ञापकात्॥ सनिचइङश्चेतिनप्रत्याहारः॥ इकोझलितिकित्वविधानात्॥ अज्झनगमांसनीतिदीर्घ
विधानाच्च इङंतानांसनिगम्यादेशेहिसति उदात्तेतसूत्रद्वयंनिर्विषयंस्यात्॥ परिमाणाख्यायांसर्वेभ्यः इङश्चेत्यपिनप्रत्याहारः॥ वै
यर्थ्यप्रसंगात्॥ तथाहि॥ इकारांतेभ्यएरचाभाव्यं॥ उकारांतेभ्यऋदोरवित्यप्॥ लृकारांतास्तुनसंत्येवन एजंतानांअपि अनैमित्तिके
न आत्वेनप्रत्ययोत्पत्तेः प्रागेवभाव्यं अतःप्रत्ययोत्पत्तिवेलायामेजंतानसंत्येव॥ ऋदंताः [illegible]अवशिष्यंते॥ तत्रउरित्येवलाघवाद्ब्रूया
त्॥ वस्तुतस्तुसामान्यलक्षणेनैवऋदंतेषुघञः सिद्धत्वात्सूत्रमेवेदंनकुर्यात्॥ अथोच्येत [illegible] इङश्चेत्यारंभसामर्थ्यादिवर्णोवर्णौ वे
ष्येव अजब्भ्यांसह वैकल्पिकोऽप्यत्र समाविशत्विति॥ तदपिन॥ एवंहिसति अजपोर्विधावेववाग्रहणंकुर्यात्॥ क्ङिङ्जीनांणाविति नप्रत्या
हारः॥ क्रीङ्ज्योः पृथक्[illegible]वैयर्थ्योपत्तेः॥ नचेकारांतानांमध्येएतयोरेवेतिनियमार्थमितिवाच्यं॥ एवंहिइकइत्येवब्रूयात्॥ एङंतानां
सामान्यलक्षणेनैव आत्वस्यसिद्धत्वात्॥ इङ्धार्योरित्यपिनप्रत्याहारः॥ धारिणासाहचर्यात्॥ तस्मात्सिद्धंङकारएकस्मादेवेति
॥ तथाञकारोप्येकस्मादेव॥ अतोदीर्घोयञीति॥ तथा अइउणित्येषणकारोप्येकस्मादेव॥ अणितियथा॥ अथेणः षीध्वमित्यादौ वि- राम
णप्रत्याहारोप्यनेनकृतोनेतिचेन्न॥ अचिश्नुधातुभ्रुवांय्वोरित्यत्रइकारोकारयोः स्वरूपेणनिर्देशात्॥ अन्यथाहिसंहितायांमात्रास्ता ३२

घवात्पदच्छेदेप्यर्द्धमात्रालाघवादिणित्येव ब्रूयात्॥ व्याख्यानाच्च पूर्वेण न तु परेण ग्रहीष्यते॥ व्याख्यानं च सिद्धान्तेपि शरणं॥ घोरित्यपि हि निर्देशे किं ह्रस्वयोर्ग्रहणमुत दीर्घयोरुत यकारवकारयोरिति संदेहः स्यादेव॥ एवं च एच इग्घ्रस्वादेश इति सूत्रे इग् इत्येव प्रतिपत्तिलाघवार्थं वक्तव्ये इग्ग्रहणमपीह लिंगं॥ इण्ग्रहे हि तत्र यथासंख्यप्राप्तिरेव नेति न तत्परिहाराय यतितव्यमिति दिक्॥ एवं वकारोप्यकस्मादेव न शक्यं प्रशानिति॥ एचोयवायाव इति सूत्रे अव् इति न प्रत्याहारः आयादिसाहचर्यात्॥ एवं टकारोप्येकस्मात्॥ अट्कुप्वाङिति॥ ह्राभ्यां षः॥ एकाचो बशो भष् झषन्तस्य स्ध्वोरिति यथा॥ ककारस्त्रिभ्यः॥ अकः सवर्णे॥ इको यण्॥ इमुमुक्तांतात्क इति यथा॥ लणित्यत्रत्यो णकारोपि त्रिभ्यः॥ अणुदित्सवर्णस्येत्येकस्मादेवाण्॥ इणः षीध्वमित्यादयस्तु सर्वे इणः॥ इको यणित्यादौ यण् च॥ अत्र यण् तावत्पूर्वेण न संभवत्येव॥ इण् तु संभवन्नपि ज्ञापकात्त्यक्तः। अणस्तु उभाभ्यां ग्रहणे स्थिते क्व पूर्वेण क्व वा परेणेति विवक्षायां ग्रहणकशास्त्रे परेणैव अन्यत्र तु पूर्वेणैवेति सिद्धान्तः॥ उक्तं हि व्याख्यानतो विशेषप्रतिपत्तिरिति॥ न हि परेष्वपि षांकयोरित्यादौ व्याख्यानादन्यन्नियामकमस्ति॥ किंच॥ अण्ग्रहणानि तावत्त्यंच। उरण् रपरः अणुदित्सवर्णस्य॥ ढ्रलोपे पूर्वस्य दीर्घोणः केणः अणोप्रगृह्यस्येति॥ तत्र उरण् रपर इति तावत्पूर्वेण॥ ऋत इद्धातोरिति धातुग्रहणात् ज्ञापकात्॥ तद्धि मातॄणामित्यादिव्यावृत्त्यर्थं क्रियते॥ परेणग्रहणे नामीति दीर्घस्यापि रपरत्वापत्त्या व्यावर्त्याप्रसिद्धिः॥ ननु चिकीर्षतीत्यत्र अज्झनगमां सनीति दीर्घे रपरत्वे च सति उपधायाश्चेतीत्वमपि न स्यात्॥ तद्वन्मातॄणामित्यत्रापि प्रसंगे तद्व्यावृत्तेः कृतया उत्तरार्थं धातुग्रहणं भविष्यतीति चेत्॥ न॥ एवं हि सत्युत्तरसूत्रे एव कुर्यात्॥ इह करणं ज्ञापकमेव॥ तथा च वक्ष्यति॥ उदोष्ठ्य उत्तरार्थं तु इह किंचित्र पोइतीति॥ किंच॥ अण्ग्रहणसामर्थ्यादपि पूर्वेणैवायं॥ यदि हि परेण स्यात् उरजित्यज्ग्रहणमेव कुर्यात्॥ कृतिः कृतं प्रकृतं नॄः पाहि मातॄणामित्या

श.कौ. दौआद्युदात्तानुदात्तस्वरितानुनासिकदीर्घाणांरपरतायाः परेणाण्ग्रहेणापादयितव्यायास्तावतापिलाभात्॥ कर्त्तॄकार ऋ इत्यादौगुणवृद्धि
३३ प्रसंगेएचामवर्णस्यचाविशेषादूपरत्वस्यविकल्पेनप्रसंगइत्यपि अज्ग्रहणेनसिध्यत्येव।स्यादेतत्॥ कर्त्रर्थमित्यत्रइकोयणिरपरत्वेरे
फद्वयश्रवणार्थमण्ग्रहणंस्यात्॥ नह्येतदज्ग्रहणेनसिध्यति। हलोयमामितिलोपस्तुवैकल्पिकः॥ झयोहोऽन्यतरस्यामित्यतोऽन्यतर
स्यांग्रहणानुवृत्तेः॥ अत्रचज्ञापकंग्रहणकशास्त्रेणग्रहणं। तद्धिसंय्यंत्ता संवत्सरः यल्लोकमित्यादौपरसवर्णस्यसानुनासिकस्ययरग्रह
णेन ग्रहणादनचिचेति द्वित्वेकृतेपक्षेयवलानांत्रिकस्यश्रवणार्थंक्रियते हलोयमामित्यस्यनित्यत्वेतुव्यर्थमेवतत्स्यात्॥ यद्यपिगुणाना
मभेदकत्वेनैवसानुनासिकयवलानांद्वित्वसिद्धेर्ग्रहणकशास्त्रेअज्ग्रहणमेवोचितंनत्वण्ग्रहणंतथापिगुणाभेदकाइत्यप्यर्थं ज्ञाप
यितुमण्ग्रहणंभेदकाभेदकपक्षयोश्चजातिव्यक्तिपक्षयोरिवलक्ष्यानुरोधाद्व्यवस्था॥ अतएवचतसर्याद्युदात्तनिपातनमित्यादि
संगच्छते॥ अतएवचाष्टनआविभक्तावित्यादाविदमस्त्यसाद्यत्वेचानुनासिकोनेतिवक्ष्यामः॥ यत्तुविकल्पानुवृत्तौज्ञापकान्तरमव
र्णनं॥ अनुवर्त्ततेविभाषाशरोचियद्वारयत्ययंद्वित्वंनित्येहितस्यलोपेनिषेधार्थोनकश्चित्स्यादिति॥ तत्तुभाष्येदूषितं॥ तथाहि॥ लोप
स्यनित्यत्वे अचोरहाभ्यामितिद्वित्वेनारंभसामर्थ्यात्तद्बाधः॥ द्विविधाएवहिपरःयमोझरश्चेति॥ तत्रहलोयमामितिझरोझरीतिच
लोपेकृतेद्वित्वंवृथास्यात्॥ किंतर्हितयोर्योगयोरुदाहरणमितिचेत्॥ यत्रांतरेणद्वित्वंव्यञ्जनत्रयंलभ्यते॥ यथाआदित्योदेवतास्यं
आदित्यःप्रत्तंभवत्नमिति॥ एवंस्थितेचतुर्ष्वित्यत्रापियदिद्वित्वंस्यात्तर्हिलोपोनस्यादेव॥ ततश्चसार्थकः शरोचीतिनिषेधःकथंवि राम.
भाषानुवृत्तिंज्ञापयेदित्यास्तांतावत्॥ सर्वथापिविकल्पानुवृत्तेःस्थितत्वात्साक्षिकरेफद्वयश्रवणार्थे अण्ग्रहणमस्त्विति॥ अत्रोच्यते ३३

॥कर्त्रर्थमित्यादौ सत्यपि रपरत्वे रेफद्वयश्रवणं दुर्लभम्॥ रोरीति लोपात्॥ न च तत्र पदान्तस्येति व्याख्यातुं युक्तं जर्गृधे र्लेड्. अजर्घाः पा
स्पर्द्धे र्लेड्. अपास्पाः इत्यादेरसिद्धिप्रसंगात्॥ न चाण्ग्रहणसामर्थ्यात्तद्बाधः पूर्वेणापि ग्रहणे अबाधेनैवोपपत्तेरिति दिक्॥ तस्माद्वा तु
ग्रहणसामर्थ्यादण्ग्रहणसामर्थ्याद्वा उरण् रपर इति पूर्वेण ग्रहणमिति स्थितं॥ वस्तुतस्तु धातुग्रहणमेव ज्ञापकं॥ अण्ग्रहणस्य त्वा कृ
तिरित्यादौ लपरता फलमित्यपि शक्यत्वात्॥ अणुदित्सवर्णस्य चाप्रत्यय इति तु परेणैव॥ उर्ऋदिति लिंगात्॥ तत्र हि कृतसंशब्देन इत्य॰
स्मात्स्वरादिण्यन्तात् लुङि चङि अचीकृतदित्यत्र ऋकारस्य दीर्घस्यापि स्थाने ह्रस्व एव यथा स्यादित्येवमर्थं तपरकरणं कृतं ग्रहणकशास्त्रेण पू
र्वेण ग्रहणे तु दीर्घस्य ऋकारस्य न स्थानित्वं न वादेशत्वं प्रसक्तमिति व्यर्थं तपरत्वं स्यात्॥ ननु सत्यपि परेण ग्रहणे उर्ऋदित्यत्र तपरत्वं व्यर्थमे
व॥ भाव्यमानेन सवर्णग्रहणाप्रसक्तेरिति चेन्न॥ वक्ष्यति हि तत्र वृत्तिकारः॥ न चायं भाव्यमानोऽण् किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपेणा
भ्यनुज्ञायत इति॥ कृते तु तपरत्वे तद्बलादेव दीर्घस्थाने भाव्यमानतापि लभ्यत इत्यन्यदेतत्॥ तस्माद्ग्रहणकशास्त्रेण परेणेति स्थितम्॥
तत्फलं तु उरण् रपर इत्यत्र उरित्यनेन ऋकारस्य ग्रहणात् तद्द्वारा तोरुदोष्ठ्यपूर्वस्येत्यादौ रपरत्वसिद्धिः॥ ढ्रुलोपे पूर्वस्य दीर्घोऽण इत्यत्रापि ह
लामणामसंभवादेचां तु विशेषाभावादगर्थमेवाण्ग्रहणं स्यात्॥ तत [illegible] इत्येव सिद्धमित्यण्ग्रहणसामर्थ्यात्पूर्वेण॥ ननु वृहू उद्यमने
अस्मात्तृचि ऊदित्त्वादिड्भावे गुणे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रेफस्य दीर्घस्थानसाम्याद्ऋकारे ढलोपस्यासिद्धत्वाद् उपधायाश्चेतीत्वे पूर्व
वद्गुणे वोढेति यथा स्यादिति परेण ग्रहणं स्यात्॥ एवं तर्हि तृतीयेति निर्देशाल्लिंगात्पूर्वेणैव॥ परेण हि ग्रहणे हल इत्यत्राप्यस्यैवाण्ग्रहणस्यानुवृत्ते
स्त्रेः संप्रसारणे कृते दीर्घः स्यात्॥ तथा दृढादिषु दृढशब्दस्य पाठोपि ज्ञापको बोध्यः॥ वृहू उद्यमने अस्मान्निष्ठायां ढत्वधत्वष्टुत्वढलोपेषु कृतेषु

ढ इति रूपम्॥ दंत्योष्ठ्यादिश्चायं॥ उदूहरस्कः सदृमूलमिंद्रेतिदर्शनात्॥ मूलमंस्यावहींति सूत्रेहरदत्तादिग्रंथेस्पष्टमेतत्॥ तुसादौस्तत्वात्त्वर
त्वेनपठ्यमानयोः तृहूस्तृहू हिंसायामिति धात्वोरपिनिष्ठायां तृढः स्तृढ इतिरूपंबोध्यम्॥ दृढः स्थूलबलयोरितितु इडभावोनकारहकार
योर्लोपो निष्ठातकारस्य ढत्वंच निपात्यते नतु असिद्धकांडस्थढत्वादेरिह प्रवृत्तिरिति वक्ष्यते॥ वेनपरिवृढव्यपायि द्रढी कन्येत्यादौलघुत्व
मपुक्तौणेरपादेशः ष्यङ्भावश्चसिध्यतीतिदिक्॥ तेनढ्लोपसूत्रेप[illegible]ग्रहणपक्षेपि तृढतृढस्तृढेष्वेवातिप्रसंगो न तु दृढेपीतिविवे
कः॥ केण इत्यत्रपरेणणग्रहणे गोक्वनौकागीष्का उपानत्काच तुष्कमितिधत्वविसर्जनीययोरसिद्धत्वाद्ध्रस्वप्रसंगः तथापीहह्रस्वश्रुत्योपस्थि
तस्याचइत्यस्यअबाधायपूर्वेणभविष्यति॥ अबाधेनोपपत्तौहिबाधोनन्याय्यः॥ अणोप्रगृह्यस्येत्यत्रपरेणसतिकर्त्ते॥ अग्ने॥ वा[illegible]पचौप
पौ॥ मालामाचक्षाणोमाल्॥ वृक्षवयतेरप्रत्ययः वृक्षव्॥ अत्रापिप्राप्नोति॥ रेफवर्जिता अंतस्थाः सानुनासिकनिरनुनासिकभेदेनद्विधेत्युक्त
त्वात्॥ तस्मादिह अप्रगृह्यस्येतिप—र्युदासादचएवानुनासिकोबोध्यः॥ नचाणग्रहणसामर्थ्यान्नत्रिवयुक्तन्यायस्यबाधः॥ तस्यप्रकारे
णाप्युपपन्नत्वात्॥ अत्रलण्सूत्रेस्थित्वावृक्षव्शब्दमित्थंकैयटोव्युत्पादयत्। वृक्षंवृश्चतीतिक्विपिकृतेवृक्षवृश्चमाचष्टइतिणिचिटिलो
पेचकृते वृक्षवयतेर्विचि वृक्षव्इति भवति। क्विपितुकौलुप्तंनस्थानिवत्॥ क्वौविधिप्रतिनस्थानिवदित्युभयथापिस्थानिवद्भावनिषेधात्संप्र
सारणप्रसंगो लोपोव्योर्वलीतिलोपंबाधित्वातदपवादस्यऊठःप्रसंगश्च॥ विचितुस्थानिवद्भावाद्वलनिमित्तोवलोपोनभवति॥ नन्वेवमपि
वृक्षव् करोतीत्यत्रहलिसर्वेषामिति प्राप्नोति॥ नचस्थानिवद्भावः॥ पूर्वत्रासिद्धेतन्निषेधादितिचेन्न॥ भोभगोइत्यनोशिइत्यनुवर्त्यअशि
हलितेहि धानादिति॥ नचविच्पक्षेपिणिचः प्राग्भाविनंक्विपमेवाश्रित्यऊठ्प्रसंजनीयः॥ अंतर्भूतक्विपाश्रय तथाअन्तरंगेकर्त्तव्येबहि

भूतणिजपेक्षतयाबहिरंगस्यटिलोपस्यासिद्धत्वात्॥ इदंत्विहवक्तव्यं॥ किंचपक्षेप्येकदेशविकृतस्यानन्यत्वेनत्रश्चतिग्रहणेनग्रहणाद्व
श्चेतिषत्वंदुर्वारं॥ नचणिलोपस्यस्थानिवत्वं॥पदान्तविधौनेतिनिषेधात्॥ पूर्वत्रासिद्धेनेतिनिषेधाच्च॥ तस्मान्नायंवृश्चतिरपितुव्रेतिर्वा
तिर्वावृक्षंवेतीतिवृक्षवीः वृक्षंवातीतिवृक्षवाः वृक्षव्यंवृक्षवांवा आचष्टेवृक्षवक्विप्॥ नतुक्विप्॥ ऊठ्प्रसंगात्॥ क्वौविधिंप्रतिस्थानिव
त्वनिषेधात्॥ तथाचवृदेवपतेर्दपूरितिसिद्धांतितं॥ नचैवमपिलोपोव्योरित्यस्यप्रसंगः॥ स्थानिवत्वात्॥ नचपदान्तविधित्वम्॥ पदान्त
श्चेत् विभीयतइत्यर्थात्॥ लोपस्यचानवयवत्वात्॥ विभावितंचेदं भोभगोइतिसूत्रे कैयटेनेतिदिक्॥ यत्तुहलिसर्वेषामितिसूत्रेहरदत्तेनो
क्तं॥ वृक्षवृकरोतीत्येवंरूपः प्रयोगोनास्त्येव॥ अनभिधानात्॥ लण्सूत्रेनपदान्ताहलोणः सन्तीतिभाष्यकारोक्तेश्चानभिधानंनिश्चीय
इति॥ तच्चिन्त्यम्॥ लण्सूत्रभाष्येनपदान्ताः परेणः सन्तीतिपाठात्॥ अप्रगृह्यस्येतिपर्युदासाश्रयणेनाचामेवकार्यभाक्त्वादितरेकार्य
भाजोनसंतीत्येवंपरतयाकैयटेनतद्विवरणाच्च॥ ननुचापमस्तिकर्तइत्युत्तरभाष्येदूषितत्वाच्च॥ त्वदुदाहृतपाठेउत्तरभाष्यस्यासंगतिसंभ
वालाभाच्च॥ अतएवभोभगोइतिसूत्रेभाष्यकारवृत्तिकारादिभिःसर्वैरपिवृक्षव इत्युदाहृतम्॥ स्वयमपीहतथैवोदाहृतमितिपूर्वापर
स्वग्रन्थविरोधोभाष्यवृत्तिकैयटादिसकलमहाग्रंथविरोधोमूलयुक्त्यभावश्चेतितिष्ठतुतावत्॥ प्रकृतमनुसरामः॥ मकारोपित्रिभ्यो
ग्राह्यः॥ पुमःखय्यम्परे॥ हलोयमांयमिलोपः॥ ङमोह्रस्वादचीति॥ चकारश्चतुर्भ्यः इकोयणचि॥ इचएकाचोम्॥ एचोयवायावइति
॥ पूर्वौतुताभ्यामैच्॥ यकारोपिचतुर्भ्यः॥ अनुस्वारस्ययपि॥ मयउञः॥ झयोहोन्यतरस्यां॥ पुमःखयीति॥ रःपंचभ्यः॥ यरोनुनासिके
॥ झरिसवर्णे॥ खरिच॥ अभ्यासेचर्च॥ वाशरि॥ शकारःषड्भ्यः॥ भोभगोअघोअपूर्वस्ययोशि॥ हशिच॥ नेड्वशिकृति॥ झलांजशो

झ्रशि। एकाचो बशो भष्॥ लकारोपि षड्भ्यः। अलोन्त्यस्य॥ हलि सर्वेषां॥ इड्वलादेः रलो व्युपधात्॥ झलां जश्॥ झल इगुपधादिति॥
अयं च चतुर्दशसूत्रीस्थैर्हल्भिरिड्भिः संपन्नानां अष्टाध्याय्यां व्यवहृतानां प्रत्याहाराणां संग्रहः॥ तेन सुप्तिङादेरप्रत्याहारस्याञमं ताङ्ड्
त्युणादिषु व्यवहृतस्य ञम् प्रत्याहारस्य यमिञमन्तेष्वनिडेकद्व्यत इति व्याघ्रभूतिना व्यवहृतस्य च चयो द्वितीयाः शरि पौष्करसादे
रिति वार्तिककृता व्यवहृतस्य चय् प्रत्याहारस्य चाधिक्येप्यदोषः॥ संख्यानियमश्चायमुत्तरं त्र एकचत्वारिंशाड्यव्यवहारादर्थ्यवसीयत इति
बोध्यम्॥ अत्र श्लोकवार्त्तिकं॥ प्रत्याहारेऽनुबंधानां कथमज्ग्रहणेषु न॥ आचारादप्रधानत्वाल्लोपश्च बलवत्तरः॥ प्रत्याहारोक्षरसमाम्नायः तत्र
येनुबंधाः तेषामज्ग्रहणेष्वित्युपलक्षणं॥ अजादिप्रत्याहारग्रहणेषु॥ कथं नेति॥ ग्रहणमिति शेषः॥ आदिरन्त्येनेति सूत्रेण हि अक्षरसमाम्नायाच
काराद्वर्णानां भवन्ती अच् संज्ञा मध्यस्थत्वाविशेषादिकारादीनामिव णकारककारङकाराणामपि स्यात्॥ ततश्च दधिणकारः दधिकका
रः दधिङकार इत्यादौ यण स्यात्॥ एवं अड्ग्रहणेञ्चकारस्यापि ग्रहणाद्दुचीनामित्यादावड्व्यवाय इति णत्वं स्यात्॥ एवमिण्ग्रहणेन ककार
ग्रहणाद्दुवि ध्वे इत्यादौ विभाषेट इति ढः स्यादिति पूर्वपक्षः पूर्वार्द्धस्यार्थः॥ उत्तरमाह॥ आचारादिति॥ आचारोऽत्र सूत्रकृतो निर्देशः॥ उणादयो
बहुलम्॥ तृषिमृषिकृशेः॥ ङसिङसोश्चेत्यादौ यणो ऽकृतत्वान्मध्यस्थानामप्यनुबंधानां संज्ञित्वं नेति ज्ञाप्यत इत्यर्थः॥ समाधानांतरमाह॥ अ
प्रधानत्वादिति॥ अणित्यादिसंज्ञाः प्रणेतुं तद्रूपप्रतिपादनाय ह्यनुबंधा उच्चार्यन्ते॥ ततश्च परार्थमुपादीयमानतया तेषामप्राधान्यं॥
॥ इतरेषां तु स्वार्थमुपादीयमानत्वात्प्राधान्यं॥ तेन तेषामेव संज्ञा न त्वनुबंधानां॥ प्रधानाप्रधानयोः प्रधाने का
र्यसंप्रत्यय इति न्यायात्॥ नन्वेवमकारस्याच् संज्ञा न स्यात्॥ संज्ञाप्रतिपादने चकारस्येव तस्याप्यंगत्वाविशेषादिति चेन्न॥ स्वरूपमित्यनुवृत्त्या

आदेरपिसंज्ञित्वात्॥ स्वंरूपंचादेरेवगृह्यतेनान्त्यस्य॥ सर्वनाम्नांप्रधानपरामर्शकतायाऔत्सर्गिकत्वात्॥ इतेतितृतीयपाइनोप्राधान्य
त्वाभात्॥ तदेवंसंज्ञाप्रवृत्तिकालेनुबंधानांसंनिधानमभ्युपेत्यद्वेधासमाहितं॥ वस्तुतस्तु तदेवनास्तीत्याह॥ लोपश्चेति॥ बलवानेवबल
वत्तरः स्वार्थेतरप्॥ अल्पाचूतरमिति यथा॥ हलन्त्यमितीत्संज्ञायां हि कृतायांणकारादीनामच्संज्ञाप्राप्नोति॥ लोपश्च॥ तत्रपरत्वान्नि
त्यत्वादंतरंगत्वाच्चलोपेकृतेसंज्ञाप्रवृत्तिकालेणकारादीनामसत्वादेवतेषामज्झादिसंज्ञानेतिभावः॥ यस्मिंस्तुप्रत्याहारेयोनुबंधोपेक्षित
स्तस्यवचनसामर्थ्यान्नतत्प्रवृत्तेःप्राग्लोपाभावः॥ लुप्तेपिवातस्मिन्भूतपूर्वेणतेनसहितआदिःसंज्ञाभविष्यति॥ अंतःपातिनांतुलुप्तानाम्
संज्ञा॥ श्रूयमाणेष्विकारादिषुसावकाशत्वादिति॥ ननुहल्प्रत्याहारेअकारस्यप्रवेशोदुर्वारः॥ नहितत्रलोपोलभ्यते॥ ततःप्रागच्संज्ञा
विरहेणोपदेशेजितीत्संज्ञाया अप्रवृत्तेः॥ एवंचाद्यसमाधानमपिदुरुपपादं॥ उदात्तस्याकारस्यलोपश्चबलवत्तरइत्यनेनैवगतार्थ
त्वादितिचेत् न॥ सोस्यादिरितिनिर्देशेनप्रथमस्यगुणानांभेदकत्वेनचरमस्यचसमाधानस्यसूपपादत्वादितिदिक्॥ ॥इतिश्रीशब्द
कौस्तुभेप्रथमस्याध्यायस्यप्रथमेपादेद्वितीयमान्हिकम्॥२॥ ॥ श्रीगणेशायनमः॥ वृद्धिरादैच्॥ आकारऐकारऔकारश्चवृद्धिसंज्ञः
स्यात्॥ संज्ञाप्रदेशावृद्धिरेचीत्यादयः तदुदाहरणमेवास्याप्युदाहरणंबोध्यम्॥ इहआच्चऐच्चेतिइतरेतरयोगेद्वंद्वः सुपांसुलुगितिसुलु
ग्वा॥ अथवासमाहारेद्वंद्वः॥ नचैवंद्वंद्वाच्चुदषहान्तादितिटच्स्यादितिवाच्यम्॥ समासांतविधेरनित्यत्वात्॥ अत्रज्ञापकंद्वित्रिभ्यांष
मूर्ध्नइतिषविधानं॥ तद्धिबहुव्रीहौसक्थ्यक्ष्णोरितिषचिप्रकृतेपिक्रियते॥ षचश्चित्त्वसामर्थ्याज्ज्ञायमानमन्तोदात्तत्वंबहुव्रीहित्वप्रयु
क्तंपूर्वपदप्रकृतिस्वरंयथाबाधतेतथाद्वित्रिभ्यांपाद्न्मूर्ध्सुबहुव्रीहावितिविधीयमानमंतोदात्तत्वविकल्पंमाबाधिष्टेत्येवमर्थं॥ नत्व

रा॰ को॰ द्वित्रिभ्यामित्यस्यक्वचित्प्रवृत्त्यभावकाले सत्येवसंगच्छते नत्वन्यथा ॥ अवंकाशश्चसमासांतानामनित्यतायां सत्यामेव लभ्यते त्रिमूर्द्धानं
३६ सप्तरश्मिं गृणीषइतियथा ॥ तस्मात्षप्रत्ययविधानं ज्ञापकमितिस्थितम् ॥ तथाद्वित्रिभ्यामितिसूत्रे बहुव्रीहिग्रहणमपीह ज्ञापकं ॥
अन्यथापादन्मूर्द्धसु इत्येव निर्दिशेत् एवंहि सति कृतसमासान्तपादन्नक्रमोपि न विरोत्स्यते बहुव्रीहिभिन्नं च समासांतविरहादेव
वारयिष्यते ॥ ननु षष्ठीतत्पुरुषादिवारणाय बहुव्रीहिग्रहणमस्तु नत्वत्र हि ॥ द्वयोर्दंता इति विगृह्य द्विदंतः प्रश्येति प्रयोगे पद्दन्नितिद
त् आदेशः स एवेह निरनुबंधकत्वादित्येत ॥ नच पद्दन्निति सूत्रे तदंतविधिदोर्लभ्यात्कथमेतदिति वाच्यम् ॥ ष्यङः संप्रसारणसूत्रस्थ
पूर्वपक्षन्यायेन सिद्धं त्ववयवानन्यत्वादित्याष्टमिकभाष्यवार्त्तिकन्यायेन त्वअवयवस्यकार्यलाभात् ॥ अन्यथा ह्यास्ति शीर्ष्णः औपधीत्याद
वगतेरिति वक्ष्यते ॥ तस्मात्कथं बहुव्रीहिग्रहणं ज्ञापकमिति चेत् ॥ न ॥ पूर्वोत्तरसाहचर्यबलेनापि बहुव्रीह्यप्रविष्टस्य वारणसंभवात् ॥ द
तृ इति सानुबंधस्यापि पठत्वाच्च ॥ स्फिगपूतवीणांजोध्वकुक्षिसीरनामनाम चेति सूत्रे अपाच्चेत्यनुवृत्त्यापस्फिगमित्यादावन्तरङ्ग
दांतोदात्तविधायके अध्वशब्दग्रहणमपीह लिंगं ॥ उपसर्गादध्वन इत्यच प्रत्ययस्य नित्यत्वे हि विनत्वादेव सिद्धं स्यात् ॥ तथा प्रनेरश्मादे
यस्तत्पुरुषे इतिसूत्रे अश्मादिगणे राजन्शब्दस्य पाठोपीह लिंगम् ॥ अन्यथा राजाहः सखिभ्यष्टजितिटचैव सिद्धे किन्तेन ॥ यत्तुक्त
कृपूरब्धूः पथामित्यत्र टिलोपस्येव प्रकृतिवदनुकरणमित्यतिदेशेन अप्रत्ययस्यापि प्राप्तौ तदकरणं ज्ञापकमिति ॥ तन्न ॥ अतिदेशो
पमनित्य इति क्लृप्तसूत्रे प्रपंचितत्वादिति दिक् ॥ कृतमनयोः साधुत्वमित्यादिभाष्यग्रंथाश्चास्मिन्पक्षेनुकूलाः अनयोः पदयोरि राम
तिस्वरसात् ॥ अथवा आदित्यसमस्तमेव ॥ पस्पशापांशब्दाप्रतिपत्तिरितिवार्त्तिके भाष्यकारैरेव वरद्भिः आत् ऐजिति पदविभागप्रद ३६

र्शनात्॥ अस्मिंश्च पक्षे अनयोः सूत्रखंडयोरिति नेयं॥ पक्षान्तराभिप्रायकमेव वा तत्॥ वृद्धिशब्दस्तु तंत्रेणावृत्त्या वा योजनीयः॥ द्वि
र्वचनेचिङ्ग्यणः संप्रसारणमित्यादाविवउभयथाप्यदोषात्॥ आदितितपरकरणमैजर्थं तेन त्रिमात्रचतुर्मात्राणामैचां संज्ञा न भवती
त्यादि एओङ् ऐऔच् सूत्रयोः प्रपंचितं॥ नचैवं तकारस्य उत्तरशेषत्वे नैव स्यादिति पदान्तताविरहाज्जश्त्वं न स्यादिति वाच्यम्॥ असंदेहा
र्थतया आकारप्रश्लेषत्वस्यापि संभवात्॥ अस्तु वादैज्जिति पदं॥ ऋत इद्धातोरित्यादौ दपरत्वमेवाश्रित्य तपरसूत्रे दकारोपि प्रश्लिष्यत इतिति
स्वरितमिति सूत्रे भाष्यकारैर्वक्ष्यमाणत्वात्॥ द्वात्परस्यापि तत्कालग्राहकत्वात्॥ वस्तुतस्तु दकारप्रश्लेषपक्षोभ्युच्चयमात्रं॥ इह तु
तपरकरणं स्पष्टार्थमेवेत्यादि प्रागेवोक्तं न विस्मर्तव्यं॥ ननु चौः कुरिति कुत्वे एच् शब्दे प्राप्नोतीति चतुष्टयी शब्दानां प्रवृत्तिरिति पक्षे संसा
शब्दतया लौकिकत्वेनानुशासनविषयत्वात्॥ त्रयीपक्षे जातिशब्दत्वसंभवात्॥ वैशेषिकपरिभाषया द्रव्यत्वगुणत्वादिजातिस्वीकारेवैया
करणपरिभाषयापि तत्स्वीकारस्य दुर्वारत्वात्॥ वस्तुतस्तु सिद्धांते व्यक्तिविशेषोपहितसत्ताया एव जातित्वस्वीकारादिहापि सास्तु॥ व्य
क्तिविशेषाश्च स्वस्वरूपसत्ता अतद्भेदेनानुगतीकृतास्सत्तोपधायकाः॥ तदुक्तम्॥ तस्यां सर्वे शब्दा व्यवस्थिता इति॥ आद्यंतावप्यवहारासमु
दायानुकरणं वा एच् शब्दः अनुकरणशब्दाश्च जातिशब्दा एव॥ तत्रानुकार्यनिष्ठजातेः प्रवृत्तिनिमित्तत्वात्॥ नचाद्यपक्षे सूत्रवैयर्थ्यं॥ मदीय
शास्त्रे वृद्धिशब्देनादैच एव ग्राह्या इति नियमार्थसूत्रारंभात्॥ तदुक्तम्॥ अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगे नित्यत्वा
च्च सर्वसंज्ञानां लौकिकत्वादिति॥ अनेकस्मिन्ननेका वा शक्तिरस्येति विग्रहः॥ अवच्छेदकभेदेपि लाघवाच्छक्तिरेकैव औपाधिको भेद इति विशा
दस्तु उपाधिभिन्न इत्यत्र पर्यवसन्न इति मतेन आद्यः पक्षः॥ उपाधिस्थित्यधीनस्थितिको जीवब्रह्मभेदवदुपधेयेपि भेदोस्तीति मतेन द्वितीयः

 यःकल्पः॥नकोपधाया इति पुम्वद्भावनिषेधस्तु नास्ति॥नद्भितवुग्रहणं कर्त्तव्यमिति वक्ष्यमाणत्वात्॥अवच्छेदः संकोचः॥सत्यपि
 शक्तेर्निरवयवतया न संभवति तथापि तदितरस्मिन् तात्पर्यविरह एव शक्तिसंकोचोत्राभिमतः॥सर्वे सर्वार्थवाचका इत्यभ्युपगमे हि
तात्पर्यं क्वचिदेवेत्यस्य निर्विवाद—त्वात्॥शक्तिः परं कारणतापरपर्यायासर्वत्रदुर्वारेत्युक्तं॥नचैवमन्यायश्चानेकार्थत्वमितिस्यनिर्वि
षयता॥पौरुषेयसंकेतनिरपेक्षस्यप्रसिद्धतरसम्बन्धस्य विनाप्रमाणं बहुषु नकल्पनमिति तत्तदर्थात्॥गौणमुख्यविभागोपिप्रसिद्ध्यप्रसि
द्धिनिबंधन एव॥गाव्यादीनामसाधुतापि संकेतविरहे सत्येव॥अतएव प्रसिद्धेपि पक्षेगोण्यादीनां गोण्यां साधुत्वमस्त्येवेत्यन्यत्र विस्तरः
॥उक्तंच॥व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्॥नित्य एव तु संबंधो डित्थादिषु गवादिवत्॥वृद्ध्यादीनां च शास्त्रेस्मिन् शक्त्यव
च्छेदलक्षणः॥अकृत्रिमोभिसंबंधो विशेषणविशेष्यवदिति॥वस्तुतस्तु साध्वसाधुबहिर्भावपक्षेप्येषामनुशासनविषयतास्त्येवेति पक्ष
शायां साधुत्वनिर्वचनप्रसंगेनोपपादितं॥तस्मात्सर्वथापि कुत्वं प्राप्नोत्येवेति चेत्॥सत्यम्॥अयस्मयादीनि छंदसीति भत्वप्रवृत्या कुत्वो
पयोगिनी पदसंज्ञा प्रतिबध्यते॥जस्त्वविध्येकवाक्यतापन्ना तु पदसंज्ञास्त्येव॥ससुष्टुभा सऋक्वता गणेनेत्यत्र तु विपरीतं॥कुत्वे पदत्व
मस्ति जस्त्वे तु नेति विषयभेदेन संज्ञाद्वयमस्तीत्यंशे परं दृष्टांततां बोध्या॥तेन उपदेशेजनुनासिक इदित्यादौ कुत्वाभावो जस्त्वं च सिद्ध्यति
॥छंदसि विहितस्य सूत्रे कथं प्रवृत्तिरित्याशंक्य छन्दोवत्सूत्राणीति भाष्यम्॥इष्टिरियं भाष्यकृतः॥यद्वा॥छन्दः शब्दः स्वर्यते॥स्वरि
तेनाधिकारः अधिकं कार्यं गौणस्यापि ग्रहणमित्यर्थः॥तेन छंदोंगेष्वपि न तत्कार्यप्रवृत्तिर्बोध्या॥संज्ञाद्वयसमावेशस्तु उभयसंज्ञान्य
पीति वक्तव्यमिति वार्त्तिकवचनात्॥षष्ठीयुक्त इति सूत्रे छन्दसि वेति विभज्य एका संज्ञेति नियमस्य छंदसि विकल्पनाद्वा॥यद्वा॥अ

यस्मयादीनीत्यनेनोभयसंज्ञाप्रयुक्तकार्यभाजः समुदाया निपात्यन्ते ॥ ननु प्रकृता भसंज्ञैव विधीयते ॥ अत एव कार्यविशेषपुरस्का
रसंभव इति बोध्यं ॥ तस्मात्कुत्वं नेति स्थितम् ॥ कुशब्दस्य अणुदिदित्यनेन संज्ञात्वेन विनियोगात्तत्र च प्रागुक्तरीत्या मतभेदसत्त्वाज्जा
तिविशेषः प्रवृत्तिनिमित्तं ॥ व्यक्तिविशेषोपहिता सत्तैव वा ॥ शब्दस्वरूपं वा ॥ तस्यापि ग्राह्यत्वं ग्राहकत्वं चेति पस्पशोक्तरीत्या व्यक्तिवि
शेषणतयाभानाभ्युपगमात् ॥ तथा चोक्तत्रितयान्यतममिह त्वप्रत्ययार्थः ॥ प्रकृतिजन्यबोधे प्रकारीभूतत्वं प्रयोगोपाधिमाश्रित्य तथाभू
तधर्मस्य त्वतलर्थताया वक्ष्यमाणत्वात् ॥ यद्वा ॥ प्रकृतिः स्वरूपपरा ॥ न तत्प्रवृत्तिनिमित्ते त्वे तु त्वतलादीनां शक्तिरेवेति मतान्तरमपि वक्ष्यते
॥ उभयथापीह त्वप्रत्ययेन स्वार्थाश्रयः ककारो लक्ष्यते ॥ तेन कुत्वं नेत्यस्य ककारादेशो नेति पर्यवसितोऽर्थः ॥ आह च सामान्यान्यभिधी
यन्ते सत्तावान्तैर्विशेषितां ॥ संज्ञाशब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभिरिति ॥ इत्थं पदविभागः पदसाधुत्वं चोक्तं ॥ वाक्यार्थस्तु संज्ञासंज्ञि
भावः ॥ तथाहि ॥ समानविभक्तिकनामार्थयोरभेदान्वयस्य व्युत्पन्नतया आकारादयोऽवृद्धिप्रत्ययभेदेन संसर्गेण विशेष्याः ॥ विरूपोपस्थिति
स्तु विशेषणीभूतं शब्दस्वरूपमादाय बोध्या ॥ एतेनेन्द्रो मरुत्वान्मघवेत्यादि व्याख्यातं ॥ ननु तत्रापि मरुत्वदादिशब्दानां तत्तद्व्यक्तौ लक्षणेति
वाच्यं ॥ उक्तरीत्या लक्षणां विनैवोपपत्तेः ॥ अत एवोद्भिदधिकरणे विशिष्टविधिपक्षे मत्वर्थलक्षणाप्रसंगेन दूषयित्वा नामधेयत्वं सिद्धान्तितं ॥
अन्यथा नामधेयत्वेऽपि लक्षणायास्तुल्यतया अधिकरणस्यासंभवदुक्तिकतापत्तेरिति दिक् ॥ स्यादेतत् ॥ किमादैज्मात्रस्य वृद्धिसंज्ञा आहो
स्विद्वृद्धिशब्दमावर्त्य वृद्धिरिति ये आदैचस्ते वृद्धिसंज्ञा इति व्याख्यानाल्लुक्श्लुलुप्संज्ञावत्तद्भाविता नामेवेति ॥ नाद्यः ॥ सर्वभासः सर्वकाकइ
त्यादौ उत्तरपदवृद्धौ सर्वं चेति सूत्रेण पूर्वपदान्तोदात्तत्वप्रसंगात् ॥ इष्यते तु समासस्यान्तोदात्तः ॥ न च सर्वस्य सुपीत्याद्युदात्तता शंक्या ॥ मति

श॰ कौ॰ शिष्टेन समासस्वरेण बाधात्॥ सर्वस्तोम इत्यादौ तु बहुव्रीहौ प्रकृत्या पूर्वपदमित्यनेन समासांतोदात्तत्वे बाधिते सर्वस्य सुपीति भवत्येव। इह तु क-
३८ र्मधारयत्वात्समासांतोदात्तत्वमेव बोध्यं॥ किंच॥ तावती भार्या यस्येति बहुव्रीहौ तावद्भार्यो न सिध्येत्॥ वृद्धिनिमित्तस्य च तद्धितस्येति पुंव-
द्भावप्रतिषेधप्रसंगात्॥ नहि तीयः शालीयो मालीय इत्यादौ वृद्धलक्षणस्य च्छप्रत्ययस्यासिद्धिप्रसंगात्॥ किंचैवं आम्रमयं शालमयमित्या-
दौ नित्यं वृद्धशरादिभ्य इति नित्यो मयट् न स्यात्॥ किंच॥ आम्रगुप्तायनिः शालगुप्तायनिः उदीचां वृद्धादगोत्रादिति वृद्धलक्षणः फिञ् न स्या-
त्॥ ननु प्राचामवृद्धात्फिन्बहुलमिति फिनाप्येतत्सिद्धं॥ नह्यत्र फिञ्फिनोः स्वरे रूपे वा विशेषोस्ति॥ ञ्नित्यादिर्नित्यमिति आद्युदात्तस्योभ-
यत्राविशिष्टत्वात्॥ न चाम्रगुप्तायनी भार्य इत्यत्र वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इति पुंवद्भावप्रतिषेधसिद्धये फिञेव कर्त्तव्य इति
वाच्यम्॥ जातेश्चेत्यनेनापि प्रतिषेधसिद्धेः॥ न चाम्रगुप्तायनेश्छात्रा इति वृद्धाच्छे विवक्षिते फक्फिञोरन्यतरस्यामिति लुग्विकल्पेन आम्र-
गुप्तीया आम्रगुप्तायनीया इति द्वैरूप्यमिष्टं तच्च फिञं विना न सिध्यतीति वाच्यम्॥ फक्फिञोरित्यत्र यूनीत्यनुवृत्त्या त्वदुदाहृतरूपद्वयस्यासिद्धा-
न्तेप्यसंमतत्वात्॥ अत एव तत्र यून्येवोदाहृतं॥ यस्कस्यापत्यं॥ शिवादिभ्योण्॥ यास्कः तस्यापत्यं युवा अणो द्व्यच इति फिञ् यास्कायनिः तस्य
छात्रा यास्कीयाः यास्कायनीया इति॥ तस्मात्फिनापि सिद्धौ किमर्थं फिञेष्यत इति चेत्॥ उच्यते॥ उक्तरीत्या रूपसिद्धावपि प्राचामुदीचां वाचा-
र्याणां स्वस्वमतप्रच्युतिरेव तावद्दोषः सिद्धांते हि उदीचामाम्रगुप्तायनिरिष्टः प्राचां त्वनिष्टः उक्तरीत्या तु उदीचां न सिध्येत्॥ प्राचां तु सिध्येदिति स्प-
ष्ट एवोभयोरपि स्वमतप्रच्यवः॥ तथा च ऋतो भारद्वाजस्येति सूत्रे जहर्थेत्यादौ गुणे रपरत्वे च कृते न जंतत्वादचस्तास्वदित्यस्याप्राप्तौ नियमा- राम
नुपपत्तेः ऋतो भारद्वाजस्येतीदं विधायकं स्यात्तच्च पेचिथयो कियेत्यादाविण्न स्यादिति दूषणे प्राप्ते अचस्तास्वत्थल्यनिटो नित्यं भारद्वाजस्य॥ ३८

उपदेशेऽत्वतः भारद्वाजस्येत्येव॥ ततः ऋतः भारद्वाजस्येति निवृत्तं॥ एवं च सकललक्ष्यप्रसिद्धिरिति सूत्रभंगेन समाधाय भाष्यकारो व-
क्ष्यति॥ सिध्यत्येवं॥ अयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवतीति॥ अत एव अचस्तास्वदित्यत्र उपदेशेऽत्वद् इत्येतदुपदेशग्रह-
णमपकृष्य सिद्धान्तयिष्यतीति दिक्॥ किंच॥ फिनि सति आम्रगुप्तायनेरपत्यं कुत्सितमित्यर्थे सौवीरगोत्रे॥ फेश्छ चेति छठकौ न स्या-
तां॥ तत्र फिञ एव गृहीतत्वेन तु फिन्॥ वृद्धादित्यधिकारादिति स्थितं॥ ततश्चाम्रगुप्तायनीयः आम्रगुप्तायनिक इति न स्यात्॥ न च यमुंद-
श्च सुयामा च वर्ष्यायणि फिञः स्मृता इति वृत्तौ त्रयाणामेव परिगणनादन्येभ्यश्छठकौ न भवत एवेति वाच्यं॥ भाष्यकृता परिगणनस्या-
नाश्रयणात्॥ अन्यथा अत्रैव सूत्रे सौवीरेष्विति किं तैकायनिरिति प्रत्युदाहरणं न संगच्छेत॥ तैकायनिशब्दस्य तत्रापाठात्॥ अत एव
यूनि लुगित्यत्रोदाह्रियते॥ तिकस्यापत्यं तिकादिभ्यः फिञ् तैकायनिः तस्यापत्यं युवा॥ फेश्छ च॥ तैकायनीयः तस्य छात्राः युवप्रत्य-
यस्य लुकि कृते वृद्धाच्छः तैकायनीया इति॥ न हि सति परिगणने तैकायनेश्छः संभवति नं वा तल्लोपः अत एव यूनि लुक् सूत्रे स्थितत्वाप-
रिगणनमर्वाचीनमिति हरदत्तादयोऽप्याहुः॥ अपि च॥ फिञि सति आम्रगुप्तायनेरपत्यं युवा॥ प्राग्दीव्यतोऽण्॥ तस्याण्यञिपार्षत्ञिनो
यूनि लुगणिञोरिति लुकि आम्रगुप्तायनिरित्येवं रूपं पितरि पुत्रे चेष्यते॥ फिनि तु सति तन्न स्यात्॥ ञितः परत्वाभावात्॥ नेष्टा ब्राह्मणगो-
त्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति तत्सिद्धिः ब्राह्मणगोत्रे तदप्रवृत्तेः किंच। तद्भावितग्रहणपक्षे मालादीनां चेत्यनारंभणीयं स्यात्
॥ प्रस्थे वृद्धमकर्क्यादीनामित्यनेनैव पूर्वपदाद्युदात्तस्य सिद्धेः॥ अपि च॥ वृद्धिशब्दे तत्रारत्याद्याश्रयणा गौरवं॥ मृजेर्वृद्धिरित्यादिर्विति॥
प्रदेशेष्वितरेतराश्रयणपरिहाराय सूत्रशाटकवद्भाविसंज्ञाविज्ञेया स्यादिति चापरं गौरवमिति॥ अत्रोच्यते॥ आदैज्मात्रस्य वृद्धिसंज्ञा

॥नचैवंसर्वभासाद्युक्तदोषः स्यादिति वाच्यम्॥ उत्तरपदवृद्धौसर्वंचेत्यत्रहिउत्तरपदग्रहणंस्वर्यते॥ स्वरितेनाधिकारो विज्ञायते॥ तेनोत्तर
पदस्येत्यधिकृत्य यावृद्धिर्विहितासैवगृह्यते॥ यथासर्वपांचालः सुसर्वार्द्धाज्जनपदस्येतिवृद्धिः इदंचतद्भावितग्रहणेप्यवश्यंवक्तव्यमेव॥ अ
न्यथासर्वःकारकः सर्वकारक इत्यादावतिप्रसक्तेः एवंतावद्भाष्यप्रदोषः तत्रावृत्त्याद्याश्रयणेनवृद्धिशब्देनविहितायावृद्धेर्यन्निमित्तंतत्रैवक
पुम्वद्भावप्रतिषेधात्॥ वृद्धिशब्देनचविधीकृत्वा वृद्धिःप्रतीयत इत्याशयेनैवोक्तंभाष्ये। यन्कृत्वायावृद्धेर्निमित्तमिति॥ नचवैयाकरणभा
र्येतयासौवम्भभार्यैः तिप्रसंगः फलोपहितस्यैवनिमित्तत्वेन विवक्षितत्वात्॥ ऐचौप्रतिफलोपधानमप्यस्तीतिचेन्न॥ तयोर्वृद्धिशब्देनावि
धानात्॥ केचित्तुयावद्वृद्धिजननयोग्यत्वेसति किंचित्फलोपहितस्तद्धितो निमित्तशब्देनोच्यते॥ वैयाकरणेतुऐचंप्रतितद्धितोनैनिमित्तं
निषेधसंनियोगशिष्टतामात्रेणातिप्रसंगभंगात्। तेनवैयाकरणभार्येनातिप्रसंगः॥ परिषंदोण्यः पारिषद्याभार्य इत्यादौतु आकारमात्रोपहि
तत्वेपिस्वरूपयोग्यतासकलवृद्धिंप्रत्यस्तीत्याहुः॥ तस्मात् आवृत्तौ गौरवापत्तेः शालीयादेरसिद्धिनः॥ मालादीनांचेति लिंगाद्व्यातिन्या
पात्तश्चैवच। भाविसंज्ञात्वविज्ञानेगौरवाच्चेहनिश्चितं॥ आदैज्मात्रस्याविशेषाद्वृद्धिसंज्ञाविधीयते॥ अनर्थकंसाध्वनुशासनं प्रयोग
नियमार्थंआदेशार्थमागमार्थंविशेषणविशेष्यभावार्थंचेदंसूत्रमितिषट्पक्षीतुभाष्यएवनिराकृतत्वादसंभवदुक्तिकत्वाच्चनेहत
न्यते॥ संज्ञासंज्ञिभावेसत्यपिकासंज्ञाकःसं ज्ञीत्यत्रतात्पर्यग्राहकास्तुबहवोन्यायाः॥ तथाहि॥ यच्छब्दयोगः प्राथम्यमित्याद्युद्दे
श्यलक्षणं॥ तच्छब्दएवकारश्चस्यादुपायलक्षणमित्यभियुक्तोक्तेस्तथैवानुभवाच्चप्राथम्यंतावत्संज्ञित्वेलिंगंतच्चादेङ्गुण इत्यादौस्पष्टमे
व॥ वृद्धिसंज्ञासूत्रेतुमंगलार्थंवृद्धिशब्दस्यादौप्रयोगेपि वक्ष्यमाणैर्न्यायांतरैरादैचांसंज्ञित्वेनिर्णीतेसति आदैज्वृद्धिरित्याकारकपदानुपूर्

वींज्ञानानंतरमेववाक्यार्थबोधाभ्युपगमात्तज्जनकीभूतानुपूर्वीज्ञानेआदैचामेवप्राथम्यान्नव्यभिचारः॥पदानुपूर्वीज्ञानमेवचासत्तिज्ञान
मित्युच्यते॥इदंचशाब्दबोधेहेतुरितियैर्नेष्यतेतेषामासन्नानामसंबन्धकपदोच्छेदःस्यात्॥पदसमूहालंबनेसकलपदानांपदार्थस्मरणेचस
कलपदार्थानांविषयत्वाविशेषात्॥आवृत्तिश्चसंज्ञात्वेलिंगम्॥व्यवहारार्थमेवसंज्ञाकरणात्॥भेदाभेदाभ्यामपिसंज्ञित्वसंज्ञात्वेक्वचि
न्निर्णीयेते॥बहूनांहिएकासंज्ञोचिना॥लाघवात्॥नत्वेकस्यबह्व्यःसंज्ञाःगौरवात्॥न्यूनाधिकव्यक्तिकास्तुबह्व्यःसंज्ञाःदृश्यन्तएव॥
तत्तत्प्रयुक्तकार्यवैलक्षण्यात्॥कृत्कृत्यप्रत्ययसंज्ञावत्॥तद्धिततद्राजप्रत्ययसंज्ञावच्च॥लघ्वक्षरत्वमपिटिघुभादौसंज्ञालिंगंयथायथं
बोध्यम्॥इहंतुआवृत्त्याऽभेदेनचवृद्धिशब्दःसंज्ञेतिस्थितेतद्बलेनश्रुतानुपूर्वीभंगादादैचांप्राथम्यमपियोजनीयं॥यद्वा॥स्वेच्छयासंज्ञा
क्रियतेतिपक्षंविहायव्यवहारायनियमइतिपक्षेयोज्यम्॥आद्येपिकार्यकालपक्षाश्रयणेनवासमाधेयमितिदिक्॥एतेन॥आर्द्धधातुके
शेषःकृदतिङ्॥अपृक्तएकाल्प्रत्ययःस्वंरूपंशब्दस्यअणुदित्॥तपरःआदिरन्त्येन॥येनविधिस्तदन्तस्येत्यादावपिनव्यभिचारउद्धृतःतत्रा
पिविपरीतानुपूर्वीकल्पनात्॥कल्पकस्यचप्रागेवोक्तत्वात्॥पक्षान्तरैरपिसमाधानाच्च।अतएवस्थानिवत्सूत्रेऽवत्करणंकिमित्याशंक्यस्था
नीआदेशस्यसंज्ञामाविज्ञायीतिभाष्यमप्युपपन्नं॥यत्तुअपृक्तएकालितिपरिभाषानतुसंज्ञेत्युक्तम्॥तद्ध्यादावपिसुवचं॥अपृक्त
संज्ञायांहल्ग्रहणंस्वादिलोपेहल्ग्रहणार्थमितिवार्तिकस्यतद्भाष्यस्यचप्रतिकूलंच॥तस्मादुक्तैवगतिःसमीचीनेतिदिक्॥नुमृजेर्वृ
द्धिरित्यादावन्योन्याश्रयःसंज्ञाहिविधिर्विहितानांचसंज्ञेति॥नचमालादौसंज्ञाप्रवृत्तिसंभवेऽस्तीहभाविसंज्ञाविज्ञानंसंभवति॥तस्माद्वृ
द्धिशब्दस्यैवादेशःस्यात् अन्यत्रवृद्धिसंज्ञाप्रवृत्तावपिमालादिशब्दान्तर्गतस्याकारस्यततउत्कृष्यहविधातुमशक्यत्वादिति॥अत्राहुः

प्र·कौ· मार्ष्टि इत्यादौ सिद्धस्यैवाकारस्य मृज्युपदेशादसाधुत्वे प्रसक्ते साधुत्वं मृजेर्वृद्धिरित्यादिना बोध्यते न त्वपूर्व आकारो भाव्यते॥ येनान्यो न्या
४० श्रयः स्यात्॥ उक्तं च वार्तिककृता॥ सतो वृद्ध्यादिषु निमित्तभावात्तदाश्रयइतरेतराश्रयत्वादप्रसिद्धिः सिद्धं तु नित्यशब्दत्वादिति॥ अथ ल
क्षणे कश्चस्तुष्कः कश्चिद्व्याकरणबलेनैव मार्ष्टीत्यादिप्रयोगे बुब्युत्सित्सेत तथापि न क्षतिः शालामालादौ आकारे श्रुते आत्वसामान्यलक्षणे
प्रत्यासत्त्या मार्ष्टीत्यादिप्रयोगसमवायिनां सर्वेषामाकाराणां वृद्धिशब्दवाच्यताग्रहात्॥ सामान्यलक्षणानभ्युपगमपक्षे तु आत्वजातौ श
क्तिग्रहात्॥ शाब्दानुभवपदार्थस्मरणवाक्यार्थबोधानां समानप्रकारकत्वनैवातिप्रसंगभंगाभ्युपगमाद्वा॥ अन्यथा गेहे घटोस्तीति वाक्या
दपूर्वं व्यक्तिर्न गृह्येतेति दिक्॥ अत एव न वेति विभाषेति सूत्रे भाष्यकारो वक्ष्यति साधुत्वस्य विधेयत्वे विभाषा श्वेरित्यादिज्ञातस्यैव विकल्पा
पत्तिः ——————————— तस्मात्संप्रसारणाद्येव विकल्प्यत इति॥ एवं केवलडादिविधौ गतिः न चैवं साध्वनुशासनत्वभंगः॥
साधुत्वविशिष्टस्यैव सर्वत्र लक्षणया विधानमिति कृन्मेजन्त सूत्रे विवरणकारादिभिरुक्तत्वात्॥ केवलविधानेपि गदिह परिनिष्ठितं तत्सा
धिनिष्ठुना र्थापत्तिं प्रकल्प्य वाक्यात्साधुत्वसिद्धेश्च॥ इह च प्रत्येकं वाक्यपरिसमाप्तिः॥ मालादीनां चेत्यादिलिंगात्॥ ब्राह्मणा भोज्यंतामित्या
दौ तथा दर्शनाच्च॥ यद्यपि गर्गाः शतं दंड्यन्तामित्यादौ समुदायेपि वाक्यपरिसमाप्तिर्दृश्यते॥ गुणकर्मभूतानामपादानस्थानापन्नानां
गर्गाणामनुरोधेन ईप्सितकर्मत्वापप्रधानभूतस्य शतस्यावृत्त्ययोगात्॥ तथापीह शास्त्रे यत्नं विना समुदाये शास्त्रं न समाप्यते॥ अत एव
उमेभ्यस्तं सहेति सह ग्रहणं वार्तिककृद्वक्ष्यति॥ भाष्यकारस्तूभेग्रहणमेवैतदर्थमिति वक्ष्यति॥ अन्यपाए काचोहृ इत्यनुवृत्त्या सिद्धेः किमु राम·
भेग्रहणेन॥ संयोगसंज्ञायां समाससंज्ञायां च महासंज्ञाकरणमन्वर्थताविज्ञानार्थमिति यत्नः अत एव सह सुपेति सह ग्रहणं योगविभागे ४०

नतिङ्. तादिस मास विधानार्थमिति स्थापयिष्यते॥ इह तपरकरणं ऐजर्थं ईदूदेदिति वदुच्चारणार्थमसंदेहार्थं चेति मर्पवितमे ओङ्. ऐऔजिति
सूत्रयोः॥ यत्तिहोक्तं वार्त्तिककृता॥ आकारस्य तपरकरणं सवर्णार्थमिति॥ तत्तु भेदका गुणास्तपरसूत्रं चानणि विध्यर्थमित्यभिप्रेत्य॥ भाष्ये तु
अभेदका गुणा इति स्थितं॥ गुणा उदात्तानुदात्तस्वरितानुनासिकाः नांतरीयकतयोच्चार्यमाणा अपि यत्नं विना न विवक्ष्यन्त इत्यर्थः॥ अनुदु·
दात्तः अडुदात्त इत्यादावुदात्तग्रहणं चेह ज्ञापकं॥ अन्यथा हि उदात्तमेवोच्चारयेत्॥ ननु यद्यभेदका गुणास्तर्हि यद्वक्ष्यति भाष्यकारः हंत्या
देशस्य वधः स्थानिवद्भावादनुदात्तत्वादिट्प्रतिषेधे प्राप्ते तद्वारणाय वध्यादेशे उदात्तनिपातनं करिष्यते॥ तथा च एकाच उपदेशे इति सूत्रे एका
ज्ग्रहणं न कर्त्तव्यमिति॥ तदेव हि रुध्येत॥ अविवक्षाप्रसंगात्॥ अथोच्येत॥ तत्रापि स्थाने तरतम इति वचनादादेशस्यापि स्वरः प्राप्तस्तस्मि·
न्नुच्चारयितव्ये उदात्तोच्चारणं यत्नेन विवक्षार्थं ज्ञायत इति॥ एवमपि यद्वक्ष्यति षष्ठे॥ चतसर्याद्युदात्तनिपातनं करिष्यते सन्निपातन स्वरश्चतुरः
शसीत्यस्य बाधकं भविष्यतीति तर्हि रुध्येत॥ चतुरशब्दोऽयं व्युत्पत्तिपक्षे त्रः संख्याया इति फिट्सूत्रेणाद्युदात्तः चतेरुरन्निति व्युत्पादने नैपि नि·
त्स्वरेणाद्युदात्त एव॥ तत्स्थानिकस्य च तसृशब्दस्यापि स्थानिस्वरेणाद्युदात्तस्योच्चारणोपपत्तौ चतुरः शसीत्येतद्बाधकत्वायोगात्॥ अपि च।
अस्थ्यादीनामप्याद्युदात्तत्वादनादेशस्यानङोऽपि स्थान्यनुरूपेणोदात्तस्यैवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं भविष्यतीत्युदात्तग्रहणं निष्फ·
लमेव मत्युत क्रियमाणं तद्यत्नाधिक्येऽप्यविवक्षां ज्ञापयेत्। यद्यपि कश्रुत्या सूत्रपाठात्क्वचिदुदात्तोच्चारणं विवक्षार्थमिति तदपि चिन्त्यम्॥ एवं स
ति अनङोऽप्युदात्तोच्चारणेनैव सिद्धौ उदात्तग्रहणवैयर्थ्यापत्तेः॥ उक्तज्ञापनासंभवाच्च॥ तथाहि॥ किं ज्ञाप्यं॥ स्वशब्देनानुपात्तो गुणो न विव·
क्ष्यत इति। आहोस्वित्सति यत्नविशेषे न विवक्ष्यत इति आद्ये निपातनस्वरो न विवक्ष्येत॥ अंत्ये तूदात्तोच्चारणरूप एव विवक्षाहेतौ यत्नविशेषे स्थि

श॰ कौ॰ तेकथंज्ञापकोत्थानं॥ मूलशैथिल्यात्॥ नस्याद्गुणानामभेदकत्वप्रतिपादकमानंत्वस्य भाष्यं उत्तरग्रंथविरुद्धमेवेति चेत्॥ उच्यते॥ विभाषाछन्दसी
५१ तिवैकल्पिकमैकश्रुत्यमंगीकृत्यपक्षांतरैरपिपरिहाराभवंतीतिन्याये नतत्रतत्राद्युदात्तनिपातनंकरिष्यत इत्युक्तं॥ इहतु त्रैस्वर्येणसूत्राणां
पाठमाश्रित्यस्वरूपेणोपात्तस्यगुणस्य नान्तरीयकत्वेनाविवक्षितत्वसंभवादुदात्तग्रहणंज्ञापकमित्युक्तम्॥ अतोनविरोधः॥ यद्वा॥ अणु
दित्सवर्णस्येत्यत्राजग्रहणेनैवसिद्धे गुणभिन्नानां यवलानां संग्रहाय क्रियमाणमण्ग्रहणं गुणानां भेदकतामपि ज्ञापयति॥ भेदकाभेदक
त्वपक्षयोश्च जातिव्यक्तिपक्षयोरिवलक्ष्यानुरोधाद्व्यवस्थेत्युक्तं हलसूत्रे॥ तेनभेदकत्वपक्षाश्रयणेनाद्युदात्तनिपातनंकरिष्यत इत्यादि भा
ष्यं बोध्यम्॥ अतएव च इदमस्त्यदाद्यत्ते अश्वन आविभक्त्या वित्यादौ चानुनासिकोनप्रवर्त्तते॥ ननु अण्ग्रहणं हलोयमामितिलोपेऽन्यतरस्यां
ग्रहणानुवृत्तिज्ञापनार्थमित्युक्तमिति चेत्॥ न॥ उभयज्ञापकत्वेप्यविरोधात्॥ नह्येकेनैकमेवज्ञाप्यमिति नियमः यावतार्थेनानुपपत्तिस्तस्य
सर्वस्यज्ञाप्यत्वात्॥ अतएवआत्वविकल्पः कृतात्वस्यषट्संज्ञा चेत्युभयमपि अष्टनोदीर्घादितिदीर्घग्रहणेन ज्ञापयिष्यते॥ अतएव वचसं
हितायामित्यधिकारेण संहितायामनित्यत्वं कालव्यवाये प्यानङादिप्रवृत्तिश्चेत्युभयं ज्ञाप्यत इतिदिक्॥ एवंचाकारस्यतपरकरणं सवर्णार्थ
मिति इहत्यं वार्त्तिकमपि भेदकत्वपक्षेण साध्वेव॥ भाष्ये तु पक्षान्तराभिप्रायेण ऐजर्थत्वमुक्तं॥ तदपि यथोद्देशपक्षे बोध्यम्॥ आदैचां संज्ञा
विधावनुवाद्यत्वेन सवर्णग्राहकत्वप्रसक्तेः कार्यकालपक्षे तु विधिवाक्ये नैव वृद्धिसंज्ञाविशिष्टानामादैचां भाव्यमानतया सवर्णग्रहणं नप्र
प्रोत्येव॥ यथाचज्योतिष्टोमराजसूयादिशब्दानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिर्नतु वाक्यान्तरेण तथास्मिन्पक्षे राम॰
वृद्ध्यादीनामपि॥ वृद्धिरादैजितिसूत्रंतु इकोगुणवृद्धी इतिवत्सदोपस्थापकं॥ उपस्थाप्यस्य संज्ञिनयापरं संज्ञासूत्रव्यवहारः आ ५१

द्यपक्षे तु यन्न दुःखेनेत्यादौ स्वर्गशब्दार्थावगमवदिहैव वृद्ध्यादिशब्दार्थावगम इति विशेषः तदयं निर्गलितः सूत्रार्थः कृतानामकृतानां चा
दैचां प्रत्येकं वृद्धिसंज्ञा स्यात्॥ आश्वलायनः ऐतिकायनः अश्वलेति कुशब्दाभ्यां नडादित्वात्फकि आदिवृद्धिः उपगोरपत्यमौपगवः॥ अदे
ङ्गुणः॥ अदेङां गुणसंज्ञा स्यात्॥ तपरकरणमिह सर्वार्थम्॥ तेन नरतीत्यत्र अकार एव न तु कदाचिदाकारः। न च प्रमाणत आन्तर्येण निय
मसिद्धिः रपरत्वे कृते एकस्याध्यर्द्धमात्रत्वादपरस्यार्द्धतृतीयमात्रत्वात्॥ पचन्ति चेता स्तोता॥ इको गुणवृद्धी॥ यत्र ब्रूयाद्गुणो भवति वृ
द्धिर्भवतीति तत्र इक इति षष्ठ्यन्तमुपस्थितं बोध्यम्॥ चेता स्तोता॥ अहार्षीदित्यादि इक इत्युक्ते नेह॥ याता ग्लायति॥ उम्भितेति॥ तथा च
वार्त्तिकम्॥ इग्ग्रहणमात्संध्यक्षरव्यंजननिवृत्त्यर्थमिति॥ ननु नैतानि सन्ति प्रयोजनानि॥ ज्ञापकेन अनिकां व्यावृत्तिसिद्धेः तथाहि॥ अ
कारस्य पचतीत्यादौ शपं निपं चाश्रित्य यथाक्रमं पुगन्तेति सार्वधातुकार्द्धधातुकयोरिति च सूत्रेण सत्यपि गुणे रूपे विशेषो नास्ति॥ अचिकी
र्षीदित्यादौ तु अतो लोपे न वृद्धिर्बाध्यते। ण्यल्लोपाविति पूर्वविप्रतिषेधस्य वक्ष्यमाणत्वात्॥ सूत्रारंभपक्षेपि त्वैषैव चिकीर्षक इत्यादौ गतिः
अचो ञ्णितीत्यत्र निर्दिष्टस्थानिकत्वेनेक्परिभाषाया अप्रवृत्तेः अयासीदित्यादौ तु सिचि वृद्धौ सत्यामपि न क्षतिः॥ वस्तुतस्तु सामगिड्भ्यां
परत्वाद्बाध्यते॥ येन नाप्राप्ति न्यायेनापवादत्वाद्बाध्यत इति तु निष्कर्षः नच यासा वातेत्यादावातो गुणप्रसंगः गापोष्टगिति टकः किन्त्वेन
आकारस्य गुणो न भवतीति ज्ञापितत्वात्॥ तर्हि सामग इत्यादावाल्लोपार्थं क्रियते॥ यदि तु आकारस्य गुणः स्यात्तर्हि द्वयोरकारयोः पररूपे
ण सामग इत्यादिरूपसिद्धौ किं किता न॥ न चेह चिकीर्षक इत्यादाविव परत्वादंगत्वाच्च अतो लोप एवोदाहर्तुमुचितो न तु पररूपमिति वा
च्यम्॥ तावतापि ज्ञापकत्वे बाधकाभावात्॥ वस्तुतस्तु नेह लोपेन भवितव्यम्॥ तत्र ह्यनुदात्तोपदेशेत्यतोऽनुवृत्ते उपदेशग्रहणे नार्द्धधातुक

श. कौ. स्यविशेषणादार्द्धधातुकोपदेशेयदकारांतं नस्यातो लोपो विधीयते ॥ अन्यथागतोगतवानित्यादावतिप्रसंगात् ॥ नचासिद्धवत्सूत्रेणनिर्वाहः
४२ तस्य भाष्यकृताप्रत्याख्यास्यमानत्वात् ॥ किंच अपपयगतौ आभ्यां क्विपि अत् पदिति रूपं माधवादिभिरुदाहृतं तदपि यथाश्रुते न सिध्येत् ॥
तस्मादुपदेशानुवृत्तिरेव शरणं ॥ कथं तर्हि धिनुतः कृणुतः इत्यादावतोलोप इति चेत् ॥ संनियोगशिष्टतया उप्रत्ययोपदेशवेलायामेव अका
रस्यापि बुद्ध्यारोहादिति केचित् ॥ अन्ये तु धिन्विकृण्व्योरचेति सौत्रक्रमानुरोधात्प्रथमं मकारादेशः तदनंतरं च शब्दात्कृष्ट उप्रत्यय इति नोक्त
दोष इत्याहुः ॥ नन्वेवं सामगापेत्यादावेकादेशस्य पूर्वान्तत्वेन ग्रहणादातो धातोरित्यालोपः स्यादिति चेत् ॥ अत्र कैयटः अकारमाश्रित्य कृ
तोपशब्दः सन्निपातपरिभाषयालोपं न प्रवर्त्तयति ॥ दीर्घत्वं तु कष्टायेति निपातनाद्भवतीति तु एओङ् सूत्रे स्थित्वा समाहितवान् ॥ तस्यायमा
शयः ॥ यादेशे हि ह्रस्वत्वविशिष्टमत्वं प्रयोजकं ॥ तद्धि धावत इत्यनुवृत्तेः तत्र यद्यपि दीर्घेण ह्रस्वत्वांशो निवर्त्तितस्तथापि अत्वमात्रमादेशे
प्यनुवर्त्तते ॥ तदपि चेल्लोपे न निवर्त्येत तर्हि परिभाषाविरोधः दीर्घांशे परंज्ञापकात्परिभाषा बाध्यते ॥ न चैवमंशान्तरेऽपि तद्बाधोऽस्त्विति वाच्य
म् ॥ तदबाधेप्युपपत्तेः प्रकृतसूत्रे एओङ्सूत्रे च गापोष्टकः किंत्वस्यानन्यार्थतां वदन् भाष्यकारश्चात्र प्रमाणं ॥ एतेन सुभंयाशब्दस्य नपुं
सके ह्रस्वत्वे ङे यादेशे दीर्घे च सति आतो धातोरित्यालोपे च सुभंय्य इत्यादि माधवोदाहृतं भाष्यविरोधाच्चिन्त्यं ॥ अतएव नपुंसके श्रीपं ज्ञा
नवदिति ग्रंथः श्रीपा पेति रूपपरतया यथाश्रुतमेव समंजसं भङ्ग्या माधवानुरोधेन प्रायेण ज्ञानवदिति व्याचक्षाणा अपि प्रत्युक्ताः ॥ तथा ग्ला
पतीत्यादौ संध्यक्षराणामप्युपदेशसामर्थ्याद्गुणो न भविष्यति ॥ इतरथा हि एकारमेवोपदिशेत् ॥ मात्रालाघवविरहेपि प्रक्रियालाघवसत्वात् राम
॥ न चैवमायादेशोपि न स्यादिति वाच्यम् ॥ यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यत इति न्यायात् ॥ ४२

गुणंप्रतिहिऐकारोपदेशोनर्थकः ग्लेइत्यस्यापिसुपठत्वात्॥ आयादेशस्यतुनिमित्तमेव॥ नचग्लायइत्येवपठ्यतामितिवाच्यम्॥ तथास
तिहित्वपाग्लायतेइतिरूपंनस्यात्॥ यकारद्वयश्रवणप्रसंगात्॥ जग्लाविलाद्यसिद्ध्यापत्तेश्च॥ यत्तुएकाजजंतत्वाभावादिट्प्रसंगेनग्ला
तेत्यादिनस्यादिति॥ तन्न॥ अनुदात्तोपदेशेष्वेषांसुपठत्वात्॥ नचैवमग्लासिष्टमित्याद्यसिद्धिः॥ अनादंतत्वेनसगिटोरसंभवादितिवा
च्यम्॥ लोपोव्योर्वलीतियलोपेकृतेसगिटोःसुलभत्वात्॥ सन्निपातपरिभाषात्वनित्येतिकृतितुग्ग्रहणेनज्ञापयिष्यते॥ तेनवलसंनिपा
तेनकृतोयलोपोवलसंनिपातविघातकमपीटंप्रवर्त्तयिष्यत्येव॥ अनित्यताश्रयणेनैवहिदाक्षिःगोदः इत्यादावातोर्लोपः॥ अन्यथाइ
ञ्कप्रत्यययोर्प्रतितयोरुपजीव्यत्वाल्लोपोनस्यात्॥ अस्तुवासंनिपातपरिभाषाश्रयणाद्ग्लासिष्टमित्यादिनसिध्येदित्यपियान्तोपदेशेदो
षांतरं॥ सर्वथापिसंध्यक्षराणामुपदेशसामर्थ्याद्गुणोन॥ आपादपरस्तुभवंत्येवेतिसिद्धंस्यादेवत्॥ आदेचइत्यात्वमपितर्हिबाध्यते॥
नह्येजुपदेशआत्वस्यनिमित्तं॥ ग्लेइत्युपदेशेपितस्यसुकरत्वात् शितिगुणेन अशित्यात्वेनऐचोपहारेप्राप्तेएजुपदेशसामर्थ्येनगुणात्व
योर्मध्येकतरद्बाध्यंकतरन्नेत्यत्रविनिगमनाविरहेणोभयबाधध्रौव्यात्॥ नचैवमात्वविधेःकोवकाशइतिवाच्यं॥ धेट्पानेशोतनूकरणे
इत्यादेरवकाशस्यस्पष्टत्वात्॥ नन्वेवमादेङ्इत्येवब्रूयात्तथाचएज्ग्रहणंनिरवकाशमेवेतिचेत्॥ न॥ उत्तरार्थत्वात्॥ मीनातिमिनोत्य
त्रहिएचइत्यनुवृत्त्याआकारांतानामेजंताःप्रकृतयःएजंतानामपीकारांताइतिघुसंज्ञासूत्रेवार्तिककारःस्फुटीकरिष्यति॥ अत्राहुः॥ अ
न्यतरबाधेनैवसंभवेउभयबाधकल्पनंतावदन्याय्यं॥ तत्रपक्षयोरपिविशेषोनावधार्यतेतर्हिविनिगमनाविरहात्स्यादेवोभयबाधः अस्ति
चेहविनिगमकं॥ नध्याख्येतिसूत्रेध्यायतेःकृतात्वस्यनिर्देशेनआत्वाबाधज्ञापनात्॥ किंच॥ एज्ग्रहणसामर्थ्यादप्यात्वंभवति॥ यच्चूक्तमुक्त

श॰कौ॰ त्रार्थतदिति॥तन्न॥ मीनातीतिसूत्रेणहिनएचःस्थाने आत्वंविधीयतेकिंत्वेजंनिमित्तेप्रत्ययेविवक्षितेउपदेशावस्थायामेवान्त्यमात्रस्य
४३ आत्वंविधीयते॥अन्यथादायइत्यादौभावेघञंबाधित्वाएरच्स्यात्॥ ईषद्दवदानःस्ववदानःइत्यातोयुच्चनस्यात्॥ अवद्वायत्रतिरूपा
द्यधेतिणोनस्यात्॥स्पष्टीकरिष्यतेचेदंषष्ठएवभाष्यकृता॥एवंचएङ्निमित्तेप्रत्ययेइत्युच्यमानेपिदापयतिमापयतीत्यादिसिध्यत्ये
वणिचोगुणंप्रत्यपिस्वरूपयोग्यत्वात्॥ रुच्यागुणबाधेपियोग्यतानपायात्॥नचेहफललोपधानंविवक्षितं॥आत्वस्येज्विषयेप्रागेवप्र
वृत्तेरभ्युपगमात्॥अन्यथाघञ्युच्णप्रत्ययानस्युरितिसमनंतरमेवोक्तं॥ तस्मादात्वंभवत्येव॥गुणस्त्कऐ कारो प्रदेशसामर्थ्या
द्बाध्यतइतिस्थितं॥ व्यंजनानांगुणःस्यादितिपरमवशिष्यते॥ततश्चईहितेत्यत्रहकारस्यकंठ्यत्वादकारःस्यात्॥उंभित्यत्रभकार
स्यओष्ठ्यत्वादोकारःततश्चयेवाउनवितेतिस्यात्॥ईकारस्ययणिकृतेअकारस्यइटोसिद्धाद्गुणः॥नत्वल्लोपः॥आर्द्धधातुकोपदेशेयद
कारान्तंतस्यलोपइतिंव्याख्यातत्वात्॥उंभेश्चानुस्वारपरसवर्णयोर्गुणेकर्त्तव्येऽसिद्धत्वादितिनैषदोषः॥सप्तम्यांजनेर्डइत्यत्रडप्रत्य
यस्यडित्करणंज्ञापकं॥ नव्यंजनस्यगुणोभवतीति॥यदिहिस्यात्तर्हिनकारस्यार्द्धमात्रिकस्यमात्रिकेअकारेगुणेकृतेत्रयाणामकारा
णामतोगुणइतिपररूपेचसिद्धंरूपमुपसरजोमंदुरजइति॥तत्किंटिलोपार्थेनडित्करणेन॥स्त्रीगवीषुपुंगवानांगर्भाधानायप्रथममुपसर
णमुपसरः॥प्रजनेसर्त्तेरितिअप्प्रत्ययोघञोपवादः॥प्रजनःस्यादुपसरइतिसंकीर्णवर्गेअमरः॥प्रजायतेस्मिन्प्रजनःपशूनांगर्भग्रहण
कालइतिक्षीरस्वामी॥उपसरेजातउपसरजःमंदुरायांजातोमंदुरजःङ्यापोःसंज्ञाछंदसोर्बहुलमितिह्रस्वः॥वाजिशालातुमन्दुराइत्य राम
मरः॥नचडकारःश्रवणार्थोस्त्वितिवाच्यम्॥प्रावृट्शरत्कालदिवांजइतिकृतटिलोपनिर्देशाल्लिंगात्॥ननुनेदंलिंगंजैस्सयेइत्यस्यकप्रत्य ४३

यांनस्यजइतिनिर्देशोपपत्तेः॥ कथंतर्हि कर्मण्युपपदे विहित आतःकः मातृषिज इत्यादौ स्यादिति चेत्॥ द्विपः पादपः इत्यादिसिद्धये सुपि
स्थः इत्यत्रसुपीतियोगविभागाभ्युपगमात्॥ सत्यं॥ डकारस्य श्रवणार्थत्वे इत्संज्ञाशास्त्रं बाध्येत॥ नचप्रयोजनाभावः टिलोपार्थत्वान्न
चगुणेनान्यथासिद्धिः नदभावस्यापि ज्ञाप्यत्वात्॥ निषादस्थपत्यधिकरणन्यायेन फलमुखगौरवस्यादोषात्वात्॥ डकारस्य श्रवणार्थता
भ्युपगमेसिद्धं तु नित्यशब्दत्वात्किमर्थं शास्त्रमिति चेन्निवर्त्तकत्वात्सिद्धमिति वृद्धिसूत्रस्थ वार्तिकविरोधाच्च॥ नन्वसति ङित्वे रूपं न सि
ध्यति॥ नकारस्थाने गुणस्यापि सानुनासिकस्य प्रसंगात्॥ नच निरनुनासिकेन प्रत्ययाकारेण सह पररूपाच्छुद्धो भविष्यतीति वाच्यं॥ पर
रूपविधानेपि गुणानाम भेदकतया पर्यायेण सानुनासिकप्रसक्तेर्दुर्वारत्वादिति॥ मैवम्॥ एङि पर इतीयता सिद्धे रूपग्रहणं दधिकाद्यत्वादु
पविवक्षोपपत्तेः तस्य त्वेतदेव फलं॥ यादृशं पररूपं निरनुनासिकत्वाद्युपेतं तादृगेव यथा स्यादिति॥ तस्माज्जने ङवचनं ज्ञापकं न व्यंजनस्य
गुणो भवतीति॥ एवं च इग्ग्रहणमात्संध्यक्षरव्यंजननिवृत्त्यर्थमिति वार्त्तिकमसंगतमिति प्राप्ते भगवान् भाष्यकार इत्थं सिद्धान्तमाह स्म॥ उक्त
रीत्या ज्ञापकेनैवात्संध्यक्षराणां निरासेपि व्यंजननिवृत्त्यर्थं सूत्रं कर्त्तव्यमेव॥ यत्तूक्तं जने ङवचनं ज्ञापकमिति॥ तन्न गमेरपि ह्ययं डो वक्त
व्यः गमेश्च गुणे क्रियमाणे आन्तर्यत ओकारः स्यात्॥ ततश्च नगो अगः अभ्युद्गः समुद्गः इत्यादि न सिध्येत्॥ ततश्च तच्चरितार्थं ङित्वं कथं व्यं
जनस्य गुणाभावं ज्ञापयेदिति॥ ननु जने ड इत्येष डप्रत्ययो गमेर्न विधीयते किंतु गमश्च अन्तात्यन्ताध्वदूरपारेति प्रकरणे पठितेः सर्वत्रापि दृ
श्यत इति वार्त्तिकेन डप्रत्ययान्तरमेव॥ तथा च कथं भाष्यकृतोक्तं गमेरप्ययं ड इति॥ सत्यम्॥ सप्तम्यां जनेर्ड इति प्रकरणे तावदन्येष्वपि दृ
श्यते इति सूत्रेण डो विधीयत इति निर्विवादं॥ तत्र चान्येष्वप्युपपदेषु जनेर्डो दृश्यते इत्यक्षरार्थः॥ तेनाजो द्विजो नुज इत्यादिसिद्धं॥ एवम

पिधात्वं तराडुविधायकाभावे परितः खातापरिखेत्यादि न सिद्ध्येदित्याशंक्य तत्र वार्त्तिककृतोक्तं ॥ अन्येभ्योपि दृश्यत इति ॥ अयं च सौत्र दृ
श्यपि ग्रहणसूचित एवार्थो वार्त्तिकेन विवृतो न त्वपूर्वः संगृहीतः । तथा च तत्र वृत्तिकार आह । अपिशब्दः सर्वोपाधिव्यभिचारार्थः तेन धात्वंत
रादपि भवति परितः खाता परिखेति ॥ दृशिग्रहणात्कारकांतरे कालान्तरे चेत्यादि तत्रैव स्पष्टं ॥ एवं स्थिते सौत्रेणैवानेन परिखेत्यादेरिव नगो
ग इत्यादेरपि सिद्धौ अंतात्यंतेति प्रकरणे अन्यत्रापि दृश्यत इति वार्त्तिकं न कर्त्तव्यमेव क्रियमाणं वा एतत्सूत्रसिद्धार्थविवरणपरतयानेय-
मित्याशयेन भगवतोक्तम् ॥ गमेरपित्यपिडो वक्तव्य इति ॥ नन्वेवमपि डित्वं व्यर्थमेव ॥ गमेर्विचैव सिद्धे गमेर्डोरिति डोप्रत्ययविधानेन मका
रस्य गुण ओकारो न भवतीति ज्ञापितत्वात् ॥ तस्माड्डुप्रत्ययस्य डित्वं पूर्वोक्तरीत्या ज्ञापकमेव ॥ किंच ॥ डोप्रत्ययविधानमेव व्यंजनस्य गु
ण इति ज्ञापयति ॥ अन्यथा विचैव सिद्धौ किं तेनेति चेत् ॥ न ॥ विचि हि सति गुणः क्रियमाणः सानुनासिक ओकारः स्यादिति निरनुनासिकसि
द्ध्ये डोप्रत्ययविधानादिति दिक् ॥ अत्र वदंति ॥ ततो ते ईउः सन्वच्चेति डित्करणान्न व्यंजनस्य गुणो भविष्यति ॥ यत्तु रूपातिदेशोयं कार्याति
देशो वा आद्ये ऊर्णुनविषतीत्यत्रेव द्विर्वचने चीति स्थानिवद्भावेन तत अउ इति स्थिते सन्यत इतीकारः सानुनासिकः स्यात् ॥ द्वितीये तु अ-
भ्यासकार्यं दुर्लभमिति ॥ तन्न ॥ आद्ये गुणानां भेदकत्वादिमौ इमे इतिवदुपपत्तेः द्वितीयेपि बभुर्जे हुरित्याद्यर्थं धात्वधिकारीयद्वित्वे अभ्या
ससंज्ञास्वीकारात् ॥ अत एव लिटि धातोरिति सूत्रे धातुग्रहणं तिष्ठतु तावत्सानुनासिकमिति भाष्यं ॥ आदेच इति सूत्रे धातुग्रहणानुवृत्ते-
रापाततो भाष्ये प्रदर्शितत्वेपि व्युड्विधिभाष्येननुवृत्तेरेव सिद्धांतिततया भाष्याशयस्येत्थमेव वर्णनीयत्वादिति दिक् ॥ किंच ॥ यथा स्थाने
न्तरतमपरिभाषा संस्कृतावनुनासिकपरसवर्णविधौ स्थानप्रयत्नाभ्यामन्तरतमं एतन्मुरारिस्त्वङ्करोषीत्यादिकं विषयं लब्ध्वा चरिता

शैौ च नुर्मुखः कुंडं रथेनेत्यादौ नाम वर्त्तेते इति हयवरट्सूत्रे सिद्धांतितं ॥ तथेहापि सार्वधातुकजुसि गुणसिद्धिरज्ञाद्यः नेता अबिभयुः अ
नैषीदित्यादौ चरितार्थाः उभिता अनेनिजुः अभैत्सीदित्यादिषु न भविष्यंति ॥ न चैवं नेता अनैषीदित्यादावेव स्यान्न गुणप्रमाणैस्त्रिभिरान्तर्य
त्वाभावेन नेता अनैषीदित्यादौ प्रमाणान्तर्यविरहेण गुणवृद्ध्योर्न स्यातामिति वाच्यम् ॥ सृघस्यदः क्मरच् इति क्मरचः कित्करणेन प्रमाणत आ
न्तर्यस्याविवक्षा ज्ञापनात् ॥ न चैवमपि ईहिता ईशितेत्यत्र कंठ्यतालव्ययोर्विवृतयोः हकारशकारयोस्तादृशावेव अदेतौ स्यातामि
ति वाच्यम् ॥ अच्च घ्रुलाविति सूत्रस्य प्रत्याख्यानावसरे ऊष्मणामीषद्विवृततायाः सिद्धान्तयिष्यमाणत्वात् ॥ न चैवं विवृतकरणाः स्वरा
स्ताभ्यामेऔ विवृततरावित्यादिशिक्षानुरोधान्नेता नेनेत्यादावपि गुणाप्रवृत्तिः स्याद्विवृतविवृततरत्वकृतवैलक्षण्यसत्त्वादिति वा
च्यम् ॥ तथा सति विधेर्निर्विषयतापत्तेः जयः करणमित्यादिनिर्देशैः क्रुसन्क्मरच्प्रभृतीनां कित्त्वेन च इकारादिषु गुणप्रवृत्त्यनुमाना
च्च ॥ आत्त्वं व्यक्षरव्यंजनेषु तु गुणाद्यप्रवृत्तिरेवोचिता ॥ तथा च निर्देशाः याति वाति द्राति प्साति ध्यायतेः संप्रसारणं च प्रहूतिच्चिनोति दे
ग्धि सुचेत्यादि ॥ अथ क्नोः कित्त्वेनापि गुणवृद्धिविधावंतरतमपरिभाषानुपस्थितिरेव ज्ञाप्यतामिति चेन्न ॥ सत्यामपि तस्यां परिभाषाया
मीकारस्याकारादिनिवृत्तये अंतरतमपरिभाषाया आवश्यकत्वादिति ॥ तदेवम् ॥ ङ ओर्डित्वाद् नान्तर्यान्निर्देशाच्च निराकृतं ॥ व्यं
जनं भाष्य एवैच आकारश्च निराकृतः। तस्मादर्थं सूत्रमिदमथ पद्युत्तरार्थताविभज्य योगं किमिति परिभाषात्वमिष्यते। अन्त्रो व्य
ते। क्ङिति चेति सूत्रे चकारस्य इतिशब्दपर्यायतामाश्रित्य इक इति यो गुणवृद्धी तयोर्निषेध इति तावद्दृश्यते ॥ अन्यथा लैगवायन इ
त्यत्र ओर्गुणोऽपि निषिध्येत ॥ औपगवादिस्तु तस्यावकाशः तथापि रोहित्यमित्यत्रादिवृद्धिश्च न स्यात् ॥ एवं स्थिते प्रदीपं परिभाषा

म.कौ. त्याख्यायतेतदाकथंचित्तत्रतत्रगुणवृद्धिविधौइकामेवस्थानित्वपर्यवसानेपिइकइतिपदानुच्चारणेनेग्लक्षणत्वविरहान्निषेधोनप्रव
४५ र्त्तेत॥ ततश्चकृतःकृतवान्कुरुतःछिन्नंछिन्नवानित्यादिन सिध्येत्॥निषेधसूत्रंचनिर्विषयंस्यात्॥परिभाषापरित्यागपक्षेइग्लक्ष
णयोर्गुणवृद्ध्योरप्रसिद्धत्वात्॥ तदेतत्स्फुटीकृतंभाष्यकृता॥उत्तरार्थमेवतर्हिमृजर्थंवृद्धिग्रहणमिति॥तस्यत्वयमाशयः॥यद्यपिसि
चिवृद्धिरितिविधौवक्ष्यमाणरीत्यापरिशेषादिकामेवस्थानित्वंलभ्यते॥ तथापीग्लक्षणत्वंविनानिषेधोनप्रवर्त्तेत॥तस्मादुत्तरार्थंनिषे
धप्रवृत्त्यर्थंवृद्धिग्रहणमिति एवंचवदतान्यायसाम्याद्गुणग्रहणस्याप्येतदेवप्रयोजनंसूचितं॥ कथंपुनर्गुणवृद्धिविधौ[illegible]वेत्रपरिभाषा
व्यतिरेकेणइकःस्थानित्वपर्यवसानंयेननिषेधार्थतावर्ण्येतइतिचेत्॥शृणु॥सार्वधातुकार्धधातुकयोर्जुसिचेतिगु[illegible]तावदलोन्त्य
परिभाषयाअंगान्त्येअलिप्राप्तोप्युक्तज्ञापकादिभिरासंध्यक्षरव्यंजनेभ्योव्यावर्त्तिताविक्ष्वेवविश्राम्यतः॥मिदिपुगं[illegible]लघूपधादिगुणे
पुनुस्थानीनिर्दिष्टएव॥तथाहि॥मिदेर्गुणः इत्यत्रमिदइर्मिदिः तस्यमिदेरित्यर्थः पुकिअंतःपुगंतः लघ्वीउपधालघूपधापुगंतश्चलघू
पधाचेतिसमाहारद्वंद्वात्षष्ठी॥नचैववापयतीत्यादावतिप्रसंगःसंनिपातलक्षणपरिभाषयाआदंतलक्षणस्यपु[illegible]कोगुणाप्रवर्त्तकत्वात्
॥ऋच्छत्यॄतामित्यत्रापिहृस्वोऽर्त्तौदीर्घस्यचेतित्रयाणांप्रश्लिष्टनिर्देशः तद्यथा॥आचऋतश्चॠतः ऋच्छतेराङ्ऋच्छत्यासचॠतश्चते
षामितिषष्ठीतत्पुरुषद्वंद्वोभयगर्भोद्वंद्वः ऋच्छत्याचआचॠतश्चेतित्रिपदद्वंद्वोवा॥तेनऋच्छस्त्रकारस्यस्थानित्वंलभ्यते॥वस्तुतस्तुत्र
तुर्णामिहप्रश्लेषोबोध्यः तेनारिवान्सर्वाभ्रूणान्मारुषीत्यादावर्त्तेःक्सौगुणःसिद्धःपुनर्विधानसामर्थ्यात्॥अन्यथाक्सोःकित्करणसा राम.
मर्थ्यात्तितीर्वानित्यत्रेवगुणोनिषिध्येत॥एतच्चक्कसुश्चेतिसूत्रेस्फुटीकरिष्यामः॥तथाऋदृशोऽङीत्यत्रापिउरङ्गुणइतियोगोविभज्य ४५

ते॥ ततः हृश्वः उरित्याद्यनुवर्त्तते॥ स्थूलदूरेति सूत्रेपि योगविभागः कर्त्तव्यः स्थूलदूरयुवह्रस्वानां यणादिपरमित्येको योगः क्षिप्रक्षुद्रयोः पू
र्वस्य च गुणः इति योगांतरं॥ तत्रस्थवीयानित्यादौ ओर्गुणेन सिद्धम्॥ आभीयस्यासिद्धत्वस्य श्नसोरल्लोप इति तपरकरणेनानित्यताज्ञापना
त्॥ भाष्यकृता प्रत्याख्यानाच्च॥ यण आदिर्यणादिः ततः परमिति समासः तथा च क्षिप्रक्षुद्रयोर्यण आदी पकारदकारौ ततः परस्य रशब्द
स्य लोपः ताभ्यामेव च पूर्वस्य इकारस्य उकारस्य च गुण इत्यर्थः॥ तदित्थं गुणाः सर्वे इकि विश्रांताः॥ मृजेर्वृद्धावपि अच इत्यपकृष्यते॥ मृजे
र्वृद्धिरचञ्नितो ञ्णितीति भवत्येव॥ न चैवं अमार्ट् इत्यत्र अटोपि वृद्धिः स्यादिति वाच्यम्॥ लादेशेषु कृते घ्वडिति पक्षे परत्वाद्धल्ङ्यौ सत्यां अ
ट्॥ तत्र कृतेपि पुनर्वृद्धिर्न भवति॥ सकृत्प्रवृत्त्या चरितार्थत्वात्॥ यदा तु असिद्धवत्सूत्रप्रत्याख्यानाय हल्ङिति हिल्के: कनिर्देशमाश्रित्य उ
पदेशे आर्द्धधातुक इत्यनयोरन्यतरदनुवर्त्य वालावस्थायामेवाट् क्रियते॥ एरनेकाचः इति विभज्य इणो यणित्यनुवर्त्य अनेकाचश्चेन हि
इणएवेति नियममाश्रित्य अद्यो यातामित्यादौ यण्वार्यते॥ तदा लावस्थायां यद्यपि वृद्धिर्न भवति॥ लकाराणां ङित्वेन मृष्ट इत्यादावक्ङित्त्वेनि
षेधात्॥ ततश्चान्तरंगत्वादाडागम एवं तथापि अंत्याभावेंत्यसदेशस्येति परिभाषामाश्रित्य अटो वृद्धिर्निवर्तनीया॥ परिभाषेयं प्रत्याख्यानप
क्षे तु अंगाक्षिप्तेन प्रत्ययेनाङ्विशेष्यते येन नाव्यवधानन्यायाच्च सिद्धममार्ट इत्यादि रूपं॥ सिचि वृद्धावपि विधेयायां नास्तीक् परिभाषया उप
योगः व्यावर्त्याभावात्॥ न चाचिकीर्षीदित्यकारो व्यावर्त्यः णपल्लोपाविपड्. यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धमिति वचनाद्ल्लोपेनैव
सिद्धत्वात्॥ अन्यथाचिकीर्षक इति नस्याच्चिकीर्षायक इति —————— च प्रसज्येत॥ आकारस्य तु नास्ति विशेषः सगिड्भ्यो बा
धश्चेत्युक्तं॥ एजंतमपि न संभवति आत्वविधानात्॥ रैनौग्लौशब्दानामाचारक्विवंतानां सत्यामसत्यां वा वृद्धौ न कश्चिद्विशेषः॥ गोस्त्वन्द्रा

त्किपि अगषीदित्यत्रापि नातिप्रसंगः॥ ऋत इद्धातोरित्यतोनुवृत्तेन धातुग्रहणे न सिजास्सिमस्य धातोर्विशेषणे सति धातुरेवयो धातुर्न तु कथंचि
त्प्रातिपदिकमिति व्याख्यानादिति कैयटादयः॥ नन्वेवं कवेः अकवापीत्॥ विधोः अविधावीत्पितुः अपितारीत्॥ अंतरंगत्वापि गुणं सिचिवृद्धि
र्बाधते इति वदन्माधवो विरुध्येत॥ सत्यम्॥ पद्यविरोधः संपादनीय इत्याग्रहस्तर्हि स्थंवर्णनीयं॥ धातोरिति वद्धातइत्यप्यनुवर्त्तते॥ तत्त्वं वाक्य
भेदेन संबध्यमानं नियमार्थं संपद्यते॥ ओदन्तस्य धातोश्चेद्वृद्धिस्तर्हि धातोरेव धातोर्न तु नामधातोरिति॥ यद्वा॥ नेटीत्यत्र नेति योगविभज्य
मंडुकप्लुत्या संबधातुवृत्त्या वा गोत इत्यनुवर्त्य ओकारान्तस्य वृद्धिर्निषिध्यते॥ अथवा बहुलं छन्दसीत्यतो बहुलमित्यनुवर्त्य सिचिवृद्धिर्ना
मधातावित्यंगं तस्य भवति न तु ओदन्तस्येति कथं चित्समाधेयं॥ व्यंजनेषु अन्तरतमपरिभाषाबलेनैवानुनासिकपरसवर्णयोरिवातिप्रसंग
उद्धृत एव॥ अभ्युपेत्य तु ब्रूमः॥ नाप्राप्तायां सिचि वृद्धावारभ्यमाणा हलंतलक्षणा वृद्धिर्बाधिका भविष्यति॥ नेटीति निषेधस्तु हलंतस्य या
वती वृद्धिः प्राप्ता सिचि वृद्धिरिति वा हलंतस्येति वा तस्याः सर्वस्याः न तु सूत्रविशेषप्रापितत्वे आग्रहः तेनाकोषी दमीषीदित्यादौ द्विविधा
पि वृद्धिर्निषिध्यत इति सुस्थं॥ तस्मान्निषेधसिध्यर्थमिग्लक्षणतां संपादयितुं सूत्रमिति स्थितम्॥ स्यादेतत्॥ यूयं कृतवान् छिन्नम्छिन्न
वानित्यादौ निषेधसिद्धये गुणग्रहणमस्तु॥ वृद्धिग्रहणं तु व्यर्थं॥ न च मृष्टो मृष्टवानित्यादौ निषेधसिद्धिस्तत्फलं॥ योगविभागेन सिद्धत्वा
त्॥ तथाहि॥ मृजेर्वृद्धिरित्यस्यानंतरमजादौ क्ङितीति वत्येवं रूपं वचनमवश्यं कर्त्तव्यम्॥ मृजंति मार्जंतीत्यादिसिध्यर्थं॥ एवं स्थिते अजा
दौ क्ङितीति योगो विभज्यते॥ नियमार्थं चेदं। क्ङिति चेद्भवति अजादौ एवेति तेन मृष्टो मृष्टवानित्यादि सिद्धं॥ ततोजादावपि विकल्पेनेत्ये
तदर्थं वेति द्विनीयो योग इति॥ तस्माद्वृद्धिग्रहणस्य फलं दुरुपपादमिति॥ अत्राहुः॥ णूस्तुतौ धूविधूनने कुटादिषु पठ्येते॥ ताभ्यांलुङि

अनुवीद् धुवीदितीष्यते तत्र सिचि वृद्धेः क्ङिति निषेधायेग्लक्षणतां संपादयितुमिह वृद्धिग्रहणमिति॥ नन्विहान्तर्भूतसिज्मात्रापेक्षत्वा
दंतरंगे उवङि कृते हलंतत्वान्नेटीति निषेधः सिद्ध इति चेत्॥ न॥ सिच्यन्तरंगं नास्तीति सिद्धांतादुवङः प्रागेव वृद्धिप्रसंगात्॥ स्यादेतत्
॥अंतरंगं बलीय इति नावद्यः परस्मिन्निति सूत्रे स्थापयिष्यते॥ तदविशेषात्सिच्यप्यस्तु॥ नचैवमचैषीदहैषीदित्यादौ गुणः स्या
दिति वाच्यम्॥ तस्यैव वृद्धिसंभवेनेष्टापत्तेः नहीदानीं विधाविग्रहणमस्ति॥ येन एकारस्य वृद्धिर्न लभ्येत॥ नचैवमप्यस्तौषीदित्या
दावंतरंगत्वाद्गुणे कृते ओतानेति व्याख्यानपक्षे वृद्ध्यसंभवः बहुलग्रहणादनिगंतानां नेति पक्षे तु अचैषीदित्यादावपि दोष एवेति वा
च्यम्॥ ओतो णित्तो रेवधातोर्न तु नाम धातोरिति तृतीयपक्षाश्रयणेन सर्वसमाधानात्॥ अकार्षीदित्यादौ हलंतलक्षणा वृद्धिरस्तु॥ अं
नारीदित्यादौ तु अंतरंगत्वाद्गुणे हलंतलक्षणायां वृद्धौ नेटीति प्रतिषिद्धायामतो हलादेरिति विकल्पं बाधित्वा अतो ल्रान्तस्येति नि
त्या वृद्धिः॥ अलावीदित्यादावपि अंतरंगत्वाद्गुणावादेशयोः कृतयोरतो ल्रांतस्येत्यत्र लोपो व्योरिति लोपे न वकारस्यापि व्याख्याना
न्नित्या वृद्धिर्भविष्यति॥ माभवानवीत्॥ अमवीदित्यत्रापि तर्हि नित्या वृद्धिः स्यादिति चेन्न णिश्विग्रहणमपनीय तत्स्थाने ऽविमव्योः प्र
क्षेपेण वृद्धिनिषेधात्॥ नत्वस्मिन्पक्षेऽपि श्विग्रहणमुपयुज्यते॥ औनयीदश्वयीदित्यत्रान्तरंगत्वाद्गुणायादेशयोः कृतयोः यान्तानां नेत्ये
व निषेधसिद्धेः॥ नन्वेवमवेरिव मवेरपि नित्यं निषेध एव स्यात्॥ इष्यते तु विकल्पः॥ नैष दोषः॥ अतो ल्रांतस्येत्यत्र वकारप्रश्लेषेण नि
त्या वृद्धिः प्राप्ता सैव ह्म्यविमव्योर्नेत्यनेन मवेर्निषिध्यते न तु अतो हलादेरित्येषापि॥ मध्येऽपवादाः पूर्वान्विधीन्बाधंते नोत्तरानिति
न्यायात्॥ नचैवं जागर्तेरपि तथा प्रसंगः तत्र बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इति स्वीकारात्॥ यद्वा॥ अपवा

शा.कौ. द्निषिद्धे उत्सर्गो न प्रवर्त्तत इति जागर्त्तीत्याश्रयणीयं प्रवर्तते तु प्रवर्त्तेत इति बाध्यसामान्यविशेषचिन्तयोः बाधके निषिद्धे बाध्यस्य प्रवृत्त्यप्र
५७ वृत्त्योश्चलस्यानुरोधेन व्यवस्थाया अनुपदमेव वक्ष्यमाणत्वात्॥ नचैवमगवीदित्यत्रापि नित्यात् वृद्धिः स्याद् हकारप्रश्लेषादिति वाच्यम्
॥ सिचि वृद्धेरिवास्या अपि धातुग्रहणेन वारणात्॥ तस्मात्सिच्यन्तरंगाश्रयणेनैव अनुवीदधुवीदित्यादेः सिद्धौ क्ङिति चेति प्रतिषेधस्या
नपेक्षणाद् वृद्धिग्रहणं व्यर्थमेवेति॥ अत्रोच्यते॥ वकारप्रश्लेषे सति शवति गतिकर्मा कंबोजेषु विकार एवैनमार्या भाषन्त इति पस्पशायां
भाष्यकारैरभ्युपगतस्य शवधातोरपि नित्यवृद्धिप्रसंगः तस्यापि प्रतिषेधे वाकश्यं णिश्विभ्यां नियमानं॥ गौरवप्रसंगात्॥ किंच॥ न वयं
व्यसनितया सिच्यन्तरंगं नास्तीति ब्रूमः। किन्तु न्यायबलाज्ज्ञापकबलात्फलानुरोधाच्च॥ तथाहि॥ येन नाप्राप्तिन्यायेनाम्नन्तरं वृद्ध्या बाध्य
ते॥ सत्यपि संभवे बाधनं भवतीत्यभ्युपगमात्॥ अन्यथा तक्रेण दधि न बाध्येत॥ अमकजादिभिश्च शप्प्रत्ययक प्रत्ययाद्योन बाध्येरन्
॥ देशभेदेन उभयसंभवात्॥ न च मध्येपवादन्यायेनोवङेव वृद्ध्या बाध्येत न तु गुणोपीति वाच्यम्॥ बाध्यस्य भेदेन विवक्षायां ह्येतदेवं
स्यात्॥ बाध्यस्य सामान्यचिन्तायां तु विषये प्राप्तस्यानपवादभूतं सर्वं बाध्यते यथा अचिर ऋत्येतेन गुणदीर्घोत्वानि॥ अन्यथा तत्रापि मध्येप
वादन्यायेन रेफो दीर्घोत्वे एव बाध्येत न तु गुणं॥ तस्य परत्वात्॥ बाध्यस्य च क्वचिद्भेदेन चिन्ता क्वचित्तु सामान्यरूपेणे त्युभयमपि लस्यानु
रोधात्तत्र तत्राश्रीयते॥ णिश्विग्रहणं चात्र लिंगम्॥ अन्यथान्तरंगत्वाद्गुणायादेशयोः कृतयोर्यन्तानां नेति निषेधादेवानपीदश्वयीदित्यादेः सि
द्धौ किं णिश्विग्रहणेन॥ ज्ञापकान्तरमप्युक्तं भाष्ये॥ पञ्चकरोत्सकारग्रहणं लघोरिति कृतेपीति॥ अस्यायमाशयः॥ अतो हलादेरिति सूत्रे अद्ग्र राम
हणस्य न तावत्संध्यक्षरादिकं व्यावर्त्यं॥ लघुग्रहणेनैव तद्व्युदासात्॥ इदुदतः परमवशिष्यन्ते अचेतीत् अकोषीन् अनर्तीदिति॥ तेष्वंत ५७

रंगेण गुणेनापहृतत्वे तर्हि व्यर्थमद्ग्रहणं स्यात्॥ न चाकुटीद् पुटीदित्यादावुकारव्युदासाय तदिति वाच्यम्॥ तत्रापि अंतरंगेण गुणेन वृद्धि
बाधे सति गुणे ङित्वान्निषिद्धेपि वृद्धेरप्रवृत्तेः नहि देवदत्तस्य हंतरि हते देवदत्तस्य पुनरुन्मज्जनं भवतीति न्यायात्। अत एव नांतःपादमिति सूत्रे पूर्वनिषे
धे सति अयादयोपि न प्रवर्त्तेते तेन सुजाते अश्वसूनृते इत्यादि च सिध्यतीति स्वीकृतं भाष्ये। न चैवमपवादाभावे पुनरुत्सर्गस्य स्थितिरिति निर्वि
षयं स्यात् वृक्षावित्यादौ नादिचीति पूर्वसवर्णे — निषिद्धे वृद्धिश्च न प्रवर्त्तेतेति वाच्यम्॥ भियोध्यौ नदेतौ स्त्रदित्यादि लिंगेन अपवादे निं
षिद्धे उत्सर्गोपि न प्रवर्त्तेत इत्यस्यासार्वत्रिकत्वाभ्युपगमात्॥ तदेतत्तत्र तत्रोच्यते॥ नोत्सहते प्रतिषिद्धा सती बाधितुमिति॥ तथा च॥ पक्ष
भेदाश्रयेणांतो हलादेरिति अद्ग्रहणमपि ज्ञापकमिति स्थितम्॥ फलमप्यस्ति॥ यदि हि सिच्यन्तरंगं स्यात्तर्हि चिनीप्रभृतिभ्यो यङ्लुगंते
भ्यः चिरिणोति जिरिणोति भ्यां च लुङि सिचि अचेचायीदनेनापीद् चिरापीद् जिरापीदिति स्यात्॥ गुणापादेशयोः कृतयोर्योन्तानां नेति प्र
तिषेधप्रसंगात्॥ यदि तु बाध्यविशेषचिंतायां मध्येपवादन्यायमाश्रित्य उवङ् च बाध्यतेनेन तु गुण इत्याश्रीयते तदाप्येतन्न सिध्यत्येव॥ अस्मा
त्सिचि सर्वमप्यंतरंगं नास्त्येवेति सिद्धांतं साधयितुं बाध्यसामान्यचिंतैवाश्रयणीया॥ एतदर्थमेव हि भाष्ये ज्ञापकोपन्यासः कृतः॥ अन्यथा
न्यायेनैव सिद्धेन्तरंगस्यापि बाधे किं ज्ञापकवर्णनेन॥ एवं स्थिते न्यनुवीत् न्यधुवीदित्यत्र [illegible]ति चेति निषेध एवाश्रयणीयस्तत्र [illegible] इग्लक्षण
त्वसिद्धये वृद्धिग्रहणमपीह कर्त्तव्यमेवेति स्थितं॥ एवं च सत्यसंभवादपि वृद्ध्या सिच्यन्तरंगं सर्वं बाध्यते॥ यदि हि स्यात्तर्हि क्वापि सिची
गंतमंगं न लभ्येतैवेत्यवधेयं॥ तथा च इग्लक्षणत्वस्य निषेधप्रवृत्त्यर्थमावश्यकत्वे स्थिते तत्र तत्र आत्सन्ध्यक्षरव्यंजना[illegible]व्यावृत्तिरपि केप्र
रि भाषयैव सिध्यतीति ज्ञापकवर्णनादि क्लेशोपि नाश्रयणीयः॥ न चैवं द्यौः पंथाः इमं इत्यादावपीक्परिपस्थितिवशादि[illegible]व औत्वमात्वं

प्रा॰कौ॰ मत्वं च स्यादिति वाच्यम्॥ [illegible]वृद्धिशब्दयोरनुवृत्तौ पुनर्गुणवृद्धिग्रहणसामर्थ्याद्धि शब्द्व्यापारे प्याश्रीयते॥ गुणवृद्धी ये गुणवृद्धी न तु
४८ शब्दान्तरेण विहिते इति अनुवृत्ताभ्यां विशेषणाद्वा॥ नन्वच श्चेतिसूत्रे ह्रस्वादिग्रहणानुवृत्त्या संज्ञया विधानं पदोपस्थितिरितिस्थास्यतितत्
मध्योह्दिव औत्सथियमथ्यृभुक्षा मात्यदादीनाम इत्यत्रेकृपदोपस्थानं न भविष्यति॥ यदिहि स्यात्तर्हि चक्षि इत्यत्र संज्ञया विधानेति पत्नाश्रयणं
व्यर्थं स्यादिति चेत्॥ न॥ दिवउदित्यादिषु अगुणवृद्धिसंज्ञकेष्वचृपरिभाषानिवर्त्तनेन चरितार्थत्वात्॥ अष्टन आविभक्तौ क्रियादावि को
ऽसंभवेन तत्र चरितार्थत्वाच्च॥ तस्मात् द्योः पंथाः इममित्यादिसिद्धये इहापि संज्ञाविधाने नियमं संपादयितुं पुनर्गुणवृद्धिग्रहणमिति॥
चः॥ ननु पंथा इत्यनुदाहरणं॥ इतो दिनि सिद्धे आद्धिधिसामर्थ्याद्देवेकृपदस्यानुपस्थितेरिति चेन्न॥ ऋभुक्षि ऋकारोकारार्थे आद्धिधि
संभवात्॥ न चेकः सामान्यानन्तर्यविवक्षणाद्येन नाव्यवधानाश्रयणाच्चैवमिति वाच्यं॥ तथापि संबुद्ध्यर्थनयासामर्थ्योपक्षयात्॥ न चै
वमित आदित्येव ब्रूयादिति वाच्यम्॥ ऋभुक्षणमिद्धमित्यस्यासिद्ध्यापत्तेः आद्धिधौहि बाषपूर्वस्येति न तत्सिद्धिरिति दिक्॥ यत्तु भाष्ये स॰
वमितआदित्येव ब्रूयादिति वाच्यम्॥ इमं इत्युदाहृतं तत्र स इमं मंत्रमपश्यदिति ब्राह्मणवाक्यैकदेशानुकरणमात्रं॥ उदाहरणं तु इममित्येवं न तु स इत्यपि॥ तच्छब्दे इकोऽ॰
संभवेन इक इति नियमस्यापवृत्तेरित्याहुः॥ वस्तुतस्तु स इत्यप्युदाहरणं साध्वेवत्यदादीनाम इति हि विधिवाक्यं॥ तत्र चेक इत्यस्योपस्थि
तौ ह्रीदमोरेवात्वं स्यान्न त्वन्येषां॥ गणेन निर्देशस्तु संज्ञोपसर्जनव्यावृत्त्यर्थमुत्तरार्थं च स्यात्॥ तदोः स सावितिसत्वं हि त्यदादीनामेव
तदोर्विधीयते॥ अत्रेदमवधेयम्॥ शब्दव्यापाराश्रयणानुरोधेनापि गुणवृद्धिग्रहणं मास्तु॥ इकस्तौ इत्येतावतैव सिद्धेः॥ वस्तुतस्तु रा॰
तावित्यपि व्यर्थं॥ इक इत्येव सूत्र्यतां॥ संपूर्णं पूर्वसूत्रद्वयमनुवर्त्त्य वृद्धिरिति आदैचौ यत्र विधीयेते गुण इति च अदेङौ तत्र इक इत्यु ४८

पतिष्ठते इति व्याख्यानात्॥ ननु एवं गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणसामर्थ्यादित्युत्तरग्रंथासंगतिः अस्य यथाश्रुताभिप्रायकत्वा
न्ग्रहणपदस्यानुवृत्तिपरतया संपूर्णसूत्ररूपानुवृत्तिसामर्थ्यपरत्वाद्धेति दिक्॥ व्याख्याने लिंगं इतोदित्तीक्ग्रहणम्॥ अन्यथा तत्रापीक्पदो
पस्थितौ उक्तरीत्या येननाव्यवधानन्यायादिकारोकारव्याप्तौ च सत्त्वां किं तेनेति नदेनदिग्ग्रहणं किमर्थमिति भाष्ये पाइग्ग्रहणमात्रं व्य
स्परेत्यादिवार्तिके नन्वसूच्यते॥ अन्यथाहि सूत्रं किमर्थमित्याद्येव ब्रूयात्॥ यत्तूत्तरार्थं गुणवृद्धिग्रहणं कर्त्तव्यमेवेत्याशयेनेग्ग्रहणमिं
त्युक्तमिति भाष्याभिप्रायवर्णनं॥ तन्न॥ पूर्वसूत्रानुवृत्त्यैवसिद्धावुत्तरार्थत्वस्यापि दुरुपपादत्वात्॥ समुदायापेक्षायां मंडूकप्लुतेः संबंधानु
वृत्तेर्वीत्तयापि षाच्यत्वात्॥ इग्ग्रहणस्याप्युत्तरार्थतया तदंशेपि शंकानुत्थानाच्च॥ इक इति योगः किमर्थं विभज्यत इति प्रश्नबीजमिति चे
त्तर्हि गुणवृद्ध्यंशेपि तस्याविशिष्टतया सूत्रं किमर्थमित्येव ब्रूयादिति दिक्॥ यत्तु प्रधानाव्ययवद्वारा समुदायाक्षेपोयमिति तदपि नातीव
शब्दस्वरसानुगुणं तस्मादुक्त एवाशयः साधुः। एवं चेक इति योगविभाग एव पूर्वपक्षसिद्धांताभ्यां समर्थित इतीह पर्यवसितोर्थः॥ तत्र स्वा
नेत्र एकेन योगविभागेन सकलेष्टसिद्धौ मृजेर्वृद्धिरचः उरड्गुण इत्यादि बहुतरयोगविभागाश्रयणेनान्यथासिद्धिवर्णनेनादर्त्तव्यमि
तिस्थितं॥ इयं च परिभाषा अलोंत्यपरिभाषायाः शेषो वा शेषिभूता वा तया सह समुच्चिता वा वैकल्पिकी वा तदपवादो वा पूर्वविप्रतिषेधा
द्बाधिका वा पदोपस्थापिका वेति सप्त पक्षाः संभाव्यंते यद्यपि तथाप्याद्यानां षण्णां दुष्टत्वात्सप्तम एव[illegible]द्धांतितः॥ तथाहि॥ सार्वधातुकार्द्ध
धातुकयोरित्यत्र स्वस्वनिमित्तवशात्परिभाषाद्वयं सन्निहितं॥ तत्रांगस्येति षष्ठी यदि पूर्वमेवांत्यमलं नीता अंगांत्यस्य गुण इति षष्ठ्यादिको
अन्त्यो विशेष्यते तदेकपरिभाषाशेषभूता॥ यदि तु पूर्वमिकाङ्गस्य विशेषणात्तदंतविधिः इगन्तस्यांगस्येति ततः [illegible]भवन्नलोन्त्यस्येति

प॰ शे॰ नस्यहिती यः पक्षः तदिदं पक्षद्वयमपि षष्ठीतत्पुरुषं बहुव्रीहिं चाश्रित्य तच्छेषपक्ष इति भाष्ये व्यवहृतं ॥ इह पक्षद्वये पि मिदेर्गुण इत्यादौ शे
४१ षः यो हि मिदेरन्त्यः नासाविक् यश्चेक् नासावन्त्यः तथा चावश्यं परिभाष्यायां त्यक्तव्यायां सत्यां विनिगमकाभावादुपस्थास्ये सर्वादेशो
गुणः स्यात् ॥ तदुक्तं वार्तिककृता ॥ इग्लक्षणावलोंत्यस्येति चेन्मिदिमृजिपुगंतलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं ॥ सर्वादेशप्रसंगः
श्चानिगंतस्येति ॥ चकारो हेत्वर्थः ततश्च सर्वादेशप्रसंगो हीति फलितं ॥ अथ मिदः इमिदिर्ज्ञेनस्य मिदेरित्यादि पूर्वोक्तरीत्या कथंचिदिह स
र्वत्रैक एव स्थानित्वं लभ्येत तथापि भिन्नमित्यादावनिग्लक्षणत्वाद्गुणनिषेधो न स्यात् ॥ अथ क्नोः कित्वात् ज्ञापकादनिग्लक्षणत्वेपि निषे
धः तर्हि लेगवा यनः पौरोहित्यमित्यादावतिप्रसंगः अथ लक्ष्यानुरोधाल्लघूपधगुणमात्रविषयकं ज्ञापकं तर्हि पदोपस्थितिविषयेपक्ष एवं लक्ष्य
सिद्धये समाश्रीयतां ॥ एवं हि ज्ञापकाश्रयणक्लेशोपि न भवति किं त्वेनापि पदोपस्थितिरेव ज्ञाप्यतां ॥ एवं हि ज्ञापकमूलकं वाक्यांतरं न
कल्प्यमिति लाघवं ॥ अस्तु तर्हि तृतीयः पक्षः मिदेरन्त्यस्य इकश्च द्वयोरपि गुण इति ॥ मैवम् ॥ स्थानेयोगावयवसंबंधरूपस्यार्थद्वयस्य
युगपदुच्चारितपाषष्ठ्या दुर्लभत्वात् ॥ स्थानेयोगं च विनालोन्त्यविध्यलाभात् ॥ स्थानषष्ठी हि तदुपस्थितौ लिंगमिति वक्ष्यते ॥ इक इत्य
नेन सहावयवषष्ठीं विनान्वयायोगात् ॥ आवृत्यादौ प्रमाणाभावाच्च ॥ एतेन मिदेरन्त्यस्य वा इको वेति चतुर्थपक्षोपि प्रत्युक्तः विकल्पस्या
श्लेषग्रस्तत्वाच्च ॥ अस्तु तर्हि नदपवाद इति पंचमः पक्षः तथा हि गुणविधावंगस्येति न स्थानषष्ठी ॥ किं त्विगपेक्षयावयवषष्ठी ॥ ततश्च
लिंगाभावादलोन्त्यपरिभाषाया अनुपस्थितिः अयमेव चवाधपदार्थः यदीकपरिभाषा न भवेत्तर्हि स्थानषष्ठीत्वं तन्मूलकालोंत्यपरिभा
षोपस्थितिश्चेत्यस्मात्सत्यां त्विक्परिभाषायां तदुभयं नेत्येतावतैवापवादत्वव्यवहारः ॥ नहि वस्तुतो वचनेनप्रापितस्य बाधः संभवति ॥ राम॰ ४१

शास्त्राप्रामाण्यप्रसंगात् ॥ अतएव शास्त्रतात्पर्य्यसंकोचो बाध इत्याहुः एतेन हूहूापवाद एकशेष इत्यपि व्याख्यातम् ॥ नह्यनुत्पन्नायां
विभक्तौ हूहूस्य प्रसंगः किन्तु यद्येकशेषो न भवेत्तर्हि प्रत्येकं विभक्ति हूहूश्च स्यातामिति त्वेकशेषतन्त्रे त्येव तत्त्वं ॥ अस्मिंश्च पक्षे जुसि गुणो
अजुहवुरित्यत्रैवानेनिजुः पर्यवेविषुरित्यादावपि स्यात् ॥ सार्वधातुकार्द्धधातुकयोरिति गुणः भवतीत्यादाविव वर्द्धिहिते त्वत्रापि स्यात् । अत
याश्च वार्त्तिकम् ॥ इङ्मात्रस्येति चेज्जुसि सार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्वनंत्यप्रतिषेध इति ॥ अत्र ह्रस्वादीति ह्रस्वस्य गुणः जुसि च
॥ ऋतो ङिसर्वनामस्थानयोः घेर्ङितीति गुणचतुष्टयं गृह्यते ॥ ततश्च हे अग्ने ॥ अग्नयः कर्त्तरि ॥ अग्नये ॥ बाभ्रव्य इत्यत्र यथा ओर्गुणान्तं
गुणपंचकं भवति ॥ एवं हे अग्निचित् ॥ अग्निचितः संति ॥ सुकृति ॥ अग्निचिते ॥ सोऽकृत इत्यत्रापि स्यादिति वार्त्तिकार्थः । यद्यपीह निर्दिष्टस्थानि
कत्वात्परिभाषा दुर्लभा अग्निचिच्छब्दस्य घिसंज्ञाभावाच्च घेर्ङितीत्येतन्न प्राप्नोति तथापि वार्त्तिकस्योक्तिसंभवमित्थं वर्णयन्ति ॥ ह्रस्वस्य
गुणो जसि चेति सूत्रयोस्तावद् ह्रस्वो नेग्विशेष्यते ॥ दीर्घेऽन्यावृत्तिश्च फलं ॥ अथानियमे नियमकारिणी परिभाषा कथमिहोपतिष्ठतां ॥ नहि ह्र
स्वस्य स्थानित्वेऽतिप्रसंगोऽस्ति ॥ अकारस्य त्यकार एव गुणो भविष्यतीति ब्रूयात् ॥ तत्रेदं वक्तव्यम् ॥ ह्रस्वान्तस्यांगस्य इको गुण इति सूत्रा
र्थः स्यात् ॥ ततश्च हे इन्द्र हे उपगो इत्यादावनंत्यस्यापि स्यात् ॥ अग्निचिदित्यादिके तु विशेषणमन्यव्यवच्छेदं स्यात् ॥ तथा च ह्रस्वस्येकः इत्यन
योर्न परस्परं विशेषणविशेष्यभावः किंत्वनयोरेकमंगस्य विशेषणमपरमंगस्य विशेष्यमिति ॥ यद्वा ॥ ह्रस्वस्येत्येतदंगस्य विशेषणं सा
भूत् इति अंगस्येत्यस्य स्थानषष्ठीत्वं बाधितुं अनंत्यस्यापि गुणं संपादयितुं इक्परिभाषोपतिष्ठते ॥ एवं कृत ओ[illegible]सु [illegible]त्रापि अनं
त्यस्य गुणविधानार्थं परिभाषा स्यादेव ॥ घिसंज्ञा तु वर्णयोरेव न तु तदन्तस्येति पक्षं गृहीत्वा घेर्ङितीत्यस्य अग्निचिते इत्यादावतिप्रसं

गोपोज्यः। नस्त्वस्मिन्पक्षे ऋत ओरित्याभ्यां घेः किंचिद्वैलक्षण्यमस्तीति दिक्॥ नन्वस्मिन्पक्षे पुगंते तिसूत्रस्य नियमार्थत्वाद्दहितेत्यत्रैव न दोष इति चेन्न। यदि
हि सार्वधातुकार्धधातुकयोर्लघूपधस्यैवेति नियमस्तर्हि हूस्वाद्यो गुणे दोषस्तदवस्थः यदि तु लघूपधस्य सार्वधातुकार्धधातुकयोरेवेति नियमस्तथापि हिवे
त्यादौ दोष एव। अथावृत्त्या द्विविधोपि नियमः तर्हि अनेनिजुरित्यत्र दोषः न ह्येतन्नियमद्वयेनापि वारयितुं शक्यं॥ लघूपधत्वात्सार्वधातुकपरत्वाच्च॥ हेतुर्हे
तुहूपः पिच्चेहितः पिच्चव्यः उगवादिभ्यो यत्॥ बुद्धयेर्वृद्ध यइत्यादावनुपधाभूतेष्वति प्रसंगस्तु दुर्वार एवेति तावद्धार्त्तिकत्हृदयं॥ वस्तुतस्तु अंगाक्षिप्तेन प्रत्यये
न श्रूयमाणेन ऋजुसादिना इको विशेषणात्सकलदोषनिरासे सति न दपवादपक्षोपि समर्थयितुं शक्यत एव। अंगमेव प्रत्ययेन विशेष्यत इति गृहीत्वा परं भाष्यवार्त्तिक
ग्रंथप्रवृत्तिरित्यवधेयं॥ अस्त्वेतर्हि पूर्वविप्रतिषेध इति क्रो ष्ट्रीयसंमतः षष्ठः पक्ष इति चेन्न॥ इक्परिभाषाया निरवकाशत्वात्॥ नेहि परस्परपरि
हारेणावकाशलाभे असति विप्रतिषेधः॥ तस्माद्यदिसत्यपि संभवे बाधनं भवतीत्याश्रीयते तर्हि येन नाप्राप्तिन्यायादपवादत्वमस्त्येव॥ य
दि तु असंभवे बाध्यबाधकभावः अस्ति चेह संभवो यदुभयं स्यादित्याश्रीयते तर्हि तच्छेषादिष्वन्यतमपर्यवसानं न तु क्रोष्ट्रीयमतस्याव
काश इति स्थितं॥ तस्मात्सदोपस्थापनमिति सप्तमः पक्षः सिद्धान्तसंमतः। तथाहि॥ इक इति षष्ठ्यन्तानुकरणं॥ न तु संज्ञिपरं॥ स्वं रूपमि
ति वचनात्॥ न चाशब्दसंज्ञेति निषेधः षष्ठ्यन्तस्यासंज्ञात्वात्॥ तदयमर्थः यत्र ब्रूयाद्गुणो भवति वृद्धिर्भवतीति तत्रेक इति षष्ठ्यन्तमुपति
ष्ठत इति॥ तस्य च पदैकवाक्यतयान्वयोन्तरंगः अलोन्त्यपरिभाषा तु विधिवाक्येष्ववांतरवाक्यार्थं बुध्वा तदेकवाक्यतया संबध्यत इ
ति तदन्वयो बहिरंगः। न तस्य जुसि चेत्यादौ इकोंगस्येति संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादिका अंगे विशेषिते ५
स्या न षष्ठी न विहिते ति भवत्येवालोन्त्यपरिभाषोपस्थितिः। मिदेर्गुण इत्यादौ तु सामानाधिकरण्यान्वयस्यासंभवान्मिदेरिक इवि वैय

धिकरण्येनान्वयेसनिस्थानषष्ठीविरहादलोन्त्यपरिभाषानोपतिष्ठते॥ नचमिदेरंगस्येत्यनयोरवयवषष्ठीत्वेपिइक इतिस्थानषष्ठ्यस्त्येवे
तिवाच्यम्॥ नह्येषाअलोन्त्यपरिभाषोपस्थितावुपयुज्यते॥ अल्समुदायात्मकस्थानिनः परभूतायाएवषष्ठ्यास्तदुपस्थापकत्वात्॥ इ
कश्चालरूपत्वात्॥ नथाचालोन्त्यपरिभाषाद्वक्परिभाषानंतरोपस्थितिका॥ नतुतयासहयुगपदुपतिष्ठते॥ येनाविशेषादुभयोर्निर्देशः
स्यादितिसकलेष्टसिद्धिः॥ तच्छेषतदपवादपक्षयोरपिदूषणमुद्धर्तुंशक्यमित्युक्तमेव॥ तदिहसप्तपक्षीमध्येपक्षत्रयंदुष्टमेव॥ पक्षचतुष्ट
यंतुसाधिवतिस्थितम्॥ नन्वेतत्सूत्रमंगस्येत्यादिवदधिकारार्थमेवकिंनस्या‾दितिचेन्न॥ एवंहिसतिइकोगुणवृद्धीनितिनत्रासंयुज्यैव
पठेत्॥ सर्वस्यद्वेपूर्वत्रासिद्धमित्यादिवत्॥ नत्युत्तरसूत्रोपस्थितिकत्वाविशेषेकिंचित्संयुज्यकिंचित्तुविभज्यपठितुमुचितं॥ वैरूप्येहे
त्वभावात्॥ प्रत्ययः परश्चेत्यादौतुपारार्थ्याविशेषेप्यसंयुज्यनिर्देशोविधेयभेदान्नविरुध्यते॥ नापीदंविधिसूत्रं॥ पुनर्गुणवृद्धिग्रहण
सामर्थ्यात्॥ तत्प्रत्याख्यानपक्षेपिविशिष्टानुवृत्तिसामर्थ्यादितिदिक्॥ ॥इतिश्रीशब्दकौस्तुभेप्रथमस्याध्यायस्यप्रथमेपादेतृतीय
माह्निकम्॥ ॥ श्रीगणेशायनमः॥ ॥ नधातुलोपआर्द्धधातुके॥ धात्वंशलोपनिमित्ते आर्द्धधातुकेपरेतन्निमित्तकेगुणवृद्धी
इकोनस्तः॥ लोलुवः पोपुवः मरीमृजः॥ लोलूपादिभ्योयङंतेभ्यः पचाद्यचिकृतेयङोचिचेतियङ्लुकि लुङ्निमित्तभूतमचमेवाश्रित्यप्राप्ते
गुणवृद्धीनिषिध्येते॥ यद्यपिकृत्स्नस्यधातोरपिक्वचिल्लोपोस्ति॥ तद्यथादुरीणोलोपश्च॥ दुःशब्दउपपदेइणोधातोरक्प्रत्ययोभवति
धातोश्चलोपः॥ दुःखेनईयतेप्राप्यतेदूरमिति॥ तथाप्येवंविधेविषयेगुणवृद्ध्योःप्राप्तिविरहान्निषेधवैयर्थ्य॥ अतोत्रधातुशब्देनतदेकदेशोलक्ष्यते॥ धातुलो
पइतिचयदिषष्ठीतत्पुरुषः स्यात्तदाआर्द्धधातुकग्रहणंलोपविशेषणंवागुणवृद्ध्योर्विशेषणंवानंत्रारत्यादिभिरुभयविशेषणंवेतित्रयः

प्रा॰कौ॰ कल्पः॥ तत्राद्यपक्षे॥ आर्द्धधातुकनिमित्ते धातुलोपे सति यत्किंचिन्निमित्ते गुणवृद्धी न भवत इति सूत्रार्थः स्यात्॥ ततश्च प्रपूर्वादिंधेः क्त-
५१ प्रत्यये तन्निमित्तके नलोपे च सति प्रेद्ध इत्यत्र प्राप्नुवन्नाद्गुणोपि निषिध्येत॥ यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवति लभते सावन्यतरव्य-
तो व्यपदेशमिति इकः स्थानिकत्वस्यापि सत्वात्॥ न चैवमपि इग्लक्षणत्वविरहान्न निषेधः लैगवायने ओर्गुणस्येवेति वाच्यं॥ नह्यस्मि-
न्सूत्रे इक इत्यस्य स्वरूपपरतायां प्रमाणमस्ति उत्तरसूत्रे तु चकार इति शब्दार्थकः प्रमाणमित्याहुः॥ अस्तु वा यथाधिकाराश्रयणबलेने-
हापि इक इति स्वरूपपरं तथापि भेद्यत इत्यादौ गुणो न स्यादिति तृतीयपक्षे वक्ष्यमाणो दोष आद्यपक्षद्वयेप्यस्त्येवेति बोध्यं॥ ननु उपेद्धः प्रेद्ध इ-
त्युदाहरणस्येहोक्तिः संभव एव नास्ति॥ तथाहि॥ पूर्वं धातुः साधनेन युज्यत इति मते इद्धमित्यत्र नलोपोन्तरंगः प्रथमोपस्थितत्वप्रत्ययापे-
क्षत्वात्॥ पूर्वं धातुरुपसर्गेणेति दर्शने तु गुणोन्तरंगः उभयथापि गुणो भविष्यति॥ बहिरंगस्य गुणस्यासिद्धतया निषेधायोगात्॥ बहिरंग-
स्य निषेधस्यासिद्धो गुणप्रवृत्तेर्निर्बाधत्वाच्च॥ सत्यम्॥ असिद्धं बहिरंगमन्तरंगे इति परिभाषा नेह प्रवर्त्तते नाजानंतर्ये बहिष्ट्वप्रकॢप्तिरि-
ति निषेधात्॥ यत्रांतरंगे बहिरंगे वाचोरानन्तर्यमाश्रीयते तत्रैषा परिभाषा नेति व्याख्यानादिति हरदत्तानुयायिनः॥ किं त्वस्मिन्पक्षे एत
एड् इति सूत्रे पचावेदं पचामेदमित्यादौ एत ऐत्वं कुतो नेत्याशंक्य बहिरंगत्वेन गुणस्यासिद्धत्वादिति हरदत्तेन वक्ष्यमाणं विरुध्यते॥ तथा ब-
हिरंगस्यासिद्धताबलेन प्रेद्धमित्यादिसिद्धिरिति प्रतिपादनपरमिहत्यभाष्यमपि विरुध्येत॥ तस्माद्यत्रोत्तरकालप्रवृत्तिके अच आनन्तर्यं
तत्र बहिरंगपरिभाषा न स्यादिति कैयटसंमत एव नाजानंतर्य इत्यस्यार्थः साधुः पचावेदमित्यादौ हि पूर्वं गुणप्रवृत्तिः तत्र चाजानन्त- राम॰
र्याश्रयणेपि गुणोन्तरप्रवृत्तिके एत ऐ इत्यत्र तदनाश्रयणाद्युक्त एव बहिरंगतयोद्धारः॥ उपेद्धः प्रेद्ध इत्यादौ तु गुणं प्राप्य निषेधः का ५१

र्यइति उत्तरकालप्रवृत्तिको निषेधः तत्राजानंतर्याश्रयणाभावाद्बहिरंगपरिभाषयासिद्धमेवैतत्॥ अतोऽत्रत्यं भाष्यमपि संगच्छते॥ ननु
षत्वतुकोरसिद्ध इति सूत्रे एषा परिभाषा ज्ञापयिष्यते॥ तत्र च कोसिचत्को त्स्येत्यादौ प्रथमप्रवृत्तिके एङः पदांतादित्यस्मिन्नाजानंतर्ये न
तूत्तरकालप्रवृत्ते षत्वेपीति कथं कैयटमतं समर्थनीयं तस्मादत्रांतरंगे बहिरंगे वा अचोरानंतर्यमिति हरदत्तोक्तरीतिरेव शरणीकर्त्तव्येति
चेन्न॥ कैयटमते अचोरिति हि ल्त्वस्याविवक्षया सर्वं सामंजस्यात्॥ अस्ति हि उत्तरकालप्रवृत्तिके षत्वे अच आनन्तर्याश्रयणं॥ इणः परस्य
सस्येत्युक्तेः॥ एवं च प्रथमपक्षे भेद्द इत्यादौ दोषाभावेपि भेद्यत इत्याद्यसिद्धिरेव दूषणमिति दिक्॥ द्वितीयपक्षे तु यत्किंचिन्निमित्तके धातु
लोपे सति आर्द्धधातुकनिमित्ते गुणवृद्धी न स्त इति सूत्रार्थः स्यात्॥ ततश्च क्नूयी शब्दे इत्यस्माण्णिचि पुकि यलोपे कृते पुगंतलक्षणो गु
णो निषिध्येत॥ तथा च क्नोपयतीति न सिध्येत्॥ यदि तु चेले क्नोपेरिति निर्देशाद्गुणस्तर्हीहापि भेद्यत इत्यस्यासिद्धिरेव दोषः॥ तृतीयपक्षे तु
आर्द्धधातुकनिमित्तके धातुलोपे सति आर्द्धधातुकनिमित्ते गुणवृद्धी न स्त इति सूत्रार्थः स्यात्॥ तत्र तंत्रावृत्त्याद्याश्रयणप्रयुक्तं गौरवं तावत्स्प
ष्टमेव॥ लोपेन सह गुणवृद्ध्योरेकनिमित्तकत्वं च न लभ्येत॥ ततश्च भेद्यत इत्यत्र भिदेर्ण्यन्तात्कर्मणि यकि भिद् इ य इति स्थिते नित्यत्वाण्णि
लोपे कृते प्रत्ययलक्षणेन णिचमाश्रित्य क्रियमाणो गुणो निषिध्येत॥ न च णिलोपात्प्रागेवांतरंगत्वाद्गुणोस्त्विति वाच्यम्॥ विभज्यान्वाख्यानप
क्षे न तदसंभवात्॥ उपजनिष्यमाणनिमित्तोप्यपवादः उपसंजातनिमित्तमप्युत्सर्गं बाधत इति न्यायाच्च॥ अन्यथा दधातीत्यादावंतरंगत्वा
त् श्नोन्त इत्यन्तादेशः प्रवर्त्तेत॥ न च श्लौ द्वित्वे च कृते अंतादेशस्य स्थानिवद्भावेनाभ्यस्तादित्यस्य प्रवृत्तिरस्त्विति वाच्यं॥ अल्विधौ
स्थानिवद्भावासंभवात्॥ किंच॥ समर्थानां प्रथमाद्वेति सूत्रे अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्त्तयन्तीति ज्ञापयितुं समर्थ

शा॰कौ॰ ग्रहणमितिवक्ष्यते॥ हे एते परिभाषे समानफले तथा च इहापि पूर्वं गुणो न क्रियेत कृतोपि वा निवर्त्तेत जग्मुष इत्यादाविडादिवत्॥ तस्माद्धातोर्
५२ लोपो यस्मिन्निति बहुव्रीहिरेव साधुः एवं हि सति लोपस्य गुणवृद्ध्योश्चैकनिमित्तकत्वं लभ्यत इति न कश्चित्पूर्वोक्तदोषः स्यादेतत्॥ आर
भ्यमाणेप्यस्मिन्सूत्रे लोलुव इत्यादौ गुणो दुर्वारः तथा हि॥ इह सूत्रे निषेध्यं किमित्याकांक्षायां पूर्वत्र निर्णीताइक्पदोपस्थितिरेव संब
ध्येत॥ धात्वंशलोपनिमित्ते आर्द्धधातुके इक्पदं नोपतिष्ठते॥ ततश्च वेभिदः मरीमृजो भिन्नो मृष्ट इत्यादौ व्यंजनस्य गुणवृद्धिशास्तिः परमे
नस्य प्रघट्टकस्य फलं स्यात्॥ लोलुवादौ तु स्यादेव गुणः॥ न च परिभाषां प्रतिशेषिभूततयाश्रुतेः प्रधानयोर्गुणवृद्ध्योरेव निषेधोस्त्विति वा-
च्यम्॥ शाब्दबोधे शाब्दप्राधान्यस्यैवान्वयनियामकताया उचितत्वात्॥ न हि राजपुरुषमानयेत्यादावर्थतः प्रधानभूतोपि राजा आन
यनेनान्वेति अपि तु पुरुष एव॥ प्रकृते च शाब्दं प्राधान्यं वाक्यार्थभूताया पदोपस्थितेरेव॥ कारकविशिष्टा क्रिया वाक्यार्थ इति सिद्धांतात्॥
आह च॥ साकांक्षावयवं भेदे परानाकांक्षशब्दकं॥ कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यत इति॥ किंच॥ सिद्धान्ते प्रसज्यप्रतिषेधे सर्वत्र
क्रियायामेव नञोन्वयः न तु नामार्थेन॥ तदुक्तं॥ प्रसज्यप्रतिषेधोयं क्रियया सह यत्र नञिति॥ अतएव पुरुषवचनयोरसंकरः अन्यथा हि
घटो नास्ति त्वं नासि अहं नास्मीति पुरुषव्यवस्था न स्यात्॥ घटाभावस्त्वदभावो मदभावश्चास्तीतिवत्सर्वत्र प्रथमपुरुषापत्तेः न हि पूर्वमवे
त्वं नासि त्वदभावोस्तीत्यनयोरर्थे कश्चिद्विशेषः नञर्थे प्रतिप्रथमांतपदोपस्थापितस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वे-
न संसर्गेण प्रकारताभ्युपगमेपि युष्मत्सामानाधिकरण्यविरहस्याविशिष्टत्वात्॥ एवं वायौ रूपाणामभावोस्तीतिवद्रूपाणि न संतीत्य- राम
त्रापि अस्तीत्येकवचनं स्यादित्यन्यत्र विस्तरः एवं कारकविभक्तेरपि क्रियायोगे सत्येव साधुत्वं न त्वन्यथापीति कारके इति सूत्रे वक्ष्य ५२

माणत्वाद्भूतले घटो नास्तीत्यादौ अधिकरणत्वं क्रियान्वय्येव न तु नञर्थान्वयि॥ तथा च सकलकारकविशिष्टक्रियायां नञर्थान्वयः॥ नञो
द्योतकतेति निष्कृष्टपक्षे तु क्रियापदस्यैव तद्विरहपरतेति सिद्धांतः उभयथापीह गुणवृद्ध्योः प्रतिषेधो दुर्लभ एवेति॥ अत्राहुः क्रिययैव साह
विधेरिव निषेधस्यान्वयः शाब्द इति सत्यमेव किंतु क्रिययैव केति संशये त्वदुक्तरीत्या सन्निहितापीकूपदोपस्थितिरिह न संबध्यते॥ तथा हि
सति दीधीवेवीटामिति सूत्रस्य व्यर्थतापत्तेः। न हि तत्रेक्परिभाषालोन्त्यपरिभाषयोः फले विशेषोस्ति॥ एवं स्थिते अस्ति भवंतीपरः प्रयु
ज्यमानो…स्तीति प्रातिपदिकार्थसूत्रे वक्ष्यमाणरीत्या भवत इत्यस्योपस्थितस्य गुणवृद्धी इत्यादिभिरन्वि तस्य निषेधान्वये सति गुण
वृद्ध्योरभावः फलितो भवतीत्येतावता गुणवृद्ध्योर्निषेध इत्युच्यते॥ यथा आघाराग्निहोत्राधिकरणे प्रतीति ततः सर्वोपि विशिष्टविधिरेव,
नास्यर्यतस्तकश्चिद्गुणविधिरिति सिद्धांतितं तद्वन्निषेधेपि बोध्यम्॥ न्यायसाम्यात्॥ अत एव विधिनिषेधयोर्वाक्यार्थगोचरतेत्यभि
युक्ताः॥ तस्माल्लोलुवः पोपुवो मरीमृज इत्युदाहरणं सिद्धं। प्रत्युदाहरणं तूच्यते। धातुलोप इति किं॥ आर्द्धधातुके विधिनिषेधाभ्यां षोडशिग्र
हणाग्रहणयोरिव गुणवृद्ध्योर्विकल्पो मा भूत्॥ आर्द्धधातुक इति किं॥ तुर्वी थुर्वी दुर्वी धुर्वी हिंसायां॥ मुर्छा मोहसमुच्छ्राययोः एभ्यो यङ्लु
गन्तेभ्यस्तिबादौ सार्वधातुके पिति परे तोतोर्त्ति मोमोर्त्तीत्यादौ निषेधो मा भूत्॥ राल्लोप इति च्छ्वोर्लोपस्य गुणस्य च एकनिमित्तकत्वात्
॥ इदं च राल्लोपे क्ङिद्ग्रहणाननुवृत्तिपक्षमाश्रित्योक्तं॥ तदनुवृत्तिपक्षे तु तोतोर्मीत्याद्युत्तमपुरुषैकवचने उदाहरणं बोध्यम्॥ अत्र नास्ति
कादिप्रत्ययत्वेन तत्र राल्लोपप्रवृत्तेः॥ ननु तोतोर्तीत्यादि प्रागुक्तमप्युदाहरणमस्तु॥ राल्लोपाप्रवृत्तावपि लोपोव्योरिति लोपादिति चेन्न॥ तस्य
वर्णमात्रनिमित्तकतया गुणेन सह एकनिमित्तकत्वाभावात्॥ न हि तत्र प्रत्ययग्रहणं तदाक्षेपकं वा किंचिदस्ति अत एव गाधेरादिषु प्र

त्ययपरत्वंतत्रिअपियलोपइतिदिक्॥ इकइतिकिं ॥अभाजिरागः भंजेश्चचिणि घञिच भावकरणयोरित्युपधालोपे कृते वृद्धिर्यथास्यात्
॥कथंतर्हि पापचक इत्यत्र वृद्धिप्रतिषेधइतिचेत्॥ शृणु॥ पापच्यतेर्ण्वुलियस्यहलइत्यत्र अहर्षीदमज्यीदित्यादिवारणाययस्येति सं·
घातग्रहणेप्यादेःपरस्येतिहल्मात्रलोपे कृतेऽतोलोपइतिपृथगल्लोपेतस्यस्थानिवद्भावेन पापचकादौनवृद्धिः नत्विहनधातुलोपइतिसूत्रस्यकश्चिदपिव्यापारः यङुगंताण्वुलिपापाचकइतिभवत्येववृद्धिर्नीनावेतिवत्॥ एतेननधातुलोपेत्यत्रद्रक इत्यनुवृत्तेःपापाचक
इतिवदन्नधातुसूत्रेवेभिदितामरीमृजितेत्युदाहरंश्चकौमुदीकारःपर्यस्तः।पृथगल्लोपस्यन्याय्यत्वेभाष्यादिसंमतत्वेचसतिवृद्धे
रसंभवात्॥ अतएववृत्तिकारादयोप्यत्रसूत्रेअचप्रत्ययांतान्येवलोलुवादीन्युदाजह्रुःभिदिमृजोस्तुयदियङुकुतर्हितस्यानैमित्ति·
कत्वाद्गुणवृद्धीस्त एव॥ वेभेदितामरीमार्जितेतियथा॥ यदितुयस्यहलइत्यवमवलोपस्तर्हिस्थानिवद्भावादेवगुणाद्यप्रसंगइत्युभय
थापिनैतत्सूत्रोदाहरणत्वमित्यवधेयं। भाष्यकारस्तुयस्येतिलोपइव अचिलुक्यपिपृथगल्लोपमाश्रित्यैतत्सूत्रंप्रत्याचख्यौ॥ नच येन
नाप्राप्तिन्यायेन अचियङोलुगतोलोपबाधेनेतिवाच्यम्॥ यस्यहलइत्यत्रयस्येतियोगंविभज्य अतोलोपइतिचानुवर्त्ययशब्दस्या
तोलोपविधानेनलुग्बाधनात्॥ अवशिष्टंव्यंजनमात्रंलुकोवकाशः ततश्चाल्लोपस्यस्थानिवत्वादेववेभिदितामरीमृजितापापचक·
इत्यादिवल्लोलुवादयोपिसिध्यंतीतिकिंसूत्रेण॥ नचैवंनोनावेत्यादावपिपृथगल्लोपापत्तिःचकारानुकृष्टबहुलग्रहणाज्ज्ञायमाने
स्यानैमित्तिकस्यलुकोंतरंगत्वाल्लकारोत्पत्तेःप्रागेवसमुदायेप्रवृत्तेः नन्वेवंचेक्रियःलोलुवःतोष्टुवइत्यादावल्लोपस्यस्थानिवत्वा
द्यथागुणोनएवमियङुवङावपिनस्यातामितिचेत्॥ अचमाश्रित्यनभवतएव॥ उक्तयुक्तेः किंतुस्थानिवद्भावलब्धमकारमा·

श्रित्य भविष्यतः स हि षकारे लुप्ते प्रत्ययसंज्ञकः स्यादेतत्॥ लोलुवादिष्वकारे लुप्ते प्लुगिति क्रमः तत्र यकारावस्थानकाले अकारेण प्रत्यय
त्वं न लब्धमेव॥ लुप्तेपि तस्मिन्नकारो नास्त्येव॥ ततः प्रागेव लोपात्॥ सोयमसन्कथं प्रत्ययतां लभेत॥ तल्लोपस्थानिवद्भावेन प्रत्ययत्वमस्तीति
चेत्॥ स्थानिनिर्दिष्टं हि कार्यं तद्वदतिदेशेन लभ्यते॥ नतु तत्रादृष्टमपि॥ अत्राहुः॥ तत्र संभावितमात्रमतिदिश्यते॥ यदि हि लोपस्य स्थानि भू
तो अकार इह लुप्तेपि यकारे तिष्ठेत्तर्हि प्रत्ययतां लभेत उवङादिकं च प्रवर्त्तयेदिति कथं नातिदेशः वरे निषेधश्चेह लिंगं॥ स हि यातेर्यङ् ताह
श्वि अल्लोपयलोपयोः कृतयोः स्थानिवद्भावेनातो लोप इटि चेत्यालोपो माभूदित्येनदर्थं क्रियते॥ स्थानिनिर्दिष्टस्यैवातिदेशो तु किं तेन॥ नहि
या याय इत्यस्यामवस्थायां आतो लोपस्य प्राप्तिः अनजादित्वादिति दिक्॥ नन्वेवं चेक्षियस्तोष्टुव इत्यत्रांतरंगानपीति न्यायेनाकृतस्यैवा कृ
त्सार्वधातुकयोरिति दीर्घे यङो लुक्॥ ततो ल्लोपस्य स्थानिवद्भावे सत्यपि चेक्षि अ अ तोष्टु अ अ इति स्थान्यकारेण सह लघूपधमंगम व्
प्रत्ययपरं जानमिति लघूपधगुणः स्यादेव॥ सत्यं॥ अंतरंगावियङुवङौ भविष्यतः यथाह वार्त्तिककारः॥ शचङ् तस्यां तरंगलक्षणत्वा
दिति॥ तथा चरिपिगतौ॥ धिधारणे इत्येषां तुदादित्वाच्छे कृते रियति पियति धियतीति भवति॥ अशिश्रियत्॥ प्रादुद्रुवत्सुस्रुवदिति च
णिश्रीति च ङि इयङुवङौ भवतः तस्मात्पृथग्लोपेनैव सकलनिर्वाहान्न धातुलोप इति सूत्रं मारंभणीयं॥ नचैवं मरीमृज इत्यत्र मृजेरजा
दौ संक्रम इति पाक्षिक वृद्धिप्रसंगः हरदत्तादिमते मुख्याजादावेव तत्प्रवृत्तेः निष्कर्षं तु यथोत्तरं मुनित्रामाण्यादिष्टापत्तेः व्यवस्थितविभाषा वा
स्तु अन्वदेति॥ गुणोपधालोपयुटां न लोपाल्लोपयोरपि॥ प्रसंगात्पृथग्लोपो लुकि वक्तुं न शक्यते॥ तथा हि॥ सर्वत्र दीर्घान्तेषु ह्रस्वांतेषु च इ
यङुवङोः कृतयोर्लघूपधलक्षणो गुणः प्राप्नोति॥ नचेह स्थानिवद्भावः आदिष्टादचः पूर्वत्वात् किंच॥ जंगम इत्यत्र गमहनेत्युपधालोपः स्या

त्॥ अथात्रानङीति प्रतिषेधस्तर्हि दरीदृशः इत्यत्र ऋदृशो ङीति गुणः स्यात् अचिचदेध इत्यत्र दीङो युडचीति युट् स्यात् किंच॥ सनीस्रंसो दनीध्वं
सः अनिदितामित्युपधालोपः स्यात्॥ अपिच॥ यायाः वावाः इत्यादिष्वाकारलोपः स्यात्॥ तस्मात्समुदाय लुगेवएष्टव्यो लोलुवादिसिद्धये चसूत्र
मारंभणीयमिति॥ अत्रोच्यते॥ लोलुवादिषु गुणस्तावन्न भवति॥ स्थानिद्वारकस्य अनादिष्टादचः पूर्वत्वस्य सत्त्वेन स्थानिवद्भावात्॥ अतएव
ह्रहिनपदांतेति सूत्रे सवर्णग्रहणं कृतं॥ शिण्ढीत्यादौ अनुस्वारस्य स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रित्य तस्य सवर्णे कर्त्तव्ये श्नसोर
ल्लोपस्य स्थानिवद्भावो माभूदिति॥ नन्वनादिष्टादचः पूर्वत्वस्य शास्त्रीय कार्यत्वाभावात्कथमतिदेश इति चेत्॥ अनादिष्टादचः पूर्वत्वापेक्षे
अचः परस्मिन्नित्यतिदेशे कर्त्तव्ये स्थानिवदादेश इत्यस्य प्रवृत्तिसंभवात्॥ सवर्णग्रहणव्याख्यावसरे सर्वैरित्थमेवोपपादितत्वाच्च। न
नु येोत्रादेशउवङ् सोनादिष्टादचः पूर्वतां स्थानिद्वाराकथंचिल्लभतां न तु तस्येह किंचित्कार्यं विधीयते येनाल्लोपः स्थानिवत्स्यात्॥ यस्य च
कार्यं विधीयते उकारस्य नासावादेशः येन स्थानिद्वारापि पूर्वतां लभेत। सत्यम्॥ सर्वे सर्वपदादेशा इत्याश्रयणात्स्थान्यादेशभावस्तावद्
र्थवतिविष्मार्थ्यति॥ अतएव सरुरित्यस्य तेस्तुरिति पर्यवसितार्थमाश्रित्य स्थानिवत्सूत्रेणैव सिद्धत्वादेकदेशविकृतस्योपसंख्यानं नारब्ध
व्यमिति वक्ष्यते अतएव च स्थानिवदित्युक्तौ संबंधिशब्दत्वादेवादेश इत्यस्य लाभेसिद्धे पुनरादेशग्रहणं आनुमानिकस्याप्यादेशस्य परि
ग्रहार्थमिति वक्ष्यते॥ एवंचइहापि लोलू इत्यस्य लोलुव् इत्यादेशः स चानादिष्टादचः पूर्वः स्थानिवद्भावात्॥ तस्य च लोलोव् इत्यादेशो कार्ये
अल्लोपः स्थानिवदिति युक्तमेव॥ किंच॥ त्राजनो जैतिरीङ् ऋत इति च सूत्रे दीर्घोच्चारणेन अंगवृत्ते पुनर्वृत्ताव विधिर्निष्ठितस्येति परिभाषा
ज्ञापयिष्यते॥ तेन उवङि कृते गुणो न भविष्यति॥ दरीदृश इत्यत्र गुणो न भवति॥ प्रतिपदोक्तस्याङो ग्रहणात्॥ अदर्शदिति यथा॥ यङस्तु

अकार उपदेशवेलायां न प्रत्ययः किंतु तदवयवः यकारे लुप्ते तु नासौ ङकारविशिष्टो न वाश्रूयते॥ किंतु तदेकदेशैकगोचरत्वाल्लाक्षणिकवद्बहुलं वि
नोपस्थितिकः॥ नन्वेवमनङीति पर्युदासेप्यस्याग्रहणाज्जगम इत्यत्राल्लोपः स्यादिति चेन्न॥ अनङीति पर्युदासेनाङ्सदृशेश्रूयमाणाज्जा
दौ उपधालोपविधानात्॥ अर्थवानेवाङ् गुणविधौ गृह्यत इति तु न सम्यक्। विकरणानामनर्थकत्वात्॥ यत्तु देद्य इत्यत्र युट् स्यादिति॥ अ
न्न॥ अनुबंधनिर्देशात्॥ तदुक्तम्। श्तिपा शपानुबंधेन निर्दिष्टं यद्गणेन च॥ यत्रैकाज्ग्रहणं चैव पंचैतानि न यङ्लुकीति॥ दीङो युङ् चीति सूत्रे
दीङः इत्यनुबंधनिर्देशो यङ्लुङ्क्रि इत्यर्थ इति तत्त्वरूपे वोक्तत्वाच्च॥ अत्र च ज्ञापकं एकाच उपदेश इति सूत्रे यङ्लुङ्क्रि इत्ति मुद्दिश्य क्रियमाणमेका
ज्ग्रहणं॥ नेहि रुजे पि न तस्मिन्नुक्तपरिभाषां विना बेभेदितेत्यादि सिध्यति॥ विभित्सतीत्यादि सिद्ध्ये तंत्रावृत्त्याद्याश्रयणेनोपदेशग्रहणस्य उ
भयविशेषणतायाः सिद्धांतयिष्यमाणत्वात्॥ नन्वेवमपि श्तिपा शपेत्यादि श्लोकांतरे कथं ज्ञापकमिति वाच्यम्॥ एकदेशानुमतिद्वारा पूर्वा
चार्यपठितपरिभाषाज्ञापनस्य गतिकारकोपपदानामित्यादौ बहुशो दृष्टत्वात्॥ न चैवमेकाच इति विधीयमाने द्वित्वमपि यङ्लुकि न
स्यादिति वाच्यम्॥ गुणो यङ्लुकोरिति ज्ञापकेन तत्प्रवृत्तेः यङ्लुकि बेभेदितेत्यादौ इडागमे तु दृष्टान्तपरिभाषेवशरणं हि प्रयोगो हि व
त्वनं षाष्ठमिति वक्ष्यमाणतया धात्वन्तरत्वस्य वक्तुमशक्यत्वात् बेभेदितेति यङंते तु पृथगल्लोपाभ्युपगमात्तस्य च स्थानिवद्भावाच्चेण्नि
षेधः पूर्वस्मादपि विधौ स्थानिवद्भावस्य वक्ष्यमाणत्वात्॥ किंच॥ यस्येति लोपस्य त्वयाप्यवयवलोपत्वं स्वीकृतं॥ तत्र यद्यपि देद्य इ
त्यत्र युट् स्यादिति नापादनार्हं॥ हलः परत्वाभावेनेह यल्लोपाप्रवृत्त्यादेदीयक इति रूपाभ्युपगमात्॥ सनीस्वक इत्यादौ नलोपापि सर्वसंम
तत्वादेव नापाद्यः यायायको वा क्यक इत्यादावाल्लोपोप्यनापाद्यः यल्लोपविरहेणाजादित्वाद्ई धातुकपरत्वाभावाच्च॥ बपि॥

प्र.का. गमेर्यङन्ताण्वुलि जंगमक इत्यत्राल्लोपस्य स्थानिवद्भावाद्वृध्यभाव इवोपधालोपः स्यात्॥ अथात्रानङीति प्रतिषेधस्तर्हि दरीदृशक इत्यत्र
५५ ऋदृशोऽङीति गुणः स्यात्॥ अथ परिहीणांगवृत्तपरिभाषया संज्ञापूर्वको विधिरनित्य इति वा समाधीयते तर्हि यङ्लुक्यपि सनीस्रंस इत्यत्र
नलोपो यायावा वा इत्याल्लोपश्च न शंक्यः समाधानस्य तुल्यत्वादिति दिक्। क्ङिति च॥ इक इति शब्दमुच्चार्य विहिते गुणवृद्धी गिति किति ङिति च
निमित्ततयाश्रित्य ये प्राप्नुतस्ते न स्तः। गित् जिष्णुः ग्लाजिस्थश्च ग्स्नुः। न चायं कित् द्वास्त्विति वाच्यं॥ स्थास्नुरित्यत्र घुमास्थेतीत्वप्रसंगात्॥ नचै
वं भूष्णुरित्यत्र इट्प्रसंगः श्र्युकः कितीत्यत्रापि चर्त्वेन गकारप्रश्लेषमाश्रित्य तन्निषेधात्॥ न चैवं चर्त्वस्यासिद्धतया विसर्जनीयो न स्यादो रु
त्वं च प्रवर्त्तेतेति वाच्यं॥ नमुन इत्यत्र नेति योगविभागात् सौत्रत्वाद्वा॥ तथा च ग्लाजिस्थेति सूत्रे श्लोकवार्त्तिकम्॥ ग्स्नोर्गित्वान्न स्थ ईकारः क
ङितोरीत्वशासनात्॥ गुणाभावस्त्रिषु स्मार्य्यः श्र्युकोनिट्त्वं कगोरितोरिति॥ जयादित्योप्येवं॥ वामनस्तु ग्लाजिस्थश्चेत्यत्र स्था आ इत्याका
रं प्रश्लिष्य क्स्नुप्रत्ययान्तस्य तिष्ठतेराकार एव न तु ईत्वमिति व्याख्यानादेव स्थास्नोः सिद्धौ न क्वापि गकारप्रश्लेषः कार्य इत्याह॥ नन्वेतन्मते
दंशेश्छन्दस्युपसंख्यानमिति क्स्नौ दंक्ष्णवः पशव इत्यत्रानिदितामिति नलोपः स्यात्॥ सत्यं॥ छान्दसत्वात्समाधेयः कित्॥ चितं स्तृतं॥ मृष्टं॥ ङि
त्॥ चिनुतः सुनुतः मृष्टात्॥ निमित्तसप्तम्याश्रयणं किं व्यवहितेपि यथा स्यात् छिन्नं भिन्नं॥ इक इति किं॥ कामयते॥ शब्दव्यापाराश्रयणं किं
॥ लैगवायनः ओर्गुणो हि इक एव प्रवर्त्तते न तु तत्रेक्पदोपस्थितिः ओरिति निर्दिष्टस्थानिकत्वात्॥ तदुक्तं॥ तद्धितकाम्योरिक्प्रकरणादिति
॥ ननु क्ङितीति सप्तमीनिर्देशात्तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठेत तत्र निःशब्दस्य नैरन्तर्यपरत्वाद्विशेष्योच्चारणक्रियत्वाद्व्यव राम
हितोच्चारितस्य निषेधः स्यान्नतु छिन्नं भिन्नमित्यादेरपीति चेत्॥ भवेदेवं यदि क्ङितीत्येतन्निषेध्यया क्रियया साक्षात्संबध्येत॥ इहत्वग ५५

णवृद्धिभ्यां संबध्यते ॥ यस्य च भावेनेति सप्तमी क्रियांतराश्रवणादौत्सर्गिक सत्तासेपः ततश्च क्ङिति सति प्राप्ते ये गुणवृद्धी तिसंबंधे कृते सिद्ध सा
ध्यसमभिव्याहारन्यायेनउपलक्षणीभूतसत्ताश्रयणस्यनिमित्तत्वमुत्सर्गतः फलति ॥ नत्विह विशिष्यनिमित्ततायां सप्तमीविधानमस्ति ॥
नचात्र निर्दिष्टपरिभाषासंभवति ॥ विध्यंगभूतानांपरिभाषाणांसाक्षाद्विधेयनिषेध्यक्रियान्वयिन्येवप्रवृत्तेः । इदंतु क्रियान्वयिनो विशेषणमतु
न्नचात्र निर्दिष्टपरिभाषासंभवति ॥ विध्यंगभूतानांपरिभाषाणांसाक्षाद्विधेयनिषेध्यक्रियान्वयिन्येवप्रवृत्तेः । इदंतु क्रियान्वयिनो विशेषणमतु
क्रियायाः अतोत्र न परिभाषाप्रवृत्तिः अन्यथा वृद्धिर्यस्याचामादिरित्यत्रेकपरिभाषोपस्थाने शालीयादि नेसिध्येत् ॥ नत्वत्र कः स्थाने वृद्धिः अत
एवोदीचामातः स्थाने इति सूत्रे स्थानग्रहणं कृतं ॥ आतः स्थाने यो अकार इति अनूद्यमानस्य विशेषणे आत इत्यस्मिन्षष्ठीस्थाने योगे ति परि
भाषाया अप्रवृत्तेः । गुणानांच परार्थत्वादसंबंधः समत्वात्स्यादितिन्यायोप्यत्रानुसंधेयः । ननु तत्र्थेनेनैवन्यायेनक्ङितीत्येत — प्रधानभूतक्रिय
यासंबध्यतां न तु तच्छेषभूताभ्यां गुणवृद्धिभ्यां प्रधानान्वयस्य संभवतस्त्यागायोगादिति चेन्न ॥ यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपका
राय महते प्रभवति तत्रात्मनोपि संस्कारमनुभूय प्रधानेन संबध्यते ॥ यथा पानीयमेलादिसंस्कृतं पुरुषेण ॥ उक्तंच ॥ गुणः कृतात्मसंस्का
रः प्रधानं प्रतिपद्यते ॥ प्रधानस्योपकारे हि तथा भूयसि वर्त्तत इति ॥ इह गुणवृद्ध्योः क्ङिद्ग्रहणेन विशेषितयोः प्रधानस्य महानुपकारो भव
ति ॥ व्यवहितस्यापि प्रतिषेधे सिद्धेः क्नोः कित्करणं चात्र ज्ञापकं ॥ अन्यथा प्रधानेनैवान्वये निर्दिष्टपरिभाषायाश्चोपस्थितेः सत्याव्यवहि
ते निषेधस्य प्रवृत्तौ व्यर्थमेव क्नोः कित्वं स्यात्तस्माद्यथाव्याख्यानमेवसाधु ॥ ननु नपदीयं परसप्तमी तर्हि शचङन्ते दोषः । लघूपधलक्षण
गुणप्राप्तेरिरितिचेन्न ॥ अंतरंगत्वादियङुवङ्प्रवृत्तेः धिधारणे ॥ रिपिगतौ ॥ तुदादयः धियति रियति ॥ पियति णिश्रिद्रुस्रुभ्यः कर्त्तरिचङ् अ
शिश्रियत् ॥ अदुद्रुवत् ॥ असुस्रुवत् ॥ इह तिपमाश्रित्य प्राप्तो गुणो बहिरंगः शचङाश्रयावियङुवङावंतरंगौ ॥ तेदक्तं ॥ शचङंतस्यात

श॰ कौ॰ रंगलक्षणत्वादिति ॥ मृजेरजादौ संक्रमे वृद्धिर्वेष्यत इति काशिकायां । इदं च क्ङ्कोगुणवृद्धी इति सूत्रप्रसंगाद्वैयाकरणांतरमतत्वेनोक्तं भाष्ये ॥ अ
५६ स्यार्थः संक्रामतीप क्रामतो गुणवृद्धी अस्मादिति व्युत्पत्त्या गुणवृद्धिप्रतिषेधनिमित्तभूतः क्ङित्प्रत्ययोत्र संक्रमशब्देनोच्यते ॥ योगरूढेः ते
न मरी मृजइत्यत्र धात्वंशलोप निमित्तत्तया वृद्धिप्रतिषेधहेतावप्यच्प्रत्यये नासौ विकल्पः प्रवर्त्तते इत्यवधेयम् ॥ अतएव क्ङित्यचि वेति वच
नं तत्र भाष्ये कृतं ॥ मृजेति ॥ मार्जेति ॥ अत्र हरदत्तः अचीत्युच्यमानेपि यस्मिन्विधिस्तदादावल्ग्रहण इति सिद्धे आदिग्रहणं मुख्याजादि
ग्रहार्थं ॥ तेन व्यपदेशिवद्भावेनाजादौ यूयं ममृज ॥ त्वया ममृजे इत्यादौ न भवतीति ॥ तच्चिन्त्यम् ॥ मुख्याजादिपरिग्रहे प्रमाणाभावात् ॥ नहि
भाष्ये आदिग्रहणं कृतं ॥ येन त्वदुक्तार्थो लभ्येत ॥ किंतु क्ङित्यचि वेति वचनं पठितं ॥ यत्तु नतः प्रागुक्तं भाष्ये ॥ इहान्ये वैयाकरणा मृजेरजादौ
संक्रमे विभाषा वृद्धिमारभंत इति ॥ तत्तु तदादिपरिभाषाबललब्धवाक्यार्थानुवादमात्रं न तु परकीयविधिवाक्यशरीरमिदं येन त्वदुक्तमर्थं
जापयेत् ॥ अतएवात्रेयो मृजेति भिदादिपाठात् अङ्गणपाठादेव वृद्ध्यभाव इत्याह ॥ अतएव रक्षिते नापिधातुप्रदीपे तुंदपरिमृजस्तुंदपरि
मार्जइत्युभयं दर्शितं ॥ दुर्घटवृत्तौ तु तुंदपरिमृजइत्यत्र व्यवस्थितविभाषया वृद्धिर्नेत्युक्तं ॥ अतएव धातुवृत्तिषु यूयं ममृज ममार्जेति रूपद्वय
मुदाहृतं ॥ यत्तु मुख्याजादिग्रहणवादिनोपि मते अत्र वृद्धिविकल्पो दुर्वार एव ॥ तथाहि ॥ मध्यमपुरुषबहुवचनस्याप्यस्य परस्मैपदानां
मिति सूत्रेण विधीयमानो अकारादेशो अलोंत्यस्य प्राप्नोति ॥ न चैवं विधिवैयर्थ्यं ॥ णलादीनां यथासंख्यसंपादनेन चरितार्थत्वादित्याशंक्य
भाष्य एवं हेधा समाधास्यति ॥ अकाररूपात्मकोयमनेकाल्त्वात्सर्वादेशः ॥ यद्वा धातोरित्यधिकारादादेः परस्येति यकारमात्रस्याकार इति राम
तत्र पक्षद्वयेपि अतो गुण इति पररूपस्याचः परस्मिन्निति स्थानिवद्भावान्मुख्याजादित्वमप्यस्त्येवेति केचिद्धरदत्तमिश्रमतेदूषणमुक्तं ॥ तन्न ॥ आद्ये त ५६

चरित्यतिदेश इव स्थानिवद्भावेपि सुस्यत्वाभावस्य सुवचत्वादिति दिक् ॥ स्यादेतत् ॥ अचिनोद् मार्ड्इत्यादौ स्थानिवद्भावेन तिपो ङित्वात् क्ङिति चे
ति गुणवृद्धिनिषेधः स्यात् ॥ नचोल्विधित्वात्स्थानिवद्भावासंभवः अनुबंधकार्येष्वनल्विधाविति निषेधस्याप्रवृत्तेः अन्यथा अचिनवं अमार्जं
इत्यादावपित्वेन सार्वधातुकमपिदिति ङित्वापत्तेः इह च ज्ञापकं नल्यपीति सूत्रं ॥ अन्यथा ल्यपः कित्त्वाभावादेव ईत्वाप्राप्तौ किं तन्निषेधे
न सूत्रेण ॥ यत्तु सेर्ह्यपिच्चेति अपिद्वचनं ज्ञापकमिति ॥ तन्न ॥ शृणीहि विश्वतः प्रतीत्यादौ स्थानेंतरतमपरिभाषया पित्वादनुदात्तस्य सिपः
स्थाने ऽनुदात्तस्यैव हेः प्राप्तौ उदात्तसंपादनेन चरितार्थत्वात् ॥ अपि त्वसामर्थ्याद्धि तत्रांतरतमपरिभाषा बाध्यते ॥ प्रतिपत्तिलाघवार्थमुदा
त्त इति वक्तव्ये अपिद्वचनं ज्ञापकमिति वास्तु ॥ न्यायसिद्धोप्ययमर्थः अनुबंधानामनेकांतत्वेन स्थानिकोटावप्रविष्टतया स्थान्यलाश्रय
विधिविषयकस्यानल्विधाविति निषेधस्याप्रवृत्तेः अनुबंधा एकांता इति मतेपि स्थानित्वप्रतीतेः प्रागेवांतरंगेण लोपेन तेषामपहारात् ॥ त
स्माल्लङाद्यादेशानां तिबादीनां स्थानिवद्भावेन ङित्वं दुर्वारमिति ॥ अत्राहुः यासुट् परस्मैपदेष्विति सूत्रे ङिद्वचनं ज्ञापकं लादेशानां स्थानि
वद्भावेन ङित्वं न भवतीति ॥ तथा च वार्त्तिके लकारस्याङित्वादादेशेषु स्थानिवद्भावप्रसंग इति चेद्यासुटो ङिद्वचनात्सिद्धमिति ॥ ननु स्तुया
दित्यादौ अनिग्लक्षणवृद्धिप्रतिषेधार्थं चिनुयुरित्यादौ जुसि चेत्यस्य प्रतिषेधार्थं च यासुटो ङित्वमस्तु ॥ उतो वृद्धिर्लुकि हलीत्यत्र हि उत
इति निर्दिष्टस्थानिकतया इक्परिभाषा नोपतिष्ठते ॥ जुसि चेति तु क्ङितीत्यस्यापवाद एव ॥ तथा च स्थानिवद्भावलभ्यं ङित्वं स्तुयाच्चि
नुयुरित्यत्र वृद्धिगुणौ निषेद्धुं नालं ॥ पुनर्ङित्वसामर्थ्यात्तु तदुभयनिषेधो भविष्यति तथा च वृद्धिगुणनिषेधे चरितार्थं यासुटो ङित्वं कथं लादे
शेषु लाश्रयङित्वस्य विरहं ज्ञापयेदिति चेत् ॥ उच्यते ॥ उत औदिति वक्तव्ये वृद्धिग्रहणं संज्ञापूर्वको विधिरनित्य इत्यस्य ज्ञापकं स्यादित्येवमर्थं ॥ तेन स्तु

शा·कौ· याद्दित्यत्र न वृद्धिः तयाचिनुयुरित्यत्र न गुणः क्सस्याचीत्यतो चीत्यनुवर्त्त्य अनादौ जुसि गुणविधानात्॥ मिदेर्गुणो जुसि चेत्यक्षरं संश्लि-
५७ ष्य अचासावुस् चेति कर्मधारयाश्रयणेन अजादौ उसि गुणविधानाश्रयणे तु चक्रुर्जह्रुरित्यादावतिप्रसंगः गुणेतिलुप्तविभक्तिकं उज्जुसी
ति च छेदः उकारादौ जुसीति वार्थः जुसि गुणे यासुट् प्रतिषेध इति वार्त्तिकमप्युक्तरीत्या सिद्धार्थकथनपरमिति तावद्वार्त्तिककारस्य हृदयं॥ भा
ष्यकारमते तु सार्वधातुकमपिदिति सूत्रे अपिदिति योगं विभज्य ङिदिति चानुवर्त्त्य आवृत्तिं चाश्रित्य ङिच्च पिन्न भवतीति पिच्च ङिन्न भवतीति
वाक्यार्थद्वयं वर्ण्यते॥ इदं च हलः श्न इति सूत्रे भाष्ये स्पष्टं॥ तेन ब्रूतादित्यत्र तु वर्ध्य ईण्न स्तात ङ औपदेशिक ङित्त्वेनांतरंगेण आतिदेशिकस्य व-
द्धिरंगस्यापि त्वस्य बाधात्॥ अतिदिष्टादुपदिष्टं बलीय इति न्यायात्॥ अचिनोदित्यादौ तु औपदेशिकेन तिवादीनां पित्त्वेन लब्धमप्यातिदेशि
कं ङित्त्वं बाध्यते॥ तेन गुणादिसिद्धिः अस्मिंश्च पक्षे यासुटो ङित्त्ववचनं न ज्ञापकं किंतु मृज्यादित्यादावप्राप्तङित्त्वविधायकम्॥ तेन च पित्त्व
स्य चिनोतीत्यादौ सावकाशस्य बाधः अतस्तु यादित्यादौ पिति हलीति विधीयमाना वृद्धिर्न प्रवर्त्तते॥ चिनुयुरिति तु भाष्व देवस मर्थनीयं॥
पूर्वोदाहृते वार्त्तिकमते तु ब्रूतादित्यत्र ईट् प्राप्नोति॥ आगमशासनमनित्यमिति तु कथंचित्समाधेयः वस्तुतस्तु हलः श्नः शानज्झाविति शान
चः शित्करणेन क्वचिदनुबंधकार्येप्यनल्विधाविति निषेधः प्रवर्त्तत इति ज्ञाप्यते॥ तेन ब्रूतादित्यादौ न कश्चिद्दोष इति॥ अत एव भाष्यमते भवि
षीष्टेत्यत्र ङित्त्वं न करिष्यमाणेत्यत्रो गिल्लक्षण श्लिल्लक्षणश्च ङीप्रेतिदिक्॥ दीधीवेवीटाम्॥ दीधीवेव्योरिटश्च गुणवृद्धी न स्तः आदीध्यकं आ
आधीध्यकः आवेव्यनं। आवेव्यकः अकोणिषं। अरणिषं॥ कणिताश्वोरणिताश्वः इह अमं प्रति सिजंतमंगं तिपोऽडादेशं प्रति तु कणित् इति तांतमंगं राम
तस्य अमं डादेशं च सार्वधातुकं निमित्तीकृत्य लघूपधगुणः प्राप्तो नेन निषिध्यते॥ वृद्धिस्तु इटो न संभवत्येव॥ लुङं तताः स्फोरयितुं श्व इत्यस्य ५७

प्रयोगः नहितज्जन्तेतृन्नंतेषाङ्गिसंगुणप्राप्तिः प्रत्ययावयवत्वात्तस्य ॥ अथदीङ्क्षये॥ धीङ् अनादरे वेञ्तंतुसंताने॥ वीगत्यादिषु॥ एतेषा
मिहग्रहणंकुतोनेतिचेत्॥ नअवेषणप्रसिद्ध्यपेक्षयासमुदायप्रसिद्धेर्बलवत्वात् किंचचतुर्णांग्रहणेभिप्रेते। संदेहार्थंदीवेधीवीतांइत्ये
वब्रूयात्॥ इट्चात्रआगमएवगृह्यतेनतुइट्गतौइतिधातुः नतुधातुसाहचर्याद्धातुरेवगृह्यतां॥ मैवं॥ साहचर्यस्यसर्वत्रानियामकत्वा
त्॥ अन्यथादिहिस्त्रिभ्यश्चतुरितिकृत्वोर्थइतिसूत्रेकृत्वोर्थग्रहणंनकुर्यात्॥ द्विस्त्रिरितिसुजंताभ्यांसाहचर्येणचतुरित्यस्यापिसुजंतस्यग्रहण
संभवात्॥ अतएवआगमापेक्षयाप्रकृतेरभ्यर्हितत्वाद्दीधीङः पूर्वनिपातःसूत्रेकृतः इटोपिधातुत्वेतुप्रकृतित्वाविशेषेप्यल्पाच्तरत्वात्तस्यैव
पूर्वनिपातःस्यात्॥ अत्रेदमवधेयं॥ दीध्यकोवेव्यकइतियदुदाहृतंतन्नदीधीवेवीभ्यांशुद्धाभ्यामेवण्वुलिरूपंन्तुण्यंताभ्यामपि॥ यत्तुयी
वर्णयोरितिसूत्रेहरदत्तेनोक्तं॥ वर्णशब्दोवर्णविस्तारेइतिधातोः पचाद्यजंतःश्रूयमाणएवइवर्णेयथास्याल्लुप्तेमाभूदित्येवमर्थः तेनण्यं
ताभ्यांण्वुलिणिलोपस्यपूर्वविधौस्थानिवत्वेपिश्रूयमाणत्वाभावाल्लोपाभावेयणिकृतेदीध्यकोवेव्यकइत्येवशुद्धेनसमानाकारंरूपंभव
तीति॥ तदेतन्नाग्लोपिशास्त्वृदितामित्यत्रतस्मिन्सूत्रेभाष्यकारैरेवण्यंतस्यदीधकइतिरूपंशुद्धस्यतुदीध्यकइतिव्युत्पादितत्वात्सिद्धान्त
विरोधादुपेक्ष्यं॥ तत्रहिवर्णग्रहणंलुप्तेपीवर्णेयथास्यादित्येवमर्थमित्याशंक्यस्थानिवद्भावेनसिद्धेरन्तरंगत्वाण्णिलोपात्प्राग्यीवर्णयो
रितिलोपसिद्धेश्चवर्णग्रहणंप्रत्याख्यातम्॥ ननुवर्णग्रहणंकुर्वतःसूत्रकारस्याशयंभाष्यकारोक्तादन्यमेवानुसृत्यब्रूमइतिचेत्॥ सत्य
म्॥ तथापियथोत्तरंमुनीनांप्रामाण्याद्रूपाशुद्धिस्तदवस्थैवेतिदिक्॥ स्यादेतत्॥ दीधीवेव्योर्ङित्वात्क्ङितिचेतिसूत्रेणैवनिषेधोस्तुकिमि
हदीधीवेवीग्रहणेन॥ मैवम्॥ इग्लक्षणयोर्हिसनिषेधइत्युक्तं॥ नचअचोञ्णितीतिवृद्धिरिग्लक्षणा॥ किंच॥ कार्यिणोनिमित्तत्वेपूर्वै

श·कौ· णसिद्धिः संभवेदपि। नचकार्यीनिमित्ततयाश्रीयते॥ च्यवते प्लवते इत्यादावपिगुणनिषेधापत्तेः अत्रचलिंगकुटादिमध्येकूङ्शब्दे इत्यस्यपा
५८ ठःस्थंडिलाच्छयितरीतिनिर्देशश्च। यत्तु प्रकृतसूत्रेदीधीवेव्योर्ग्रहणमेवैतत्परिभाषाज्ञापकमिति॥ तन्न॥ अनिग्लक्षणवृद्धिनिषेधेन चरितार्
थत्वात्॥ भाष्यमतेएतत्सूत्रस्यप्रत्याख्यास्यमानतया उक्तपरिभाषायांकिंगान्तरस्यैवानुसर्त्तव्यत्वाच्च॥ स्यादेतत्॥ यदिकार्यीनिमित्तत्वे
मनाश्रीयते कथंतर्हिऊर्णुनविषतीत्यत्रद्विर्वचनेचीति नुशब्दस्यद्वित्वं॥ इषइत्यस्य अजादित्वेपिद्वित्वंप्रति कार्यिमध्येप्रविष्टतयानिमि
त्तत्वासंभवात्॥ सन्यङोरितिषष्ठीमाश्रित्यसन्नंतस्यद्वित्वविधानात् अन्यथेषप्रकृतिषतीतिसनोद्वित्वंनस्यात्॥ यत्तु सन्यङोरितिसप्तम्या
श्रयणेपि सन्यङोरकारोच्चारणसामर्थ्याद्वित्वंभविष्यतीति॥ तन्न॥ दित्सधित्सादिभ्योयङ्लुक्त्वनिप्रतिबंधेन अचोपदिष्टप्रत्यययोस्तादने
नचाकारोच्चारणस्यचरितार्थत्वात्॥ अन्यथा अरिरिषतीत्याद्यसिद्धेश्च॥ यदिहितत्रापिस्थानिवत्स्यात् इसोद्विर्वचनेकृते अरीषतीतिस्या
त्॥ अत्रोच्यते॥ कार्यमनुभवन्नेवकार्यीनिमित्ततयानाश्रीयतइतिपरिभाषार्थः अरिरिषतीत्यत्रहि अजादेर्द्वितीयस्येतिरिस्शब्देद्वित्वप्र
वृत्तिः तदंतर्गतश्च इस्शब्दइतिनासौद्वित्वंप्रतिनिमित्तंकार्यभाक्चात्॥ ऊर्णुनविषतीत्यत्रतु नवशब्दस्यद्वित्वंप्राप्तं॥ तदंतर्गतश्चइस्शब्द
इतिभवत्येवनिमित्तं॥ तद्भावभाविता मात्रेणहि निमित्ततेति सन्यङोरितिसूत्रेभाष्यकारैरेवस्फुटीकृतत्वात्॥ तथाचिद्विर्वचनेचीतिस्थानि
वद्भावान्नुशब्दस्यद्वित्वमुचितमेव॥ यत्तुद्विर्वचनेचीतिसूत्रे अचिकिंजेघ्रीयतेदेध्मीयते इतिप्राचांप्रत्युदाहरणं॥ तदापाततः घ्रीध्मीप्
इत्यस्यद्वित्वभाक्तयाईघ्राध्मोरितीत्वंप्रतिनिमित्तभूतस्ययङोद्वित्वंप्रत्यनिमित्तत्वात्॥ तस्मात्तत्र अचीत्यस्यअधिजगइत्येतदेवव्या· राम·
वर्त्यंबोध्यं॥ गाङ्लिटीतिङ्कित्करकनिर्देशमाश्रित्यलावस्थायामेवगाङादेशविधानात्॥ अज्ग्रहणंतुज्ञापकंरूपस्थानिवद्भावस्येतितत्र ५८

त्यवार्त्तिकमपि अधिजग इत्येवमादिष्वुदाहरणे कार्यातिदेशाश्रयणे अज्ग्रहणं वैयर्थ्यं स्यादित्येवं योज्यमिति दिक्॥ यत्तु असिद्धवदत्राभादित्यस्य सूत्रे वस्यते अ
भग्रहणं समानाश्रयप्रतिपत्त्यर्थमिति तत्राश्रयत्वं स्थानितया निमित्ततया वा कथंचिदाश्रयणमात्रेण न तु निमित्ततयैवेत्याग्रहः तेन शा हौ इ
ति शाभावो हेर्धित्वे कर्त्तव्ये असिद्धो भवति॥ अन्यथा धित्वे हेः कार्यितया निमित्तत्वाभावादसिद्धत्वं न स्यात्॥ अत एव समानाश्रयमभिप्रेत्य
माभीये असिद्धमित्येवाहुर्न तु समाननिमित्तमिति॥ इदं च सूत्रं भाष्यवार्तिकयोः प्रत्याख्यातम्॥ तथाहि॥ दीधीवेव्योश्छान्दसो धातू॥ न तु लोके
प्रयोगार्हौ॥ छन्दसि चानयोर्गुणो दृश्यते॥ होत्राय वृत्तः कृपयन्न दीधेत्॥ अदीधयुर्दाशराज्ञे वृतास इत्यादौ॥ न चायं भाष्ये लौकिके नं समाधेयः
तथा सति निषेधसूत्रानारंभस्य वलाघवेनोचितत्वात्॥ तथा इटोपि ग्रहणं व्यर्थं॥ आर्द्धधातुकस्येडित्यत्र हि नेड्वशि कृतीति सूत्रादिड्ग्रहण
मनुवर्त्तते॥ तच्च इटो विकाराभावार्थं॥ इट् इडेव न तु विकृत इति व्याख्यानात्॥ न नो लघूपधगुणाभावात्मिद्धं कणिता श्वो रणिता श्व इत्यादि॥ न
चैवं पिपठीरित्यत्र दीर्घो न स्यादिति वाच्यं॥ तस्य नियमं प्रत्यसिद्धत्वात्॥ अपाठीदित्यत्र सवर्णदीर्घस्तु न वार्यते॥ सिज्लोप एकादेशे सिद्धो
वक्तव्य इति ज्ञापकात्॥ यद्वा अंगाधिकारे क्रियमाणो नियम आंगमेव विकारं व्यावर्त्तयति तेन वौरिति अकः सवर्ण इति च दीर्घो भवत्येव॥ ग्रही
नेत्यनुग्रहीलिटीत्यारंभसामर्थ्याद्दीर्घो भवत्येव॥ इदं त्ववशिष्यते॥ पिपठिषि ब्राह्मणकुलानीत्यत्र सांतमहतः संयोगस्येति दीर्घत्वं न स्या
त्॥ सिद्धत्वाद्यं गत्वा ते जा सीत्यादौ चरितार्थत्वाच्च पिपठीरपाठीत् गृहीतेत्यादि पूर्वोदाहृते भ्योस्य वैलक्षण्यादिति अत्राहुः पिपठीं
षीति प्रयोगो असाधुरेव न त्वयं तु मागमो लभ्यते॥ अल्लोपस्य स्थानिवद्भावेनाझलंतत्वात्। न चैवमजंतत्वमपृक्तो नुम् स्यादेवेति वाच्यं।
तस्य मस्वादुत्तरं च प्रसक्त्यादीर्घस्य तथाप्यप्रवृत्तेः सांतसंयोगाभावात् वस्तुनस्त्वजंतत्वमप्रयुक्तो नुमत्र न भवत्येव॥ स्थानिवद्भावास

भत्वात्॥अनादिष्टादचः पूर्वस्य विधौ हि सः न चाजंतमनादिष्टादचः पूर्वं॥ येन तस्य नुमि कर्त्तव्ये अल्लोपः स्थानिवत्स्यात्॥ ननुं झल्लंतत्व प्र
युक्तो नुम् दुर्वारः न च तस्मिन्कर्त्तव्ये स्थानिवद्भावः शंक्यः क्वौलुप्तं न स्थानिवदिति निषेधात्॥ अन्यथा सखीयतेः क्विपि सखीः सुतीयतेः सु
तीरित्यादि न स्यात्॥ अल्लोपस्य स्थानिवद्भावेन यणादेशप्रसंगात्॥ अत्रोच्यते॥ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानमिति तावद्
वार्त्तिकशरीरं। तत्र क्वौ लुप्तं न स्थानिवदित्यंशो यद्यपि द्वेधा व्याख्यास्यते॥ क्वौ लुप्तं न स्थानिवदिति॥ क्वौ विधिं प्रति न स्थानिवदिति च॥ देवयतेः क्विपि दयूरित्यादे
रन्यतरव्याख्यानाश्रयणेन सिद्धावपि सखीयतेः सखीरित्यस्याद्यव्याख्यानेऽसिद्धेः लवमाचक्षाणो लौरित्यस्य द्वितीयव्याख्यानं
विनाऽसिद्धेश्च॥ तथापि क्वौ विधिं प्रतीति द्वितीयव्याख्यानमेव सार्वत्रिकं॥ क्वौ लुप्तमिति तु क्वाचित्कं॥ ख्यत्यादित्यत्र मपर्यंतस्येत्यत्र च भाष्याद्
वाश्रितं न तु सार्वत्रिकं॥ अत्र च इङ्ग्रहणप्रत्याख्यानपरमत्र त्यभाष्यमेव प्रमाणं कथमन्यथापि पठीषीत्यादौ दीर्घस्येष्टत्वे सूत्ररीत्या चतंज्ञा
भे इङ्ग्रहणं प्रत्याचक्षीत॥ तस्मात्पिपठिषि ब्राह्मणकुलानीत्येव रूपं भवतीति॥ हलोऽनन्तराः संयोगः॥ अज्भिरव्यवहिताः हलः संयोगसंज्ञाः
स्युः संज्ञाप्रदेशाः संयोगांतस्य इत्येवमादयः इह अन्तरशब्देन छिद्रवाचिना बहुव्रीहौ निश्छिद्रा इत्यर्थलाभाद्वयं हि संस्थानभाव्यं॥ आधे
यप्रधानेनांतरेत्यव्ययेन सह बहुव्रीहौ तु आधेयनिषेधप्रतीतेरवग्रहेपि भाव्यमेव संज्ञया॥ न हि तत्रान्तरा मध्ये किंचिदस्ति किंतु मध्यमात्रं वर्त्त
ते॥ मात्रा ह्रस्वस्तावदवग्रहांतरमिति प्रातिशाख्यबलेन तत्र मात्राकालावसानाभ्युपगमात्॥ यत्तु प्रातिशाख्यांतरं अर्द्धमात्रावग्रह इति त
त्तु सर्वत्र संहितायां अर्द्धमात्राकालस्य सत्त्वात्ततोऽतिरिक्तोऽर्द्धमात्राकालोऽवग्रहे स्तीत्येवं परं अतः प्रातिशाख्ययोरविरोधः तदिह कतरः प
क्षो ग्राह्य इति चेत्॥ उभयथार्षं दृष्टं इति भाष्यकाराः नन्वप्सु इत्यादौ सत्यां संयोगसंज्ञायां संयोगे गुर्विति गुरुत्वाद्गुरोरनृत इति प्लुतेन भा

व्यं॥ नत्वन्यथेति महान्फले विशेषः नत्वकथंपक्षद्वयाभ्युपगम इतिचेत्॥न॥ अस्त्रित्वस्याधिकरणवृत्तेर्दूराद्भूतसंबंधाभावात्॥ विचार्यमा
णानामित्यादौतु वाक्यस्फटेरित्यनुवर्त्तते॥ ननुगुरोरनृत इति॥ नन्वप्सु भवो प्सव्यः दिगादिषु पाठाद्यत्॥ अपो योनियन्मतुपुचेति सप्तम्या अ
लुकृततः संबुद्धौहे अप्सव्ये त्यत्रस्यादेवफलभेद इतिचेत्॥ अत्राहुः नैवंविधेविषये अवग्रहं पदकाराः कुर्वतिइति॥ अत्रच संप्रदायएवशा
रणमिति बोध्यम्॥ युक्तंचैतत्॥ गोभ्योगातुंगोभिमदायः चित्रइंद्राजाराजकाइदन्यके॥ इत्यादौगोभ्योगोभिःराजकाइत्यादीनांसत्यपिपद
त्वे अवग्रहाकरणात्॥ ईयिवांसमतिस्त्रिधइत्यादौईयिवांसमितिविनापिपदसंज्ञांक्वसोः पूर्वमिडागमां ते ऽवग्रहकरणेष्वेवमेतेनसिसासन्
॥ उक्थशंसेः। रिरिषइत्यादौपदकालेसत्त्वहृस्वत्वाद्योपिव्याख्याताः॥ यत्तुमानोमहान्तमितिमंत्रेवेदभाष्यकारैरुक्तं॥ छांदसः पदका
लीनोहृस्वइतितदपिसंप्रदायमात्रपरतयाकथंचिन्नेयं। नक्षणेनपदकाराः इतिभाष्येपदविभागः पौरुषेयइतिकैयटादिभिरुक्तत्वात् इ
तिदिक्॥ कथंतर्हितत्रतत्रावग्रहे विशेष इत्युच्यत इतिचेत्॥ अवांतरपदत्वे सत्यवग्रहः क्रियत इत्युत्सर्गमभिप्रेत्येतिगृहाण॥ अप्सुयोनि
र्वा अस्व इत्यादावपिसुशब्दात्पूर्वं नास्त्यवग्रहः अवांतरपदसंज्ञानेकत्वे उत्सर्गतः प्रवृत्तिकपावग्रह इति वैदिकसंप्रदायात्॥ अतएवमसू
ररोमभिरित्यत्रभिसः पूर्वमवग्रहः नमउक्तिभिरित्यत्राप्येवं॥ इंद्रप्रणः पुरएतेवेत्यत्रवेवशब्दात्प्रागिति दिक्॥ महासंज्ञाकरणमन्वर्थसं
ज्ञाविज्ञानार्थं॥ संयुज्यंतेस्मिन्समुदायेवर्णा इति॥ तेनात्रसमुदायेवाक्यपरिसमाप्तिर्ननु गुणवृद्ध्यादिसंज्ञावत्प्रत्येकं॥ तथाहि सतिनिर्या-
यादित्यादौयकारः संयोगइति वान्यस्य संयोगादेरित्येत्वंस्यात्॥ सिद्धांतेतु अचोरहाभ्यामितिद्वित्वे सत्यपितस्यासिद्धत्वानि र्यायादित्यादा
वेत्वंनभवति॥ किंचप्रत्येकं संज्ञेतिपक्षे संस्त्वषीष्टेत्यत्रऋतश्च संयोगादेरितीट्स्यात्॥ संह्रियत इत्यत्रगुणोर्त्तिसंयोगाद्योरिति गुणःस्यात्

॥दृषत्करोतीत्यत्र ककारसन्निधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात्॥ शक्तावस्तेत्यत्र झलि तकारे परतः स्कोरिति लोपः स्यात्॥ निर्यात
इत्यादौ संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं स्यात्॥ जातौ चेदं बहुवचनं॥ हल इति॥ जात्याख्यायामेकस्मिन्निति वचनात्॥ तेन द्व
योरपि संयोगसंज्ञा भवति॥ अतः शिक्षेत्यादौ गुरोश्च हल इत्यप्रत्ययः सिध्यति॥ यत्र तु बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां वाविशेषेण सं
ज्ञा॥ न च एकाच इति द्विर्वचनन्यायेन समुदायस्यैव स्यादिति वाच्यम्॥ वैषम्यात्॥ तथाहि॥ द्विर्वचनं समुदायावयवैकाचोर्युगपत्कर्त्तुमशक्यं
॥ संज्ञा तु शक्या॥ तथा समुदाये हि रूक्ते अवयवा अपि हि रूक्ता भवन्ति॥ दृष्ट्वा चलन्महावयवैः प्रचलतीति न्यायात्॥ इह तु समुदाये
प्रवृत्तया संयोगसंज्ञया नावयवानां तत्कार्यसिद्धिः अतो अविशेषेण द्वयोर्बहूनां च संज्ञेति स्थितं॥ यदि तु बहूनामेव स्यात्तर्हि सख्युरित्यत्र इत्य
त्र गुणोर्तीति गुणो न स्यात्॥ गोमान्करोतीत्यत्र संयोगान्तलोपो न स्यात्॥ निर्ग्लान इत्यादौ निष्ठानत्वं न स्यादित्यादि॥ ननु यदि द्वयोरपि सं
ज्ञा तर्हि इन्द्रीयतेः सनि इन्दिद्रियिषतीति न स्यात्॥ इह हि संयोगौ द्वौ नदौ दरौ च॥ तत्र नकारस्येव दकारस्यापि नन्द्राः संयोगादय इति द्वित्वनिषेधः प्राप्नो
ति॥ नैष दोषः तत्र हि अजादेरित्यनुवर्त्तते॥ सा च कर्मधारया पञ्चमी॥ तेन आदेरचः परे नदराः संयोगादयो न द्विरुच्यन्त इति सूत्रार्थः एवं
च पूर्वसूत्रे द्वितीयस्येति न कर्त्तव्यमेवेति वक्ष्यते॥ हलः किं तितउभ्यां भवत्र तनोतेर्डउः सन्वच्चेति डउप्रत्ययः सन्वद्भावाद्द्वित्वसन्यत इ
तीत्वं च॥ व्यस्तोच्चारणसामर्थ्याद्गुणाभावः यदि हि अचोरपि अनन्तरयोः संयोगसंज्ञा स्यात्तर्हि इह संयोगान्तस्येत्युकारलोपः स्यात्॥ अनन्तराः
इति किं॥ पनसम्॥ यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि स्कोरिति सूत्रेण सकारलोपः स्यादिति दिक्॥ मुखनासिकावचनोनुनासिकः 
॥ मुखसहितनासिकया मुखनासिकया तयोच्चार्यमाणोनुनासिकसंज्ञः स्यात्॥ संज्ञाप्रदेशाः आङोनुनासिकश्छन्दसीत्यादयः अभ्र आँ 

अपोवृणाना। गभीरआँउग्रपुत्रेइष्ट॥ उच्यतइतिवचनः कृत्यल्युटोबहुलमितिबाहुलकात्कर्मणिल्युट्॥ राजभोजनाः शालयइतिवदितिवृत्त्यनुसारिणः। भा
ष्यकैयटयोस्तुउच्यतेनेनेतिवचनं। करणेल्युट्सामान्येनपुंसकं॥ शक्यंचश्चुतउपहंतुमितिवत्॥ तेनतुल्यंक्रियाचेत्॥ संस्कृतंभक्षाइतिच्च। इदंचवि
शेषणानांचाजातेरित्यत्रवक्ष्यमाणेनपदसंस्कारपक्षेगुणवचनानामित्यादिवाचनिकमित्यनेनसहयथानविरुध्यते तथातत्रैववक्ष्यामः। ततोमुखंना
सिकावचनंयस्येतिबहुव्रीहिः। मुखेतिकिम्। यमानुस्वाराणामेवमाभूदितिभाष्यं। तत्रवर्गेष्वाद्यतश्चतुर्णांपंचमेपरेतन्मध्येपूर्ववर्ण्यसमानाक्षरंवर्णांतरंप्राति
शाख्येष्वागमत्वेनविहितं। तद्यमसंज्ञं। यमइवयमः यमौहिलोकेप्रायेणसमानाकारौभवतः यथापलिक्क्नीः चख्ख्नतुः अग्ग्निः अघ्घ्नन् इत्यत्रकखगघइत्येभ्यः
परभागेनत्तत्सदृशोयमागमः॥ यत्तूक्तंविवरणे॥ वर्गपंचमयुक्ताः प्रथमाद्योयमाइति॥ तच्चिंत्यं॥ अयोगवाहत्वप्रतिपादकेनहयवरट्सूत्र
स्थभाष्येणसहविरोधात्॥ केवलनासिकात्वपरेणयमानुस्वाराणामेवेतिभाष्येणसहविरोधाच्च॥ अथेदंभाष्यंनकेवलनासिक्यत्वपरंकिंतु "
आंइत्यादीनांभागमात्रंनासिक्यं यमानुस्वाराणांतुमुखनासिक्यत्वेपिप्रासादवासिन्यायेननासिकात्वमप्यस्तिनतुतदीयभागमात्रं॥ तथ्ये
त्येवंपरंतथापिआदितश्चतुर्णांतरसंभवएव॥ किंचैवंनैवदोषोनैवप्रयोजनमस्मिन्नितदुत्तरभाष्यग्रंथविरोधः यद्धंतीत्यादौपरोनुनासिक
इत्यस्यप्रवृत्त्यापत्त्यात्वत्पक्षेदोषस्योद्धृतत्वात् अतएवप्रातिशाख्ये॥ स्पर्शायमाननुनासिकाः स्वान्परेषुस्पर्शेष्वनुनासिकेष्वित्युपक्रं
म्यप्रदोधुवच्छ्राम्ब्रुवित्यत्रयमंनिषेद्धुमारब्धे॥ नस्पर्शस्योष्मप्रकृतेःपरस्माद्यमापत्तिमितिसूत्रेपरस्ताच्छब्दःप्रयुक्तः यमःप्रकृत्यैवस
दृक्श्रुतिर्यमेनमुख्यास्तिसमानकालेत्यादिसूत्रांतरेष्वपिस्पष्टमेवयमस्यवर्णांतरत्वं। तथानारदीयशिक्षायामपि अनंत्यश्चभवेत्पूर्वोत्त्यश्च
परतोयदि॥ तत्रमध्येयमस्तिष्ठेत्सवर्णः पूर्ववर्णयोरिति॥ सवर्णः सदृशः अत्रपूर्ववर्णयोरितिद्वित्वमविवक्षितं॥ यज्ञइत्यादौजकारद्वयसत्वेपिज्ञ्म

ग्रा॰कौ॰ या अत्र वसवो रंतदेवा इत्यादौ जकारद्वयाभावादिति तद्व्याख्यातारः। तथाऽस्मत्तंत्रव्याकरणाख्यस्य छंदोग्यलक्षणस्य प्रणेता औदव्रजिरप्य
६१ सूत्रयत्॥ अनंत्यान्त्यसंयोगे मध्ये यमः पूर्वस्य गुण इति॥ पूर्वस्य गुण इत्यस्य पूर्वभक्त इत्यर्थः एतेनागमत्वं स्फुटीकरोति तथा संयोग श्रंख
लास्व्याया गौतमशिक्षायामपि॥ अथ चतुरक्षराणामुदाहरणं संयमायमाभ्यां संयमास्ता वद्यथा। गृभ्निरिति ह्रौ गकारौ यमनकारौ यज्ञ इ इ
ति ह्रौ जकारौ यम ञ कारावित्यादि॥ तथा तत्रैव ग्रंथारंभे। अयस्पिंडो दारुपिंड ऊर्णापिंडश्चेति त्रिधा संयोगं विभज्य यमसहितं यमस्पिंडमित्युक्त्वा
अंतस्थयमसंयोगे विशेषो नोपलभ्यते॥ अशरीरं यमं प्राहुरंतस्थः पिंडनायक इत्युक्तं अंतस्थोत्र वर्गपंचमः अशरीरमिति स्वरभक्त्यादिवद्व्यंज
कलिपिविशेषशून्यमित्यर्थः लक्षणवशेनैव तदीयस्थलविशेषनिश्चयसंभवाल्लिपिसंप्रदायप्रवर्त्तकाचार्य्यैः स्वरभक्तेरिव यमस्यापि व्यंजकी भूता
लिपिर्न कल्पितेत्यर्थः रलयोरूष्मणि परे मध्ये स्वरभक्तिरिति हि प्रसिद्धं शिक्षादौ॥ यत्र तु नैवं विधेन लक्षणेन स्थलावधारणं कर्त्तुं शक्यते॥ तत्रागत्या
लिप्यंतरं प्रवर्त्तितं॥ यथा विसर्गादौ॥ पाणिनीयशिक्षायामपि॥ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः संभवतो मताः। प्राकृते संस्कृते वापि स्वयं प्रोक्ताः स्व
यंभुवा॥ स्वरा विंशतिरेकश्च स्पर्शानां पंचविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः। अनुस्वारो विसर्गश्च ᳵ कᳶ पौ चापि पराश्रयौ॥ दुःस्पृ
ष्टश्चेति विज्ञेयो लृकारः प्लुत एव चेति॥ अत्र ह्रियमानां पृथग्गणनात्स्पष्टमेव वर्णांतरत्वं॥ गणना त्वित्थं॥ अइउऋ इति चतुर्णां ह्रस्वदीर्घप्लुतभेदात्
त्रैविध्ये द्वादश लृकार एकः एचां दीर्घप्लुतभेदादष्टौ॥ इत्थं स्वरा एकविंशतिः स्पर्शाः पंचविंशतिः यरलवशषसहेत्यष्टौ॥ यमाश्चत्वारः प्रथम द्वितीय
महितीययमादिभेदेन विभजनात्॥ अत एव कुं खुं गुं घुं इति यमचतुष्टयं न्यासादावुदाहृतं। कचटतपाः कुं खु छ ठ थ फाः खुरित्यादि परिभाषा मा राम
श्रित्य तत्तदुत्तरस्याशरीरस्यापि कथंचित्स्वदर्शनतात्पर्यकं चेदमिति ध्येयं॥ अनुस्वारविसर्गᳵ कᳶ पाश्चत्वारः दुस्पृष्टश्च बह्वृचानां प्रसिद्धः ई ६१

लेवोल्हेति॥ इत्थंत्रिषष्टिः। ऌकारस्य प्लुतसंभवात्तेन सह चतुःषष्टिः तदेतदुक्तं॥ संभवत इति॥ हयवरट्सूत्रे क्षीरोदकारोप्याह॥ वर्गोत्थेनंत्यास
रेतयोर्मध्यवर्त्तीनासिकास्थानो यम इति॥ यत्तु कश्चिदाह॥ यमा आदेशाः नचतेषामानुनासिक्यपक्षे नद्धन्स्तद्धं तीत्यादौ यरोनुनासिक इ
त्यनुनासिकादेशापत्त्यानेवदोषो नैवप्रयोजनमिति भाष्यं विरुध्येतेति वाच्यं॥ व्यवस्थितविभाषाश्रयणादिति॥ तत्तुच्छं॥ प्रागुक्तप्रातिशाख्यना
रदीयशिक्षादिसकलग्रंथविरोधेन आदेशपक्षस्य गर्भस्रावेणैवगतत्वात्॥ व्यवस्थितविभाषाकल्पनस्य निर्मूलत्वाच्च॥ एतेनसतदीयपरिरखेन
प्रामाण्यभ्रमेण अनुपसर्गाद्ज्ञ इत्यादौ च वर्गाभावे दृढीकृत्य श्रुत्वाभावं साधयंत स्तदनुगामिनोपि परास्ताः॥ नाप्येतेन पत इत्यत्र जकार ह्र
यस्यस्फुटमेवाभिधानात्॥ तस्यैतस्य त्रयस्यास्य्न्नामज्ञां पर्वणाम्भितीत्यारण्यकप्रयोग इव सजातीयसमभिव्याहारान्तस्पष्टो भेद इति तु प्रसिद्धं
शास्त्रे॥ अतएव न व्यंजनपरस्यैकस्यानेकस्य वा विशेषोस्तीति भाष्यं॥ व्यंजनान्तरस्य व्यंजनं परं यस्येत्येवं भूतस्य चतुर्लक्षो भेदाभेदविभाग
इत्येवंपरतया तत्रतत्रकैयटेन व्याख्यातं॥ अतएव च बहुषु पुस्तकेषु तज्ज्ञापपत्याचार्य इति भाष्यग्रंथः॥ अनुपसर्गादितिसूत्रेपि केषांचित्स्थु
त्वपाठः संमतएव॥ पाठांतरंतु अल्पाच्तरं आलुच्नदसहने इतिवत्सौत्रत्वात्संहिज्ञ्याया वा समाधेयमिति दिक्॥ नदेतत्सकलमभिधाय प्रकि
याप्रकाशेगुरुचरणैरुक्तं॥ तस्थानमित्यादौ तु श्रुत्वं भवत्येव॥ यमश्च मुखनासिक्यः केवलनासिकास्थानो वेति मतद्वयं॥ नासिक्यानासिका
स्थानाः मुखनासिक्या वेति तैत्तिरीयप्रातिशाख्यात्॥ अनुनासिकविषये तु दर्शनत्रयं॥ कृत्स्नो वर्णो मुखेन नासिकया वोच्चार्यत इत्येकं॥ पूर्वो
भागो मुखेन॥ परो नासिकयेति द्वितीयं तद्वैपरीत्यात्तृतीयं द्वितीयतृतीययोर्भागमात्रस्य नासिक्यत्वेपि तदुपरागाङ्गागांतरमपि तद्ददिवभासते
। तथा च नासिकान्वयस्य भागमात्रविषयतया नासिकावचनग्रहणेन मुखनासिक्यो वर्णो न गृह्यत॥ किंतु मतविशेषे केवलनासिकास्थान

सा०कौ० तथापमादयस्त्वगृह्येरन्॥ ततश्चविधिप्रदेशे आङोनुनासिकइत्यादौयमानुस्वारा एववि धीयेरन्॥ विन्दोरनुनासिकस्यादित्यादौत्वनुवादेअप्रतिप
६२ त्तिरेवस्यादित्युदाहृतभाष्याशयः॥ तस्माद्दर्शनद्वयेमुखपदोपादानं सार्थकमिति स्थितं॥ प्रथमदर्शनेतुप्रासादवासिन्यायाश्रयणेनोभयप्रवचनानानुप
पिसिद्धासंज्ञा॥ आन्तरतम्याच्चविधिप्रदेशेषुयमानुस्वाराणामप्रवृत्तिः तथाच मुखशब्दोपादानंनकर्त्तव्यमिति भाष्येस्थितम्॥ मुखवचनइत्येवोक्ते
तुकचटतपादीनामपिस्यात् ततश्चशक्त इत्यत्र कलोपःस्यात्॥ पक्वइत्यत्रवकारलोपःस्यात्॥ तप्तमित्यत्र पलोपः स्यात्॥ ओदनपगित्यादावनुनासि
कस्यक्विझलोरितिदीर्घःस्यात्॥ अनुपश्चान्नासिकाव्याप्रियते यस्मिन्नासिकायाः पश्चान्मुखंव्याप्रियते यस्मिन्निति वाः त्वर्थसंज्ञेयं तेननासिका
व्यापारस्य भागविषयकत्व सूचनात्प्रासादवासिन्यायस्याविषयो यमिति ध्वनितं॥ एतच्चसूत्रंप्रत्याख्यातुंशक्यम्॥ प्रदेशवाक्ये ष्वे वप्राग्
क्तस्यनासिकामनुगतइत्यस्य वायोगस्याश्रयणेनसकलेष्टसिद्धिरितिदिक्॥ तुल्यास्यप्रयत्नंसवर्णम्॥ ताल्वादिस्थानमाभ्यंतरप्रयत्नश्चेत्यु
भयं यस्यवर्णस्य येनवर्णेनसहसमानंसतस्यसवर्णोबोध्यः संज्ञाप्रदेशाः अकःसवर्णेदीर्घइत्यादयः। यद्यपितुलयासंमितंतुल्यमित्यवयवार्थः
नौवयोर्धर्मविष मूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु इतिसूत्रेण तुलाशब्दात्संमितेयद्विधानात्तं॥ नथा
प्यपंसदृशमात्रेरूढःशब्दः। अस्यंतिउच्चारयंति अनेनवर्णानित्यास्यंबाहुलकात्करणेण्यत्॥ यद्वा॥ आस्यदते अन्नंप्राप्यद्रवीभवती त्यास्यम्।
अन्ये ष्वपीतिडप्रत्ययः अथवा अन्नेनद्रवी क्रियतइत्यास्यं अंतर्भाविनण्यर्थात्कर्मणि डः परितः खाता परिखेतिवत्॥ तत्र भवमास्य मजा
ल्वादिस्थानं॥ शरीरावयवाद्यत्॥ यस्येतिलोपेहलोयमामिति यलोपः नचाल्लोपस्यस्थानिवद्भावःशंक्यः यलोपकर्त्तव्येतन्निषेधात्॥ राम
प्रकृष्टे यत्नःप्रयत्नः प्रकर्षश्चाभ्यंतरत्वं॥ प्रारंभेयत्नोवाप्रयत्नः आभ्यन्तरप्रयत्नाहिवर्णप्रारंभकालएव ६२

न्याप्रियंते॥ तथा च तुल्यौ स्थानप्रयत्नौ यस्येति द्वंद्वगर्भो बहुव्रीहिः पक्ष॥ तुल्यः आस्ये प्रयत्नो येषामिति त्रिपदो बहुव्रीहिः आस्ये इति विशेष
णाद्बाह्यप्रयत्नव्युदासः आस्ये इत्येकत्वं विवक्षितं॥ तद्धितांतास्यशब्दोपादानसामर्थ्यात्॥ तेन भिन्नस्थानानामर्थाद्व्युदासः पक्ष॥ तुल्यः
आस्ये तुल्यास्यः मयूरव्यंसकादित्वात्साधुः तुल्यास्यः प्रयत्नो यस्येति विग्रहः पक्ष॥ आस्ये प्रयत्नः आस्यप्रयत्नः स तुल्यो यस्येति [illegible] एक
त्वविवक्षादिकं प्राग्वत्॥ तदेवं समासचतुष्टयमपि भाष्ये स्थितं॥ द्वंद्वगर्भो बहुव्रीहिः त्रिपदो वा॥ पूर्वभागे तत्पुरुषगर्भः उत्तरभागे [illegible]ति॥ तुल्य
शब्दस्य संबंधिशब्दत्वाच्च येन सह तुल्यस्थानप्रयत्नं तेन सह सवर्णमिति लभ्यते॥ नहि माता पूज्येत्युक्ते स्वसुतमाताप्यापि पूज्यते किंतु पू[illegible]
कस्यैव मातेति दिक्॥ तुल्यस्थानमिति किम्॥ तुल्यप्रयत्नानामपि कचटतपानां मा भूत्॥ तेन तर्पेस्य त्रप्स रो झरीति पकारलोपो न भवति॥ य
त्नग्रहणं किं॥ चकारशकारयोर्मा भूत्॥ सति हि सावर्ण्ये वा कृश्च्योततीत्यत्र शकारलोपः स्यात्॥ आभ्यंतरत्वविशेषणमप्येतदर्थमेव॥ अ
स्ति हि श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्यं चशयोरपि॥ ननु अल्पप्राणत्वमहाप्राणत्वकृतो भेदोऽस्तीति चेत्॥ किं ततः नहि सर्वप्रयत्न
साम्यं विवक्षितुं शक्यं॥ अङ्कितङ्साद्यसिद्धिप्रसंगात्॥ कङयोरपि बाह्यप्रयत्नभेदात्॥ सर्वप्रयत्नसाम्यं हि स्वस्य स्वेनैव वा पातितं न तु परे
ण॥ तथा च सवर्णसंज्ञाप्रणयनमपि व्यर्थं स्यात्॥ अणुदित्तुल्यास्यप्रयत्नस्येत्युक्तौ सर्वे सामंजस्यात्। झरो झरीत्युक्ते हलो यमां यमीत्य
त्रैव यथासंख्यप्रवृत्त्या माहात्म्यमित्यादौ मकारस्यैव शिण्ढीत्यादौ डकारस्यापि लोपो न स्यादिति हि सिद्धांते सवर्णग्रहणं कृतं॥ सर्वाव्याप्ति
दोषो यावत्स्यप्रयत्नसाम्यं विवक्षायां तदवस्थ एव स्यात्॥ अथ यावद्बाह्यसाम्यं यावदाभ्यंतरसाम्यं वा विवक्ष्येत एवमपि मे धुलिट् स्थानमित्य
त्र झरो झरीति स[illegible]श्वासाघोषविवारमहाप्राणत्वरूपबाह्यप्रयत्नेन तुल्येनापि साम्यात्॥ अथ स्थानप्रयत्न

विवेकः॥ अकुहविसर्जनीयाः कंठ्याः॥ इचुयशास्तालव्याः। ऋटुरषा मूर्द्धन्याः। लृतुलसा दंत्याः॥ उपूपध्मानीया ओष्ठ्याः। एऐ कंठतालव्यौ॥ ओ
औ कंठोष्ठ्यौ ॥ वकारो दंतोष्ठ्यः॥ जिह्वामूलीयो जिह्वामूलस्थानः॥ अनुस्वारो नासिक्यः॥ यत्नो द्विधा॥ आभ्यंतरो बाह्यश्च॥ तत्राभ्यंतरश्चतु
र्द्धा॥ स्पृष्टता ईषत्स्पृष्टता विवृतता संवृतता चेति॥ तत्र स्पृष्टता स्पर्शानां॥ ईषत्स्पृष्टता अंतःस्थानां॥ ह्रस्वस्यावर्णस्य प्रयोगे संवृतता॥ शास्त्री
ये कार्ये तु विवृतता॥ प्रतिज्ञाफलम् इति अइउण्सूत्रे प्रतिपादितं॥ प्लुतः संवृता इति तु प्रातिशाख्योक्तत्वान्न सर्वसाधारणं॥ ऊष्मणां स्वराणां
च विवृतता॥ एषां चतुर्णामप्याभ्यंतरत्वं वर्णोत्पत्तिप्राग्भावित्वात्॥ तथाहि॥ नाभिप्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्द्ध्वमाक्रामन्नुरः
प्रभृतीनि स्थानान्याहंति ततो वर्णस्य तदभिव्यंजकध्वनेर्वा उत्पत्तिः तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं
ताल्वादि सम्यक् स्पृशंति तदा स्पृष्टता॥ ईषद्यदा स्पृशंति तदा ईषत्स्पृष्टता॥ समीपावस्थानमात्रे संवृतता॥ दूरत्वे विवृतता॥ अतएव इचु
यशानां तालव्यत्वाविशेषेपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्त्तव्ये सम्यक्स्पर्शः यकारे ईषत्स्पर्शः शकारेकारयोस्तु दू
रे एव स्थितिरित्याद्यनुभवं शिक्षाकारोक्तिं चानुसृत्य विवेचनीयं। भाष्यकारास्तु नाज्झलाविति सूत्रस्य प्रत्याख्यानावसरे ऊष्मणां स्वराणां चेषद्विवृ
तत्वं विवृतत्वं चेति वैलक्षण्यं वक्ष्यंति॥ तदप्यनुभवानुसार्यैवेति सहृदयैराकलनीयं॥ बाह्याः प्रयत्नाः पुनरेकादश॥ विवारः संवारः श्वासो
नादो घोषो अघोषो अल्पप्राणो महाप्राण उदात्तोनुदात्तः स्वरितश्चेति॥ एते च वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावु
त्पद्यंते॥ अतएव बाह्या इत्युच्यंते॥ गलबिलस्य संकोचात् संवारः। तस्यैव विकासाद्विवारः। एतौ च संवृतविवृतत्वरूपाभ्यां आभ्यंतराभ्यां
भिन्नावेव॥ तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम्॥ तत्र वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया

यमौच प्रथमद्वितीयौ। विवृतकंठाः श्वासानुप्रदाना अघोषा वर्गयमानां प्रथमे अल्पप्राणा इतरे सर्वे महाप्राणाः वर्गाणां तृतीयचतुर्थाः अंतस्था
हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकंठा नादानुप्रदाना घोषवंतो वर्गाणां तृतीया अंतस्थाश्चाल्पप्राणा यथा तृतीयास्तथा पंचमा आ
नुनासिक्यमेषां परो गुण इति शिक्षासु स्थितं॥ संग्रहश्च॥ खयां यमाः खयः ꣵक ꣶप विसर्गः शर एव च॥ एते श्वासानुप्रदाना अघोषाश्च विवृण्व
ते। कंठमन्ये तु घोषाः स्युः संवृता नादभागिनः॥ अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः॥ यद्यप्येते बाह्याः सवर्णसंज्ञायामनुप[illegible]कास्त
थाप्यन्तरतमत्वपरीक्षायामुपयोक्ष्यन्त इतीह आभ्यंतरत्वविशेषणव्यावर्त्यतया व्युत्पादिताः॥ नन्विह सूत्रे प्रयत्नग्रहणं व्यर्थम्॥ तद्धि
तांतास्य शब्दबलादेव ताल्वादिस्थानस्य प्रयत्नस्य च लाभादिति चेन्न॥ प्रत्येकव्यापारनिरासार्थमुभयोरुपादानात्॥ तेन स्थानप्रयत्नोभ
यसाम्ये सत्येव संज्ञा न त्वन्यतरसाम्येपि॥ एवं स्थिते यत् फलितं तत्स्पष्टत्वार्थमुपन्यस्यते॥ अष्टादश अवर्णाः परस्परं सवर्णाः एवमिव
र्णोवर्णौ॥ ऋकारा अष्टादश॥ ऌवर्णास्तु द्वादशेति त्रिंशन्मिथः सवर्णाः ऌवर्णस्य दीर्घा न संतीत्युक्तत्वात्॥ ऋऌवर्णयोर्मिथः सावर्ण्य
स्योपसंख्यानाच्च॥ एचस्तु द्वादश द्वादश मिथः सवर्णाः ननु एकारैकारौ ओकारौकारौ वा मिथः सवर्णौ॥ यथा चैतत्तथा अइउण्सूत्रे एव प्रतिपा
दितं॥ अकारेणाप्येचां न सावर्ण्यं॥ प्रयत्नभेदादिति इहैव सूत्रे भाष्ये स्पष्टं॥ अत एव ऐदैतोरपि शकारेण न सावर्ण्यमिति तेषां नाज्झलाविति सू
त्रे उदाहरणत्वं नास्ति॥ न चात्र स्थानभेदेन निर्वाहः एचामकारेण सह कंठस्थानसाम्यात्॥ ऐदैतोः शकारेण सह तालुस्थानसाम्यात्॥ नहि
यावत्स्थानं तत्साम्यं विवक्षितं॥ ञमङणनानां स्ववर्ग्यैः सह असावर्ण्यापत्तेः यवलानां सानुनासिकनिरनुनासिकानामसावर्ण्यापत्तेश्च।
नहि निरनुनासिकानामपि नासिका स्थानम्॥ येन सर्वसाम्यं स्यात्॥ ननु तद्धितांतास्य शब्दबलात्ताल्वादिसाम्यमात्रं लभ्यते॥ ओष्ठात्प्रभृति

शाकाकलकाद्दि आस्यं॥ काकलकंचग्रीवायाउन्नतप्रदेशः यंकंठमणिरित्याचक्षते॥ तत्कथंनासिकास्थानभेदेनासवर्णत्वमापाद्यतइतिचेत्
॥ नासिकाहिनवाह्यावर्णोत्पत्तौनिमित्तं॥ तत्र जिह्वाग्रादिव्यापारविरहात्॥ किंतु अंतरास्येवितनंचर्मास्तिपणवस्येवचर्मवत्॥ तत्संबद्धोरे
खाविशेषोनासिका॥ सैववर्णोत्पत्तौनिमित्तमितिसिद्धांतात्॥ तस्याश्च ओष्ठादिभ्योविशेषात् वर्ग्योवर्ग्येणासवर्णः तुल्यास्यप्रयत्नत्वात्
॥ रेफस्यरेफएवसवर्णः एवमूष्मणामपि ऊष्माणएवसवर्णानत्वन्ये॥ तुल्यास्यप्रयत्नत्वाभावात् शषसहानांयथाक्रमंइकारऋकारलृका
राकाराः सूत्रकारमतेयद्यपितुल्यास्यप्रयत्नास्तथापिनसवर्णानाज्झलावितिनिषेधात्॥ भाष्यकारमतेतुप्रयत्नभेदएवेतिवक्ष्यते॥ इहस्था
नभेदादप्राप्तांसवर्णसंज्ञांविधातुंवार्त्तिकमारभ्यते॥ ऋकारलृकारयोः सवर्णविधिरिति॥ होतलृकारः होतृकारः। उभयांतरतमऌकारं त
रतमश्चदीर्घोनसंभवतीति परिशेषादृकारःस्यादेतत्॥ अकःसवर्णेदीर्घइत्यत्रऋतिऋवावचनंलृतिलृवावचनमितिवक्ष्यति॥ तस्यायम
र्थः। अकःसवर्णेऋतिपरेपूर्वपरयोःस्थानेवाऋ अयमादेशोभवति॥ द्विमात्रोयं॥ मध्येद्वौरेफौ॥ तयोरेकामात्रा॥ अभितोऽभक्तेरपरा॥ ईष
त्स्पृष्टश्चार्थं॥ तत्रप्रयत्नभेदादृकारेणाग्रहणादनचूत्वाद्दीर्घसंज्ञायाअभावादप्राप्तोयंविधीयते॥ लृतिलृवेति॥ अयमपिद्विमात्रः ईषत्स्पृष्ट
श्च॥ मध्येद्वौलकारौतयोरेकामात्राअभितोऽभक्तेरपरा॥ पूर्ववदप्राप्तोविधीयते॥ तत्रवावचनमितिवाशब्दोदीर्घसमुच्चयार्थोभविष्यति॥ वा
स्याद्विकल्पोपमयोरेवार्थेपिसमुच्चयेइत्यभिधानात्॥ तेनाप्राप्त एव दीर्घोभविष्यति॥ तत्किंसवर्णसंज्ञया॥ ननुलृतिलृवेत्यत्रसवर्णइ
त्यनुवर्त्तते नवाआद्येहोतलृकारइत्यत्रऋलृवर्णयोःसवर्णसंज्ञाविधानंविनानेष्टसिद्धिः अन्त्येऽपिऋकारोमधूकारइत्यादावतिप्रसंगः इ
तिचेत्॥ न॥ प्रथमवार्त्तिकेऋतीत्यपनीयऋनइतिपंचम्यन्तपाठेसर्वसामंजस्यात्॥ सवर्णइतिचपूर्ववार्त्तिकेनुवर्त्तते॥ तेनधाऋशइत्या

दौनातिप्रसंगः द्वितीयवार्त्तिके तु सवर्ण इति निवृत्तं॥ ऋत इत्यनुवर्त्तते॥ तस्माद् कः सवर्ण इत्यत्र अवश्यकर्त्तव्येन वचनद्वयेनैव सकलनिर्वाहादृ
कारलृकारयोः सवर्णविधिरिती हत्यं वार्त्तिकं व्यर्थमिति॥ मैवं॥ इहत्यमेकं वार्त्तिकमाश्रित्य पाष्ठवचनद्वयप्रत्याख्यानस्यैव न्याय्यत्वात्॥ तथाहि
॥ तद्वचनद्वयं कुर्वतापि रेफद्वयलृकार द्वयगर्भयोस्तद्विधेययोरच्त्वं तावदेष्टव्यं॥ तन्निर्वाहार्थं वर्णसमाम्नाये तौ पठनीयौ॥ अन्यथा हि विधा
नमात्रमनयोः स्यान्नत्वच्कार्यं प्लुतः तद्विधाने हि अचश्चेति परिभाषया अच इत्युपतिष्ठते॥ ननु ईषत्स्पृष्टस्याऽनच्त्वान्माभूत्प्लुतः [illegible] तस्य
तु ऋकारस्याच्त्वेन प्लुतः सिद्ध एवेति चेत्। सत्यं॥ विवृतः प्लुतः सिद्धः ईषत्स्पृष्टौ तु प्लुतौ रेफद्वयलकारद्वयगर्भौ न सिध्यतः अ[illegible]व संज्ञा
मात्रेणापि न निस्तारः ग्रहणकशास्त्रप्रवृत्तेस्तावन्मात्रेणानिर्वाहात् किंतु अण्सु पाठ एव कर्त्तव्य इत्युक्तं॥ सति त्वण्सु पाठे ताभ्यां त्रिमात्र
योरपि ग्रहणात्प्लुतसंज्ञायां सत्यां पक्षे ईषत्स्पृष्टौ प्लुतौ भवतः एवं स्थिते पाष्ठं वचनद्वयं मास्तु। तद्विधेययोरपि दीर्घतया अकः सवर्ण इत्यने
नैव सिद्धेः। ननु स्थानेन्तरतमपरिभाषया विवृतस्य स्थानिनो विवृतावेव दीर्घौ स्यातां न त्वीषत्स्पृष्टाविति चेत्॥ न॥ रेफद्वययुक्तस्य स्थानिनो रे
फद्वययुक्त एवादेशः सुसदृश इत्यपि हि संभवति तथा च किं रेफद्वययुक्तत्वमादर्त्तव्यं किं वा विवृतत्वमित्यत्र विनिगमकाभावेन पर्यायेणोभ
यप्रवृत्तौ सिषाधयिषितस्य रूपद्वयस्य निर्वाहात्॥ लृकारेपि कदाचिदृकारान्तरतमो विवृतदीर्घः कदाचिद्लृकारान्तरतमो लकारद्वयगर्भ ईषत्स्पृ
ष्ट इति सकलेष्टसिद्धेः तदेवं पाष्ठं वचनद्वयं न कर्त्तव्यमिति स्थितम्॥ ननु तदेवास्तु संज्ञाविधानं तु मास्त्विति चेत्॥ न॥ वचनद्वयारंभे गौरव
स्य स्पष्टत्वात्॥ किंच॥ संज्ञाभावे ऋत्यकः उपसर्गादृति उरण्रपर इत्यादिषु ऋकारेण लृकारग्रहणं न स्यात्॥ न चैवं सिद्धांतेपि जवल्का
र इत्यादौ रपरत्वप्रसंगः रप्रत्याहारपरत्वस्य वक्ष्यमाणतया लपरत्वसिद्धेः ऋदितां लृदितां च धातूनामनुबंधकार्येषु संकरस्तु न भवति धातूपदेशे पृ

प्रा·कौ थगनुबंधकरणसामर्थ्यात्॥ विधिवाक्येष्वपिपृथगनुवादसामर्थ्यात्॥ अन्यथाहिसर्वान्ऋदितएवलृदितएववापठित्वाविधावपितेनैवरूपेणा
६५ नुवदेत्॥ संभवत्यैकरूप्येवैरूप्याश्रयणायोगात्॥ नाज्झलौ॥ अज्झलौमिथःसवर्णौनस्तः अकारहकारयोरिकारशकारयोऋकारषकारयो
र्लृकारसकारयोश्चेतिस्थलचतुष्टयेपूर्वसूत्रेणप्राप्तंसावर्ण्यमनेननिषिध्यते॥ तेन आनडुहंचर्मवैपाशोमत्स्य इत्यत्रयस्येतिचेतिहकारशाका
रयोर्लोपोन॥ अन्यथाहियस्येत्यनेनदीर्घाणामिवहकारशकारयोरपिग्रहणंस्यात्॥ तथादण्डहस्तः दधिशीतंकर्तृषढं इत्यादौसवर्णदीर्घःस्यात्
॥ दधिसान्द्रमित्यादौयणादेशश्चस्यात्॥ इहअज्झलौकस्यापिनसवर्णौस्तइतिवाक्यार्थोनग्राह्यः संज्ञारंभवैयर्थ्यापत्तेः विहितप्रतिषिद्धत्वेनवि
कल्पेतुलाघवात् तुल्यास्यप्रयत्नंवेत्येवसूत्रयेत्॥ नाप्यचामज्भिर्हलांहल्भिःसावर्ण्यंनिषिध्यते॥ नाज्झलावित्यत्रैवसूत्रेसवर्णदीर्घस्य
झयोहइतिपूर्वसवर्णादेशस्यचनिर्देशात्॥ ननुझलेवात्रनिर्दिष्टोनतुहल्॥ तावतैवेष्टसिद्धेरितिचेन्नहिदीर्घनिर्देशएवज्ञापकोस्तु॥ तेनहि
अचामज्भिःसावर्ण्यमनिषिद्धमितिज्ञापितेपरिशेषादज्झलोर्मिथोनिषेधएवपर्यवस्यति॥ झरोझरिसवर्णइतिज्ञापकाच्च॥ यत्तुनाण्शलाः
वित्येवकुतोनसूत्रितमिति॥ तन्न॥ कर्तृषढं दधिसान्द्रमित्याद्यसिद्ध्यापत्तेः ऋऌकारयोरनण्त्वात्॥ ग्रहणकसूत्रातिरिक्तेपूर्वेणैवाणित्यु
क्तत्वात्॥ अस्तुवापरेणाण् तथाप्यजपेक्षयाव्यक्तिगौरवमेवस्यादितिअच्ग्रहणमपनीयाण्ग्रहणंक्रियतामितिशंकायागर्भस्त्रापिनैवगत
त्वात्॥ शलंशेतुव्यक्तिलाघवेसत्यपिवर्णोच्चारणेविशेषोनास्तीत्येवोत्तरं॥ वस्तुतस्तुनाकृशलावित्येवसूत्रयितुमुचितं॥ स्यादेतत्॥ शरां
शर्भिरपिसावर्ण्यंनिषिद्ध्येत॥ तेहिइकारादिभिर्गृहीतत्वादच्संज्ञकाः हल्सूपदेशाद्धल्श्च। नचास्मादेवनिषेधादिकारादयोनसवर्णाइ राम
तिवाच्यं॥ एतद्वाक्यार्थबोधात्प्राक्पदार्थोपस्थितेरावश्यकतया तस्यामवस्थायामिकारादिभिःशरामुपस्थापनस्यदुर्वारत्वात्॥ ततश्चप ६५

रशशताः रामष्यष्ठः यशस्सारमित्यादौ झरोझरीत्यस्य प्रवृत्तिर्नस्यात्॥ ततश्चैकैकत्रशात्र पंश्रूयेत॥ दृष्यतेतुहूयं॥ तथाचपूर्वपक्षवार्त्तिकं
॥ अज्वल्लोः प्रतिषेधेशकारप्रतिषेधोज्झल्त्वादिति॥ अत्रशकारग्रहणंशरामुपलक्षणं किंच॥ अवर्णस्याष्टादशधाभिन्नस्यपरस्परंसाव
र्ण्यंनस्यात्॥ ततश्चदंडाग्रमित्यादौदीर्घोनस्यात्॥ तथाहि॥ हकारेणग्रहणादकारोहल् अस्तुपाठाच्चाच्॥ नचास्मिन्नेवसूत्रेएतस्य प्रवृत्तिः येनग्र
हणकशास्त्रमसावर्ण्यान्नप्रवर्त्तेतेति॥ अत्रसिद्धान्तंवार्त्तिककारएवाह॥ सिद्धमनच्त्वाद्वाक्यापरिसमाप्तेर्वेति॥ तत्रसूत्रप्रत्याख्यानोत्तरं
प्रथमवार्त्तिकेभिप्रेतं॥ तथाहि॥ शिक्षावाक्येविरतमूष्मणांइति योगोविभज्यते॥ तत्रचईषदित्यनुवर्त्तते॥ स्वराणांचेतिविवृतमित्यनुवर्त्त
ते॥ ईषदितिनिवृत्तं॥ तथाचप्रयत्नभेदादूष्मस्वरयोः सावर्ण्यप्राप्तौकिंसूत्रेण॥ तथाचशरामनच्त्वादेवसिद्धमित्यर्थः॥ उपलक्षणंचेदं अकार
स्याहल्त्वादित्यपिबोध्यम्॥ सूत्रारंभमभ्युपेत्येदं॥ वस्तुतस्तूक्तरीत्यासूत्रमेवनारंभणीयमित्यर्थः ईषदित्यस्याननुवृत्तिंसमानप्रयत्नतांच
स्वीकृत्यसूत्रारंभपक्षेप्याह॥ वाक्यापरिसमाप्तेर्वेति॥ अयमाशयः इहपूर्वंवर्णानामुपदेशः तनइत्संज्ञा॥ ततआदिरन्त्येनसहेतेतिप्रत्याहा
रसिद्धिः ततोनाज्झलावित्येतद्वाक्यार्थबोधः ततोपवादविषयेपरिहारेणसवर्णसंज्ञानिश्चयेसतिग्रहणकशास्त्रप्रवृत्तिः नत्वेतत्सूत्रनिष्प
त्तिसमये॥ अन्यथाएतत्सूत्रेणैवइकारशकारादीनांसावर्ण्यनिषेधादिकारेणशकाराग्रहणेपि अज्झल्त्वादितिहेतोरसिद्ध्यापत्तेरीयः पूर्व
पक्षोअसंभवदुक्तिकएवस्यात्॥ अथपदार्थज्ञानस्यवाक्यार्थबोधहेतुतयाएतद्वाक्यस्यपदार्थबोधकालेएतद्वाक्यार्थग्रहाभावादिहसूत्रे
इकारेणशकारग्रहःस्यादेवइतःपूर्वंसावर्ण्यनिषेधाग्रहादितिब्रूषेतर्हिइतःपूर्वंग्रहणकशास्त्रमेवननिष्पन्नमितिकथंनपर्यालोचयसिः नन्वेवंतु
ल्यास्यप्रयत्नंनाज्झलावित्यादौअकःसवर्णेदीर्घइतिदीर्घोपिनप्रवर्त्तेतेतिचेन्न॥ सवर्णसंज्ञाद्युत्तरकालेप्रवर्त्तमानस्यदीर्घशास्त्रस्यदंडाढ

श॰कौ॰ कादाविवेहाप्यप्रतिबद्धप्रवृत्तिकत्वात् ॥ उद्देश्यतानवच्छेदकरूपाक्रान्तत्वाविशेषात् ॥ नच सवर्णदीर्घविधानात्प्रागेतत्सूत्रार्थबोधानुपपत्तिरि
६६ तिवाच्यम् ॥ पदार्थोपस्थितिप्रभृतिसामग्रीसंपत्तौ सत्यां साधुत्वबोधकवाक्यार्थज्ञानविलंबेन शाब्दबोधविलंबादर्शनात् ॥ अन्यथा व्याक
रणशास्त्रपरिशीलनविकलानां क्वापि शाब्दबोधो न स्यात् ॥ तथा वैयाकरणानामपि व्याकरणसूत्रघटकशब्देषु व्याकरणादेव साधुत्वबोधे त
दुत्तरकाले च वाक्यार्थावगतौ आत्माश्रयान्योन्याश्रयचक्रकाणां दुर्वारत्वादितिदिक् ॥ साधुत्वज्ञानं तु न शाब्दबोधे हेतुः अस्तु वा अभियुक्तवाक्य
त्वेन साधुत्वानुमितिः ततः शाब्दबोधे जाते लक्ष्यान्तरेष्विव लक्षणवाक्यान्तर्गतेष्वपि लक्षणप्रवृत्तिरितिदिक् ॥ वस्तुतस्तु शरां परस्परं सावर्ण्य
निषेधे सत्यपि न क्षतिः परः शतादिषु हि रूपद्वयं सिद्धान्तेऽपीष्यते ॥ शतात्पराणीति विग्रहे कर्तृकरणे कृता बहुलमिति बहुलवचनाद्वा सुप्सुपेति
वा समासे कृते पारस्करादित्वात्सुटि सकारस्य श्चुत्वं ॥ ततोऽनचि चेति द्विर्वचनं ननु शरोऽचीति अनचीति वा द्वित्वनिषेधोऽस्त्विति चेन्न ॥ तत्र ना
ज्झलाविति निषेधादिकारेण शकाराग्रहणात् ततो झरो झरीति लोपविकल्पाद्द्विशकारं त्रिशकारं वा रूपमिति ॥ सावर्ण्यनिषेधेऽपि सिद्धान्तेऽ
वेदं रूपद्वयं ॥ अनचि चेति द्वित्वस्यापि वैकल्पिकत्वात् ॥ तत्र द्वित्वस्य वैकल्पिकत्वं यरोऽनुनासिकेऽनुनासिको वेत्यतो वेत्यनुवर्त्तनात्सर्वत्र
शाकल्यस्येति पाक्षिकनिषेधाद्वा लोपस्य वैकल्पिकत्वं तु झयो होऽन्यतरस्यामित्यतोऽन्यतरस्यांग्रहणानुवृत्तेरित्यवधेयं ॥ तस्मात्सावर्ण्ये स
त्यसति वा परश्शता इति द्विशकारकत्रिशकारकरूपयोरविशेषः परश्शताद्यास्ते येषां परास्संख्या शतादिकात् इत्यमरः एवं रामष्षष्ठो यश्श
स्सारमित्यादावपि ॥ अत एव भाष्ये अपर आहेत्युपक्रम्य वार्त्तिकद्वयमपि एकहेतुतया व्याख्याय अस्तु वा ग्रहणमिकारादिभिः शकारा राम
दीनामिति वाक्यशेषाध्याहारेण प्रतिज्ञाविकल्पार्थो वाशब्द इति व्याख्यातं ॥ तत्र अपर आहेत्यपरितोषोद्भावनं ॥ तद्बीजं तु उक्तरीत्या शर्षु साव ६६

र्ण्यनिषेधानिषेधयोः फलाविशेषेऽपि प्रागुक्तरीत्या दण्डाग्रमित्यादि न सिद्ध्येत्॥ तदर्थं च सूत्रप्रत्याख्यानस्य वाक्यापरिसमाप्तिन्यायस्य वा आश्रयणे आवश्यके शरांशभिः सावर्ण्याभावाभ्युपगमो निर्मूल एवेति॥ स्यादेतत्॥ अगृहीतसवर्णानामेव नाज्झलाविति निषेध इति तावत् स्थितं॥ तथा च ईकारादीनां शकारादिभिः सावर्ण्यानिषेधात् कुमारी शेत इत्यादौ सवर्णदीर्घः स्यादित्याशङ्क्य अचीत्यनुवृत्त्या समाहितं॥ एवं स्थिते मालास्फ इत्यादौ षत्वं स्यात्॥ हकारेण आकारग्रहणे सति गौरीष्विदित्यादिवदिणः परत्वानपायात्। किं च॥ विश्वपाभिरित्यत्र हो ढ इति ढत्वं स्यात्॥ वागीशीरित्यत्र झयो होऽन्यतरस्यामिति आकारस्य घकारः स्यात्॥ गासीध्वमित्यत्र इणः षीध्वमिति मूर्धन्यादेशः स्यात्॥ दासीष्टेत्यादौ दादेर्धातोर्घ इति घत्वं स्यात्॥ राम आयातीत्यादौ हशि चेत्युत्वं स्यात्॥ देवा आयान्तीत्यादौ हलि सर्वेषामिति नित्यो यलोपः स्यात्॥ चाखायितेत्यादौ यस्य हल इति यलोपः स्यात्॥ पपेनायितेत्यादौ क्यस्य विभाषेति लोपः स्यात्॥ निचाय्येत्यादौ हलो यमां यमि लोप इति यलोपश्च स्यादिति बहूपप्लवप्रसंगः अत्रोच्यते॥ आकारस्य हकारेण न सवर्णः ततोऽप्याकार इति अइउण्सूत्रोदात्ततशिक्षारीत्या भिन्नप्रयत्नत्वात्॥ सवर्णेन ग्रहणमपरिभाव्यमाकृतिग्रहणादिति वार्त्तिकमते तु हकाराकारयोरेकस्यास्य नाकान्तत्वादेव नातिप्रसंगः यद्वा॥ आकारसहितेन च् आचूस चहलच् आज्झलौ इति सूत्रे आकारप्रश्लेषो व्याख्येयः तेन आकारस्य अचो हल्भिः सह सावर्ण्यं निषिध्यते। आकारप्रश्लेषे लिंगं तु कालसमयवेलासु तुमुनित्यादिनिर्देशाः अत्र पक्षे आश्व आश्वेति हूहू न सवर्णदीर्घेण नाज्झलाविति सूत्रे दीर्घस्यः प्लुतोऽपि निर्दिष्ट इति व्याख्येयं तेन पियासोऽइत्यादौ गुरोरनृत इत्यादौ प्लुतादाकारात्परस्य सनः सस्य षत्वं नेत्यवधेयम्। भाष्यमते तु ऊष्मणामीषद्विवृतताभ्युपगमेन सावर्ण्यप्रसक्तिरेव नास्तीति सूत्रप्रत्याख्यानात् सकलमनाविलम्॥ ॥ इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥४॥

शा·कौ ॥श्रीगणेशाय नमः॥ ईदूदेद्द्विवचनं प्रगृह्यम्॥ ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्॥ हरी एतौ विष्णू इमौ गंगे अमू॥ नपरकरणमसंदेहार्थमि
६७ ति वृत्तिकाराः अन्यथा हि यणादेशे कृते ह्रस्वस्यायं निर्देश इत्यपि संभाव्येत॥ ततश्च अकुर्वे ह्यत्रेत्यादावतिप्रसंगः स्यादिति भावः भाष्ये तु व्यक्तिः
पदार्थो भेदकाश्च गुणा इति पक्षमाश्रित्य गुणांतरयुक्तानां दीर्घाणां संग्रहार्थं तपरकरणमित्युक्तं॥ इदं च ईदिति प्रथमतकारस्यैव फलमि
त्यवधेयं॥ तावतैव ऊकारेपि सिद्धेः तात्पर इति पंचमीसमासपक्षस्यापि स्थितत्वात्॥ एकारस्य तु अणत्वादेवाणुदित्सूत्रेण सवर्णग्राहक
तासिद्धेः ईदूतोः परमनणत्वाद्गुणांतरयुक्तसंग्रहाय युक्तो यत्नः तस्माद्भाष्यमतेपि ऊदेतोस्तपरकरणमसंदेहार्थमेव गुणा नाम भेद
कत्वे तु ईदित्यपि नेत्यभिप्रेत्य ऐकरूप्यं वृत्तिकृद्भिरुक्तम् इह तपर इति सूत्रे पंचमीसमासो मास्त्वित्यभिप्रेत्य ऊदिति तथा अतपर एव ए
कारो निर्दिष्ट इत्यपि सुवचं स्यादेतत्॥ असंदेहायापि क्रियमाणं तपरत्वं प्लुतं व्यावर्तयेदेव॥ यदा योन्मीलितचक्षुः पटं नहि न पश्यतीति
न्यायात्॥ अथायं एकारः ऋदोरविति वदिति चेत्॥ एवमपि एकारो गृण्हातु प्लुतं॥ अणत्वात्॥ न त्वीदूतौ॥ वाक्यापरिसमाप्तिन्यायेना
नणत्वात्॥ जातिपरो निर्देश इति चेत्॥ तर्हि ह्रस्वेप्यतिप्रसक्तिः॥ दीर्घव्यक्तिरपि विशेषणीभूता विवक्षितेति चेत् कथं तर्हि प्लुतसंग्रहः॥ प्र
च प्लुतव्यावृत्तिरिष्टैवेति वाच्यम्॥ अग्नी ३ इतीत्यत्राप्लुतवदुपस्थित इति सूत्रेण प्लुतत्वप्रयुक्ते प्रकृतिभावे निषिद्धेपि प्रगृह्यत्वप्रयुक्तस्य
तस्येष्यमाणत्वात्॥ अप्लुतवदित्यस्य तु देवदत्ते तीत्यादौ चरितार्थत्वाद्वैयर्थ्यं न शंक्यं॥ तथा च षाष्ठे वार्त्तिकं॥ वद्वचनं प्लुतकार्यप्रतिषे
धार्थं प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसंगोन्येन विहितत्वादिति॥ अत्राहुर्भाष्यकाराः॥ यथोद्देशं संज्ञापरिभाषमित्याश्रयणात् प्रगृह्य राम
संज्ञां प्रति प्लुतोसिद्धः तथा च द्विमात्रत्वबुद्धेरप्रतिघातात् सिद्धा संज्ञा कार्यकालपक्षे परं प्रगृह्यसंज्ञाया अप्यणो प्रगृह्यस्येत्येतद्देश त ६७

यातांप्रतिप्लुतस्यासिद्धत्वेनानुनासिकः प्रवर्त्तेतैवेतिस्यादेवदोषः॥ एतेनाग्नी३ इतीत्यादौप्रकृतिभावोपिव्याख्यातः॥ प्लुतप्रगृह्या अची
तिज्ञापकात्स्वरसंधिषुप्लुतस्यासिद्धत्वेपिसंज्ञांप्रत्यसिद्धत्वानपायात्॥ यथोद्देशपक्षएवेहाश्रीयतइत्युक्तत्वात्॥ वस्तुतस्त्वनुनासिक
प्रवृत्तिभयेनैवेहयथोद्देशपक्षाश्रयणं॥ प्रकृतिभावस्तु कार्य्यकालपक्षेपिसूपपादः॥ नचप्रगृह्यः प्रकृत्येत्यनेनैकवाक्यतापन्नोसंज्ञां
प्रतिप्लुतस्यसिद्धतयात्रिमात्रस्यसंज्ञादुरुपपादेतिवाच्यं॥ प्लुतस्यसिद्धतायांबीजाभावात्॥ यत्तूक्तंप्लुतःप्रकृत्येत्येतदेवज्ञापकमिति
॥ तन्न॥ प्लुतशब्देनतत्स्थानिनलक्षणयासर्वसामंजस्यात्॥ नचैवंलक्षणैवदोषइतिवाच्यम्॥ श्रुतार्थापत्तिमूलकवाक्यांतरकल्पना
पेक्षयालक्षणायाएवाभ्यर्हितत्वात्॥ अस्तुवाविशेषापेक्षंज्ञापकं॥ सिद्धःप्लुतः प्लुतत्वप्रयुक्तेप्रकृतिभावइतिनतुप्रगृह्यत्वप्रयुक्तेपि॥ तस्मा
त्कार्य्यकालपक्षमाश्रित्यप्रकृतिभावस्यसमर्थयितुंशक्यत्वेपि अनुनासिकप्रवृत्तिवारणायैवेह यथोद्देशपक्षाश्रयणमितिस्थितम्॥ अत्र
हरदत्तः॥ यद्यपिसंज्ञायामसिद्धःप्लुतस्तथाप्यनुनासिकपर्युदासेसिद्धएवततश्चयस्यानेनसंज्ञाकृताद्विमात्रस्यनसोनुनासिकविधौस्थानी
किंतुत्रिमात्रः॥ नचस्थानिवद्भावात्तस्यापिप्रगृह्यत्वंअल्विधित्वात्॥ किंचअवश्यंसिद्धःप्लुतःस्वरसंधिष्वित्याश्रयणीयम्॥ दंडआढकमि
तिप्लुतस्यदीर्घेणनिवृत्तिर्यथास्यात्॥ अतएवसुश्लोका३ इतिसुश्लोकेतिइत्यत्रगुणोभवन्प्लुतमेवनिवर्त्तयतिनतुस्थानिनम्॥ अन्यथा
त्व्यादेशरूपेप्लुतःश्रूयेततदिहयथोद्देशेपिसंज्ञापरिभाषेकथमिवेष्टसिद्धिः॥ कथंवाग्रंथेषुनपूर्वापरविरोधइतिविपश्चितः प्रष्टव्या इति अ
त्राहुः॥ यद्यपिद्विमात्रस्त्रिमात्रेणापहृतस्तथापिपूर्वत्रासिद्धमितिशास्त्रासिद्धत्वबोधनात्त्रिमात्रेपिद्विमात्रएवायमितिबुद्ध्याप्रगृह्यसं
ज्ञाक्रियते अतएव असुनेत्यत्रमुत्वेकृतेतदुपजीवनेननाभावेचकृतेसुपिचेतिदीर्घोमुशब्देएवदशब्दोयमितिबुद्ध्याप्राप्नोतिनत्वसौरिहा

शा॰ कौ॰ रायतंत्रावृत्त्याद्याश्रयणेननाभावेकर्त्तव्येकृतेचसतिमुभावोनासिद्धइत्यष्टमेव्याख्यातम्॥ कृन्मेजन्तसूत्रेचसन्निपातपरिभाषयासमाहि
६८ तम्॥ नत्विहद्विमात्रेकृतांसंज्ञांस्थानिवद्भावेनत्रिमात्रेआनयामः येनानल्विधावितिनिषेधः शंक्येतनहिरजतभ्रममप्युक्ताप्रवृत्तिःशुक्ति
गोचरयतीतिमुक्तंएतावानेवपरंविशेषः रजतभ्रमोःनाहार्य्यःप्रवर्त्तकः॥ इहतुशास्त्रप्रामाण्यादाहार्यारोपोपितत्तच्छास्त्रप्रवृत्तावप्रव
र्त्तोचनियामकइति॥ तदेतत्कैय्यटेनैवस्फुटीकृतम्॥ यदाहशास्त्रासिद्धत्वाश्रयणाच्चप्लुतिबुद्ध्यावसत्यांप्रगृह्यत्वेविधीयमानेद्विमात्र
त्वबुद्धिःप्रवर्त्तते तथाचवक्ष्यतिअसिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थंचेति। षत्वतुकोरसिद्धइत्येतत्सूत्रस्थवार्त्ति
कमिदं॥ उत्सृज्यतेनिवर्त्यतेआदेशेनेत्युत्सर्गःस्थानीसलक्षणंनिमित्तंयस्यकार्य्यस्यतुगादेस्तस्यप्रवृत्त्यर्थमित्यर्थः॥ तथाचैकरूप्यार्थ
श्लोकेनीत्यादौआदेशःप्लुतः श्रूयेतेतितदपिन॥ उक्तरीत्यातत्राप्यादेशेनप्लुतस्यैवनिवृत्तेः॥ प्लुतोमेयापद्धिपतइतिबुद्धिःपरंतस्यनास्ती
त्यन्यदेतत॥ यत्तुषष्ठेभाष्यकारोवक्ष्यतिसिद्धःप्लुतःस्वरसंधिष्वितितत्तुइहोऽनुनासिकपर्युदासानुरोधाद्यथोद्देशपक्षएवाश्रयणीयइति
स्थितेस्वरसंधिसामान्यापेक्षत्वापकाश्रयणेपिनदोषइत्याशयेननतुसामान्यापेक्षतायामेवकिंचिदाग्रहबीजमस्तीतिदिक्॥ ननूताहर
णेषुईदादिकमेवद्विवचनंनतुतदन्तमितिचेन्न व्यपदेशिवद्भावेनतदंतत्वात्॥ ननुईदूदेदन्तंद्विवचनान्तमित्येवकथंनव्याख्यातम्॥ एवंहि
सतिव्यपदेशिवद्भावोनाश्रयणीयइतिचेन्न॥ कुमार्य्योरगारंकुमार्य्यगारंवध्वोरगारंवध्वगारमित्यत्रप्रत्ययलक्षणेनद्विवचनान्तेअतिव्याप्तेः
॥संज्ञाविधौप्रत्ययग्रहणेतदंतग्रहणंनास्तीति सुप्तिङन्तंपदमित्यत्रांतग्रहणेनज्ञापितत्वाच्च॥ एतेनईदाद्यन्तंयद्द्विवचनंतदंतंप्रगृह्यंकुमा राम
६८

र्यंगारादौ तु सकारांतं द्विवचनं न त्वीदाद्यंतमिति परास्तम्॥ संज्ञाविधौ प्रत्ययग्रहणे तदंताग्रहणात्॥ यत्तु अस्मिन्पक्षे दूषणांतरमुक्तम्॥
अमुष्मै अमुके सम पद्येतामुक्त्यास्तां वस्त्रे इत्यत्र शब्दांतरप्राप्त्या अनित्यं लुकं बाधित्वा परत्वाच्छ्वीभावे कृते तस्य लुकि प्रत्ययलक्षणेन मु-
क्ती इत्यस्य प्रगृह्यतास्यादिति तन्न अंतरंगानपि विधीन् बहिरंगोपि लुग्बाधत इति परिभाषया औकारस्यैव लोपात्॥ तस्य ईदाद्यंतत्ववि-
रहात्॥ अस्तु तर्हि ईदादि विशेष्यं तथा च द्विवचनसंज्ञं ईदादि प्रगृह्यमित्यर्थ इति चेन्न गंगे इत्यादेः सिद्धावपि हरी एते इत्याद्यसिद्धेः द्विव-
चनावयवो ह्ययमेकारो न तु द्विवचनम्॥ किंच॥ प्रगृह्यमित्यस्य सन्निहितत्वाद् द्विवचनमेव संज्ञि न त्वीदादि विप्रकृष्टत्वात्॥ तस्माद्यथाव्या-
ख्यातमेव मनोरमम्॥ अत्र वृत्तिकाराः ॥ मणीवादीनां प्रतिषेधो वक्तव्य इति पठित्वा मणीव रोदसी वदंपती व जंपती वेत्युदाजह्रुः॥ मुनि-
त्रयानुक्तत्वादप्रमाणमिदमिति कैयटादयः॥ एवं वदद्भिः समानन्यायतया अन्येषां मुनित्रयानुक्तानां वृत्तिकृन्मात्रोक्तानां तुरीयस्येष्टिः
शंसितुद्दिगुहिभ्यो वा कृतमेके छंदसि। भाषायां च अंगगात्रकंठेभ्यस्त्विष्यते इत्यादीनाममनादर्तव्यतोक्ता। मणीवोष्ट्रस्य लंबेते इति तु इ-
वार्थे केन निर्वाह्यमित्याहुः॥ न्यासकारस्तु संबुद्धौ शाकल्यस्येताविति शाकल्यग्रहणस्य सिंहावलोकितन्यायेनेह संबंधाद्व्यवस्थितवि-
भाषाश्रयणाच्चेदं लभ्यत इत्याह। केचित्तु इवार्थे पंवशब्दः प्रयुक्तो भीमो भीमसेन इतिवत्॥ कादंबखंडितदलानि व पंकजानि इत्यादिवच्चे-
त्याहुः॥ वस्तुतस्तु वह्वाय यथातथे वैवं साम्य इत्यमरग्रंथे ववेति पाठमाश्रित्य शात्रवं व वपुर्यश इति कालिदासप्रयोगस्य तद्व्याख्यातृभिरुदा-
हरणमत्र संर्वसमस्यं॥ युक्तश्चायमेव पाठः॥ प्रातिपदिकप्रक्रमेन तद्धितस्य वतेरननुगुणत्वात्॥ एतेन स्फुटोत्पलाभ्यामलिदंपतीव तद्विलो-
चनाभ्यां कुचकुड्मलशायी॥ निपत्य बिंदूत्हृदि कज्जलाविलो मणीवनीलो तरलौ विरेजतुः॥ इति श्रीहर्षप्रयोगोपि गतार्थः॥ अदसो मात्

श॰कौ॰ अस्मात् परा वीदूतौ प्रगृह्यौ स्तः॥ अमी ईशाः॥ रामकृष्णावमू आसाते॥ नच अमूइत्युदाहरणं पूर्वसूत्रेणगतार्थमितिवाच्यम्॥ तस्मिन्कर्त्त
६९ व्येमुत्वस्यासिद्धत्वात्॥ अदसोमादितिसूत्रं प्रतितुनासिद्धत्वम्॥ आरंभसामर्थ्यात्॥ तथाचवार्त्तिकं॥ आश्रयात्सिद्धत्वंचयथारोरुत्वे इति॥ पुं
द्विवचनमेवोदाहरणं स्त्रीनपुंसकयोर्द्विवचनेतुमुत्वस्यासिद्धत्वेप्येकारांतत्वात् पूर्वेणैवसिद्धासंज्ञा॥ ततश्चप्रकृतिभावोनुनासिकपर्यु॰
दासश्चसिद्धएवेत्यवधेयम्॥ यत्तुहरदत्तेनोक्तमणोप्रगृह्यस्येत्यत्रोपस्थितेनपूर्वसूत्रेणसंज्ञायांक्रियमाणायांमुत्वस्यसिद्धत्वात् लिंगत्रये
पिद्विवचनेनुनासिकपर्युदासः पूर्वेणैवसिद्धः एतत्सूत्रारंभस्तु अद्विवचनार्थः पुंसिद्विवचने प्रकृतिभावार्थश्चेति॥ तच्चिंत्यम्॥ प्लुतसंग्रहानु
रोधेनपूर्वसूत्रे यथोद्देशपक्षस्यैवस्थापितत्वात्॥ तस्मात्पुंसिद्विवचनेनुनासिकपर्युदासोप्येतत्सूत्रस्यफलंनतुप्रकृतिभावमात्रमित्यवधेय
म्॥ अथापिकथंचिद्धरदत्तोक्तिःसमर्थयितव्येत्याग्रहस्तर्हि इत्थंसमर्थनीया॥ पूर्वसूत्रेकार्यकालपक्षएवास्तु॥ नचैवंप्लुतस्यानुनासिकप
र्युदासोनस्यादितिवाच्यम्॥ ईई३त्॥ ऊऊ३त्॥ इतिदीर्घस्वरभागेप्लुतस्यापिप्रश्लिष्टनिर्देशात्॥ एकारस्तु अणत्वादेवप्लुतंग्रहीष्यति॥ न
चतादपिस्तपरइतितत्कालग्रहणापत्तिः॥ ऋदोरविति वद्कारएवायमित्याशयात्॥ युक्तंचैतत्॥ यथोद्देशपक्षेप्लुतात्प्रागेवसंज्ञाप्रवृत्तौ स
त्यांततः प्लुतेकृतेतमेवद्विमात्रत्वेनपश्यंत्या अपिसंज्ञायाः पुनः प्रवृत्तौबीजाभावात्॥ नाभावस्तुमुभावात्प्रागप्राप्तस्ततोमुत्वनिमित्तकंना
भावमाश्रित्यमुभावेदःशब्दोयमितिबुद्ध्याप्राप्नुवन् दीर्घः प्रतिविधीयतइतिउचितम्॥ नत्वसौप्लुतात्प्राक्प्रगृह्यसंज्ञावत् मुभावात् प्रागेव
प्रवृत्तोयेनपुनर्नप्रवर्त्तेत॥ एतेनपूर्वसूत्रस्थहरदत्तग्रंथोप्युज्जीवितइतियावद्व्याख्यंसाधु॥ भाष्यकैयटयोस्त्वयं भावः प्लुतात् प्राक्प्राप्तापिप्रगृ शम
ह्यसंज्ञाफलाभावान्नक्रियते नच प्लुतेनुनासिकप्रवृत्तिरेवफलमस्त्विति वाच्यम्॥ संज्ञायाअप्रवृत्तावपितल्लाभात्॥ प्रगृह्यत्वप्रयुक्तपर्युदा॰ ६९

सस्यैव विधिस्पृष्टस्य तत्फलत्वौचित्याच्चेति ॥ सुश्लोके इत्यादावप्यंतरंगत्वान्प्लुतः ॥ अंतरंगं बलीय इति न्यायात् ॥ प्रकृतमनुसरामः ॥ नन्वा
रभ्यमाणेप्यस्मिन्सूत्रे पूर्वसूत्रेणैकरूप्यार्थं यथोद्देशपक्ष एवाश्रयणीयः ॥ तथा च रुत्वस्योत्वं प्रतीव प्रगृह्यसंज्ञां प्रत्येव मुत्वमीत्वयोः सिद्ध
त्वं स्यात् ॥ न त्वयादीन्प्रत्यपि ॥ ततश्चामी आसते इत्यत्र अयादेशप्रसंगः ॥ अमू आसाते इत्यत्रावादेशः ॥ अमी अत्र इत्येङः पदांतादतीत्ये
कादेशप्रसंगश्च ॥ न च संज्ञां प्रत्येव सिद्धत्वे वचनानर्थक्यं स्यादिति वाच्यं ॥ अनुनासिकपर्युदासेन चरितार्थत्वात् ॥ अत्रोच्यते यद्यनुनासिक
पर्युदासमात्रं प्रयोजनं स्यात्तर्हि संज्ञासूत्रं न प्रणयेत ॥ अणो प्रगृह्यस्यानुनासिकः अदसो नेत्येव ब्रूयात् असौ अमुके अमुकाभ्यामित्यादौ तु नि
ज्झ्नन्तेपि न भवत्यनुनासिकः ॥ अनण्त्वादनवसानत्वाच्च ॥ अतस्तत्र माद्ग्रहणमीदूद्ग्रहणं वा न कर्त्तव्यं ॥ न चैवं हे अमुक इत्यत्रापि निषेधापत्तिः
त्यदादीनां संबोधनविभक्तिविरहस्य औत्सर्गिकत्वात् ॥ अतः संज्ञारंभसामर्थ्यात् प्रकृतिभावार्थत्वमप्यस्य विज्ञायते तेन हलाच्च अपादिवि
रहोपि सिध्यति ॥ प्रकृतिभावस्यापवादरूपतया उपसंजातनिमित्तोप्युत्सर्ग उपजनिष्यमाणनिमित्तेनाप्यपवादेन बाध्यत इति परिभाषावतां
राच्च ॥ यत्तु संज्ञारंभसामर्थ्याद्यादीन्संज्ञां च प्रति मुत्वमीत्वयोः सिद्धत्वज्ञापनाद्यादीन्बाधित्वा परत्वान्मुत्वमीत्वे इति तन्न ॥ अयाद्यभाव
स्य ज्ञापने लाघवात् ॥ अर्थापत्तेर्हि साक्षादुपपादकविषयता औत्सर्गिकी । किंच । मुत्वमीत्वयोरेकपदाश्रयत्वेन बलीयस्त्वम् ॥ अंतरंगं ब
लीय इति न्यायात् ॥ तत्कथं विप्रतिषेधोपन्यासः ॥ नाजानंतर्य्ये इति निषेधस्तु असिद्धं बहिरंगमित्यस्या एव न तूदात्ततपरिभाषायाः यद्यप्य
सिद्धं बहिरंगमंतरंगे इत्यनपेक्ष्यैव गतार्थत्वादंतरंगं बलवदिति पृथक् परिभाषा न कर्त्तव्येति विप्रतिषेधे परमिति भाष्यकृद्वक्ष्यति ॥ तथापि अभ्यु
च्चयमात्रतत्प्रस्तावान्निरपवादत्वाभ्यां फलविशेषात् रुस इहेत्यत्र हि सप्तम्येकवचनेन सह गुणोंतरंगः । सवर्णदीर्घत्वं तु बहिरंगं ॥ नन्वेहा

सिद्धपरिभाषया गुणो लभ्यते॥ नाजानंतर्य्ये इति निषेधात् अत एव वाचः परस्मिन्निति सूत्रे भाष्यकृद्वक्ष्यति॥ आरभ्यमाणे नित्ये सौपरश्चासौ
व्यवस्थया॥ युगपत्संभवो नास्ति बहिरंगेण सिद्ध्यतीति एतच्च तत्रैव स्फुटीकरिष्यते॥ अत एवोक्तं वार्तिककृता शब्ध ङं तस्यां तरंगलक्षण
त्वादिति॥ धिपति अदुदुवदित्यादि च तत्रोदात्त तंज्ञापकंचात्र ओमाङोश्चेत्याङ्ग्रहणं॥ तद्धिखट्वा आऊढे त्यत्र परमपि सवर्णदीर्घं बाधि
त्वा धातूपसर्गयोः कार्यमंतरंगमित्यंतरंगत्वाद्गुणे कृते वृद्धिप्राप्तौ सत्यां पररूपं यथास्यादिति क्रियते॥ एतच्च संप्रसारणाच्चेति सूत्रे भाष्ये
स्पष्टं। कथं तर्हि वार्तिककृतोक्तं विप्रतिषेधाद्धेति सत्यं॥ अत एवापरितोषाद्भाष्यकारेण अ थ्यवेति पक्षांतरमाश्रितमिति दिक्। मात् किं अमु
केत्र॥ नन्विह सूत्रे ईदूतावेवानुवर्त्तितो नत्वेकारः॥ सत्यं। सति माद्ग्रहणे एकारो नानुवर्त्तते॥ अदसो मात्परस्य तस्यासंभवात्॥ अ
न्यथा त्वनुवर्त्तेत॥ एकदेशानुवृत्तिस्तु दुर्ज्ञाना॥ तस्मादेकारानुवृत्तितात्पर्यग्राहकफलकं माद्ग्रहणमिति स्थितं॥ अत्रेदं चिंत्यम्॥
ईदूतौ सप्तम्यर्थे प्रगृह्यौ अदसः एच्च द्विवचनम्॥ इत्येव कुतो न सूत्रितं॥ एवं हि पूर्वसूत्रस्थमीदूद्ग्रहणं प्रकृतसूत्रे माद्ग्रहणं च न क
र्तव्यमिति महल्लाघवं॥ एकदेशानुवृत्तिश्च नाश्रयणीया भवतीति॥ शे॥ अयं प्रगृह्यः स्यात्॥ अस्मे इन्द्राबृहस्पती॥ चतुर्थीबहुवच
नस्य स्थाने सुपां सुलुगिति सूत्रेण शे आदेशः॥ शित्वात्सर्वादेशता शेषे लोपः॥ न युष्मे वाजबंधवः॥ युष्मास्वित्यर्थः॥ अत्र पदपा
ठकाले युष्मे इत्युदाहरणं बोध्यं संहितायां तु अचपरत्वाभावेन सत्यसति वा प्रगृह्यत्वे विशेषालाभात्॥ एवं त्वेरायः सुदुघा त्वे
ह्यस्मा इत्यादीनामपि पदपाठकाले उदाहरणत्वं बोध्यम्॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्॥ तेनेह न। काशेकुशेवं



शेहरिशेवभ्रुशे॥ हरिवभ्रुआभ्यां लोमादित्वाच्छ प्रत्ययः॥ ततः सप्तम्येकवचनम्॥ निपात एकाजनाङ्॥ एकोज्निपात आङ्भिन्नः प्र

गृह्यः स्यात् अनिषेधाधिक्षेपयोः ॥ अ अवद्यं इ विस्मये ॥ इ इंद्रः उ उजुगुप्सासंतापान्वर्थाप्यर्थेषु ॥ ऊ ऊ मेशाः ॥ एकाजिति कर्मधारयः वर्तिप
दार्थप्राधान्येनांतरंगत्वात् ॥ स्याहरति मृगइत्यादिनिर्देशाच्च ॥ तेनेह न प्रेदं ब्रह्म वृत्ततूर्येष्वाविथ ॥ प्रेद्ध इत्यादि ॥ स्यादेतत् ॥ यद्ययं कर्म
धारयस्तर्हि एकग्रहणं व्यर्थं ॥ निपातो योच् इत्येतावतैवाभिमतसिद्धेः ॥ न च विपरीतविशेषणविशेष्यभावेन अजंतो यो निपात इत्यर्थः
स्याद्विशेषणेन तदंतविधेरिति वाच्यं ॥ तथासति व्यावर्त्यालाभेन विशेषणवैयर्थ्यापत्तेः ॥ न च हलंतं व्यावर्त्यं ॥ तस्य संज्ञायां सत्यामपि बाध
काभावात् ॥ न च पुरोऽस्तीत्यादौ हलंतस्य संज्ञायां सत्यां प्रकृतिभावाद्रोरुत्वं न स्यादिति वाच्यं ॥ प्रगृह्यसंज्ञां प्रतिरुत्वस्यासिद्धतया दोषा
भावात् ॥ न च सांतस्य कृतप्रगृह्यसंज्ञा एकदेशविकृतस्यानन्यतया रेफांतस्यापि स्यादेवेति प्रकृतिभावप्रसंगस्तदवस्थ एवेति वाच्यं ॥ प्र
गृह्यसंज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्यासिद्धत्वा सकारांतस्य तु न किंचिदपि सिद्धं कांडस्यं प्राप्नोति प्र त् प्रकृतिभावेन व्यावर्त्येत ॥ त
स्मादचा निपातस्य विशेषणे अज्ग्रहणं व्यर्थमेव स्यादिति सुष्ठूक्तं ॥ ननु अजंतस्यैव यथा स्यात् इज्मात्रस्य माभूदित्येवमर्थं विशेषणं किं न
स्यादिति चेन्न ॥ व्यपदेशिवद्भावेन तस्याप्यजंतत्वानपायात् ॥ विशेषणसामर्थ्याद्व्यपदेशिवद्भावो न प्रवर्तत इति चेन्न ॥ तदंतविधिपरित्यागे
नापि तत्सार्थक्यस्य सुवचत्वात् ॥ तथापि अन्यतरपरित्यागे आवश्यके विनिगमकं किमिति चेत् अनाङ्ग्रहणमेवेत्यवेहि ॥ तद्व्यपदेशिवद्भा
वमात्रबाधे व्यर्थं स्यात् ॥ तस्मादचो विशेषणत्वेपि अनाङ्ग्रहणाज्ज्ञापकात् तदंतविधिर्न अचो विशेष्यत्वेन तु न तरां तदंतविधिरिति ॥ उभयथा
प्येकग्रहणं व्यर्थमेवेति स्थितम् ॥ ननु अच्समुदायनिवृत्त्यर्थमेकग्रहणमस्तु ॥ अइउ अपेहीति समुदायस्यैव संज्ञा स्यान्मा वपवानां एकां
ज्द्विर्वचनन्यायादिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति ॥ मैवं ॥ अजित्येकत्वस्य विवक्षयैव समुदायनिरासंभवात् ॥ अत्राह भा

१

सि॰कौ॰ ष्यकारः॥ अच्समुदायग्रहणशंकानिरासार्थमेकग्रहणंकुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसंख्यानविवक्ष्यते किंतु जातिरेव निर्दिश्य-
७१ त इति तेनदंभेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धमिति वार्तिककृता वक्ष्यमाणं सूत्रेणैव ज्ञापितं भवति दंभेः सिद्धमित्यन्वयः अत्र हेतुर्हल्-
ग्रहणस्य जातिवाचकत्वादिति॥ तेन दंभेः सनि कृते सनीवंतेति विकल्पादिडभावे दंभ इच्चेति इत्वे ईतोः कृतयोरत्र लोपोभ्यासस्येत्यभ्यासलो-
पे हलंताच्चेति सनः कित्वान्नलोपे भष्भावे च कृते धिप्सति धीप्सतीति रूपद्वयं सिद्ध्यति हल्ग्रहणस्य व्यक्तिपरत्वे तु पोत्रेकः समीपो हल् भकारेण न ततः
पश्सन्। यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्वं न स्यात्॥ तथा तृहू हिंसायां तुदादिः सन्॥ उदित्वादिड्वा इति तृंहिषति तितृक्षतीति
न स्यादिति दिक्॥ स्यादेतत्॥ अइउअपेहीत्यत्र एकाज्द्विर्वचनन्यायोपन्यासो न युक्तः समुदायसंज्ञया वयवानामननुग्रहात्॥ अत एव हि
निर्ग्लीयान्निर्ग्लैयादित्यादौ बहूनां सन्निपाते द्वयोः संज्ञा स्वीकृता॥ नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणं एकैकस्मिन्निपाते संज्ञा
विधानसंभवात्॥ सत्यं। एकाज्समुदायग्रहणशंकामात्रं तु स्यादेव॥ तन्निरासायैव क्रियमाणमेकग्रहणं प्रागुक्तमर्थं ज्ञापयति॥ वस्तुत
स्त्वपृक्तसंज्ञायामेकग्रहणमुक्तार्थज्ञापकमित्याश्रित्य प्रकृतसूत्रे एकग्रहणस्य परित्याग एव न्याय्यः॥ निपात इति किम्॥ चकारात्र॥
तथा अतनेर्डः॥ अः॥ हे अ आगच्छेत्यपि प्रत्युदाहरणम्॥ आङ् नाङोव्यवस्थामाह भाष्यकारः॥ ईषदर्थे क्रियायोगे मर्यादाभिविधौ-
च यः॥ एतमातं ङितं विद्याद्वाक्यस्मरणयोरङिदिति॥ इह एतच्छब्देन पूर्वमनिर्दिष्टत्वादेतमित्यस्य एनादेशो न कृत इति केचित्॥ तन्न॥ अ-
न्वादेशश्च कथितानुकथनमात्रं न त्विदमेव कथितस्येदमानुकथनमिति भाष्यकृता वक्ष्यमाणत्वात्॥ तस्माद्यत् किंचिद्विधाय वाक्यांतरे-
णान्यदुपदिश्यते सोन्वादेशः इह तु ईषदर्थादौ यो वर्त्तत इति वृत्तिर्न विधेया किंतु परिचायकतामात्रेणोपात्ता अतो नैनादेशः॥ एतेन नक्तं भी-

रूर्यत्वमेव तदिमं राधे गृहं प्रापयेत्यपि व्याख्यातं॥ भीरुत्वस्य विधेयत्वाविवक्षणात्॥ सिद्धस्यैव हेतुत्वे नानुवादादिति दिक्॥ ईषदर्थे आ उष्णं
ओष्णं॥ आङीषदर्थेइति कुगतीति सूत्रे वार्त्तिककृता ङिद्व्यवस्थितः क्रियायोगे आ इतः एतः प्रादिषु ङित्स्थितः॥ मर्यादाभिविधौ चेति समाहा
रहूंहू आगमशासनस्यानित्यत्वान्नुमभावः॥ मर्यादया सहिते अभिविधाविति मध्यमपदलोपी वा समासः॥ मर्यादायां॥ आ उदकान्तात् ओ
दकांतात्॥ अभिविधौ आ अहिच्छत्रात्॥ आहिच्छत्रात्॥ विना तेनेति मर्यादा सह तेनेत्यभिविधिः॥ आङ् मर्यादाभिविध्योरिति च ङिन्निर्दिष्टः॥ पू
र्वप्रक्रांतस्य वाक्यार्थस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते॥ आ एवं नु मन्यसे नैवं पूर्वममंस्थाः॥ संप्रत्येवं मन्यस इत्यर्थः॥ वाक्यारंभ
सूचनाय आकार इत्यपरे॥ तथा स्मृतेः सूचक आकारः प्रयुज्यते॥ ततः स्मृतोऽर्थो निर्दिश्यते आ एवं किल तदिति॥ अत्र च वाक्यस्मरणयोरङिदि
त्यत्रैव तात्पर्यं॥ अतो वाक्यस्मरणाभ्यामन्यत्र ईषदर्थाद्यभावेपि ङित्त्वं बोध्यम्॥ तेन आ मेन्यस्य रजसो यदभ्र आँ अपो वृणाने त्यत्र सप्तम्यर्थे व
र्त्तमानस्याकारस्य ङित्वेन आङोनुनासिकश्छंदसीति प्रवर्त्तनेइति षष्ठे हरदत्तादयः॥ युक्तं चैतत्॥ ङिदङितोरन्यतरलक्षणमात्रेणार्थादुभयविवेक
लाभे तत्रापि लाघवाद्ङिल्लक्षणे तात्पर्यमाश्रित्य भागांतरस्यावद्युत्यनुवादरूपत्वात्॥ ओत्॥ ओदंतो निपातः प्रगृह्यसंज्ञः स्यात्॥ आहो इति उता
हो इति॥ निपात इति किं॥ देवो सिवषट् ते विष्णवास आ वाय वायाहि॥ विष्णो व॥ यत्तु गवित्ययमाहेत्येतदेव निपातग्रहणस्य व्यावर्त्यमिति॥ तन्न
।प्रगृह्यसंज्ञायां सत्यामपि क्षत्यभावात्॥ नचैवं प्रकृतिभावापत्तिः॥ प्रकृतिभावविधौ पदांताधिकारात्॥ न चायं पदांतो भवत्येवेति भ्रमितव्यम्॥
अनुकार्यानुकरणयोरभेदविवक्षयार्थवत्त्वाभावेनाप्रातिपदिकत्वाद्धि भक्तेरनुत्पत्तावेवैतद्रूपाभ्युपगमात्॥ अन्यथा विभक्तिश्रवणापत्तेः। नचै
वमपदस्य प्रयोगासंगतिरिति वाच्यम्॥ अपदं न प्रयुंजीतेत्यु ह्योषस्य अपरिनिष्ठितं न प्रयुंजीतेत्येवंपरत्वात्॥ तस्य च सुप्तिङादिविषयकतत्त्व द्वि

ष्यकारः॥ अच्समुदायग्रहणशंकानिरासार्थमेकग्रहणंकुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसंख्यानविवक्ष्यते किंतु जातिरेवनिर्दिश्य-
नइति तेनदंभेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धमिति वार्त्तिककृता वक्ष्यमाणंसूत्रेणैव ज्ञापितंभवति दंभेः सिद्धमित्यन्वयः अत्रहे तुर्हल्-
ग्रहणस्य जातिवाचकत्वादिति॥ तेनदंभेः सनिकृतेसनीवंतेति विकल्पादिडभावे दंभइच्चेतिइदीतोः कृतयोरत्रलोपोभ्यासस्येत्यभ्यासलो-
पे हलंताच्चेति सनः कित्वान्नलोपे भष्भावेचकृते धिप्सति धीप्सतीति रूपद्वयंसिद्धमिति हल्ग्रहणस्यव्यक्तिपरत्वेतु योत्रेकः समीपो हल्भकारेणनततः
परस्सन् । यस्माच्चपरःसन् भकारान्नासाविकः समीपइति कित्वंनस्यात्॥ तथातृहूहिंसायां तुदादिः सन्॥ उदित्वादिड्वा तितृंहिषति तितृक्षतीति
नस्यादितिदिक्॥ स्यादेतत्॥ अइउअपेहीत्यत्रएकाज्द्विर्वचनन्यायोपन्यासोनयुक्तः समुदायसंज्ञयावयवानामननुग्रहात्॥ अतएवहि
निर्ग्लीयान्निर्ग्लेयादित्यादौबहूनांसन्निपाते द्वयोः संज्ञास्वीकृता॥ नापिनिपातसमुदायस्य निपातग्रहणेनग्रहणंएकैकस्मिन्निपातेसंज्ञा
विधानसंभवात्॥ सत्यं॥ एकाजसमुदायग्रहणशंकामात्रंतुस्यादेव॥ तन्निरासायैवक्रियमाणमेकग्रहणंप्रागुक्तमर्थंज्ञापयति॥ वस्तुत-
स्त्वपृक्तसंज्ञायामेकग्रहणमुक्तार्थज्ञापकमित्याश्रित्यप्रकृतसूत्रेएकग्रहणस्यपरित्यागएवज्यायान्॥ निपातइतिकिम्॥ चकारात्र॥
तथाअतनेर्डः॥ अः॥ हेअआगच्छेत्यपिप्रत्युदाहरणम्॥ आङ्नाङोव्यवस्थामाह भाष्यकारः॥ ईषदर्थेक्रियायोगेमर्यादाभिविधौ-
चयः॥ एतमातंङितंविद्याद्वाक्यस्मरणयोरङिदिति॥ इहएतच्छब्देनपूर्वमनिर्दिष्टत्वादेतमित्यस्य एनादेशोनकृतइतिकश्चित्॥ तन्न॥ अ-
न्वादेशश्चकथितानुकथनमात्रंनत्विदमेवकथितस्येदमानुकथनमिति भाष्यकृतावक्ष्यमाणत्वात्॥ तस्माद्यत्किंचिद्विधायवाक्यांतरे-
णान्यदुपदिश्यतेसोन्वादेशः इहतुईषदर्थादौयोवर्त्ततइतिवृत्तिर्नविधेयाकिंतुपरिचायकतामात्रेणोपात्ता अतोनैनादेशः॥ एतेननक्तं भी-

रुरथत्वमेव तदिमं राधे गृहं प्रापयेत्यपि व्याख्यातं॥ भीरुत्वस्य विधेयत्वाविवक्षणात्॥ सिद्धस्यैव हेतुत्वेनानुवादादितिदिक्॥ ईषदर्थे आ उष्णं
ओष्णं॥ आङीषदर्थे इति कुगतीति सूत्रे वार्त्तिककृता ङित्वव्यवहृतः क्रियायोगे आ इतः एतः मादिषु ङित्स्यठिनः॥ मर्यादाभिविधौ चेति समाहा
रद्वंद्वे आगमशास नस्यानित्यत्वान्नुमभावः॥ मर्यादया सहिते अभिविधाविति मध्यमपदलोपी वा समासः॥ मर्यादायां॥ आ उदकान्तात् ओ
दकांतात्॥ अभिविधौ आ अहिछत्रात्॥ आहिछत्रात्॥ विना तेनेति मर्यादा सह तेनेत्यभिविधिः॥ आङ्मर्यादाभिविध्योरिति च ङिन्निर्दिष्टः॥ पू
र्वप्रक्रांतस्य वाक्यार्थस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते॥ आ एवं नु मन्यसे नैवं पूर्वममंस्थाः॥ संप्रत्येवं मन्यस इत्यर्थः॥ वाक्यारंभ
सूचनाय आकार इत्यपरे॥ तथा स्मृतेः सूचक आकारः प्रयुज्यते॥ ततः स्मृतोर्थो निर्दिश्यते आ एवं किल तदिति॥ अत्र च वाक्यस्मरणयोरङित्
त्यत्रैव तात्पर्यं॥ अतो वाक्यस्मरणाभ्यामन्यत्र ईषदर्थाद्यभावेपि ङित्त्वं बोध्यम्॥ तेन आ मेन्यस्य रजसो यदभ्र आँ अपो वृणाने त्यत्र सप्तम्यर्थे व
र्तेरप्याकारस्य ङित्वेन आङोनुनासिकश्छंदसीति प्रवर्त्तते इति षष्ठे हरदत्तादयः॥ युक्तं चैतत्॥ ङिदङितोरन्यतरलक्षणमात्रेणार्थादुभयविवेक
लाभे तत्रापि लाघवाद् ङिल्लक्षणे तात्पर्यमाश्रित्य भागांतरस्यावयुत्यनुवादरूपत्वात्॥ ओत्॥ ओदंतो निपातः प्रगृह्यसंज्ञः स्यात्॥ आहो इति उता
हो इति॥ निपात इति किं॥ दिवो सिवषट् ते विष्णावास आ वायवायाहि॥ विष्णो व॥ यत्तु गवित्ययमहेत्येतदेव निपातग्रहणस्य व्यावर्त्यमिति॥ तन्न
। प्रगृह्यसंज्ञायां सत्यामपि क्षत्यभावात्॥ न चैवं प्रकृतिभावापत्तिः॥ प्रकृतिभावविधौ पदांताधिकारात्॥ न चायं पदांतो भवत्येवेति भ्रमितव्यम्॥
अनुकार्यानुकरणयोरभेदविवक्षयार्थवत्त्वाभावेनाप्रातिपदिकत्वाद्विभक्तेरनुत्पत्तावेवैतद्रूपाभ्युपगमात्॥ अन्यथा विभक्तिश्रवणापत्तेः। न चै
वमपदस्य प्रयोगासंगतिरिति वाच्यम्॥ अपदं न प्रयुंजीतेत्युक्तोषस्य अपरिनिष्ठितं न प्रयुंजीतेत्येवंपरत्वात्॥ तस्य च सुप्तिङादिविषयकतत्त्व द्वि

धिशास्त्रमूलकत्वात्॥ इहतूक्तरीत्यास्रुब्विभक्तेरप्यप्राप्त्यागोइतिस्वरूपस्यैवपरिनिष्ठितत्वात्॥ अतएवेहलोपःशाकल्यस्येत्यपिनप्रवर्त्तते॥
कथंतर्हिपूर्वसूत्रेशेर्थेवद्ग्रहणादितिवार्त्तिकेएङःपदांतादितिपूर्वरूपंकृतमितिचेत्॥ तत्रानुकार्यानुकरणयोर्भेदविवक्षितत्वाविभक्तिंकृत्वा च
प्रेषुअर्थेवान्शेर्थेवानितिसमासेनसुपोलुकंकृत्वाव्याख्यानात्॥ एतेनउत्तरसूत्रेसंबुद्धावितिकिंगवित्ययमाहेत्युदाहरंतोवृत्तिकाराअपि
प्रत्युक्ताः॥ तस्मादिहदेवोसीत्यादिकमेवप्रत्युदाहरणंबोध्यम्॥ नचएङःपदांतादित्यारंभसामर्थ्यादेवतत्सिद्धिः हरेवगच्छेत्यादौचरितार्थ
त्वात्॥ नचैङ्ग्रहणसामर्थ्यं॥ ङसिङसोश्चेत्युत्तरार्थत्वात्॥ उत्तरसूत्रेतुसंबुद्धिग्रहणाभावेआहोइतीत्यादावपिपरत्वाद्विकल्पापत्तिः॥ पूर्व
सूत्रस्य अहोईशा इत्यादौउत्तरस्यतुविष्णोइतीत्यादौलब्धावकाशतयाविप्रतिषेधसंभवात्॥ नचेहओदंतस्यकार्यितयाउत्तरत्रतुविशेष्य
सन्निधानेनतदंतविधिविरहादोकारमात्रस्यकार्यितयाभिन्नविषयित्वेकथंविप्रतिषेधइतिवाच्यं॥ त्रपूरणामित्यादौप्रकृतिप्रत्ययावयवयोर्नु
म्नुटोरिवेहापिफलविरोधेनविषयभेदेपिविप्रतिषेधसंभवात्॥ अर्थाधिकारपक्षेउत्तरसूत्रेप्योकारांतस्यसंज्ञित्वाच्च॥ तस्मात्सूत्रद्वयेपिग
वित्ययमाहेतिप्रत्युदाहरणंनेतिस्थितं॥ प्रकृतिभावेपदांतग्रहणंनसंबध्यतइत्याशयेनतुवृत्तिग्रंथोयोज्यः॥ अस्मिंश्चपक्षेमंडूकप्लुतिन्यायेने॰
कोसवर्णइत्यत्रपदांतग्रहणंसंबंधनीयमेव॥ अन्यथागोर्यौगोर्य्यइत्यादावतिप्रसक्तेरितिदिक्स्यादेतत्॥ निपातसमुदायाएते॥ आहउआहो
उतआह उताहोइत्यादि॥ ततश्चादिवद्भावान्निपातएकाजित्यनेनैवसिद्धासंज्ञा॥ नचैवमाहोइतीत्यादिषु ॐ इत्यस्यप्रसंगः निरनुबंधकत्वो
यमुकारः नतुउञ्इतिसमाधानात्॥ अतएवउञइतिसूत्रेञकारोच्चारणमपिसार्थकं॥ अतएवचउञऊँइत्यत्रभाष्यकृतोक्तं॥ द्वावुका
राविमौ॥ एकोननुबंधकः॥ अपरःसानुबंधकइति॥ नचैवमपिआउओइत्यत्रआङ.नाद्गोरेकादेशस्यानाङितिप्रतिषेधेप्राप्तेप्रतिप्रसवाय

द्मितिवाच्यम्॥ अनाङि.त्यस्यपर्य्युदासाश्रयणेन आङ्.नाङोरेकादेशस्यादिवद्भावाद् नाङ्·ग्रहणेनग्रहणात्॥ प्रसज्यप्रतिषेधेहिअसमर्थसमा
सोवास्यभेदश्चस्यात्॥ भाष्येप्रतिषिद्धार्थमेतदित्युक्तिरभ्युच्चयमात्रम्॥ कथमन्यथानुपदमेव अदोभवदित्यत्रातिप्रसंगमाशंक्यप्रतिप्रसो
क्तस्यैव ओकारस्यग्रहणमितिसमादधीत॥ तस्मादिदंसूत्रंविनापिसर्वेलस्यनिर्व्यूढमेवेति चेत्॥ अत्रोच्यते॥ आहोओइत्यादौत्रनि
पातसमुदायाः। किंत्वखंडाएवएतच्चएतत्सूत्रवलात्प्रतिपदोक्तस्य ओकारस्यग्रहणमितिभाष्यवलाद्वाध्यवसीयते॥ तेनआम् आहो
देवदत्तेत्यत्रामएकांतरमामंत्रितमितिनिघातप्रतिषेधःसिद्धः॥ अतएवपदकारैरपि ओषुवर्त्तमरुतइत्यादौओइत्याद्येकपद्येनैवपठ्यते
तदेवंसूत्रकारभाष्यकारपदकाराणांसंवादएवेतिस्थितेनिपातसमुदायएवायमित्याश्रित्यैतत्सूत्रंप्रत्याचक्षाणाः परास्ताः॥ स्यादेत
त् अनदोदःसमभवद्दोभवदित्यत्रातिप्रसंगः। अंतस्यनिपातत्वात्॥ ऊर्यादिच्विडाचश्चेतिगतिसंज्ञाविधानेपि प्राग्रीश्वरान्निपाताइ
त्यस्याधिकारात्॥ नचलक्षणप्रतिपदोक्तपरिभाषयालाक्षणिकओकारोव्यावर्त्यतइतिवाच्यं वर्णग्रहणेषूक्तपरिभाषायाअप्रवृत्तेः॥
अन्यथाएचोयवायावइत्यपिहरयेइत्यादौनप्रवर्त्तेत॥ चक्रेचक्रिरेइत्यादौप्रतिपदोक्तेचारितार्थ्यात्॥ वर्णप्राधान्यमास्तुंपरिभाषाविशेषणत्वे
तुस्यादेवेतिचेन्न॥ अविशेषणाप्यप्रवृत्तेःसूपपादत्वात्॥ तथाचषष्ठेवक्ष्यामः॥ अभ्युपेत्याप्तिब्रूमः॥ अगौर्गौःसमभवद्गोभवदित्यादौगमे
र्डोइत्योकारस्यप्रतिपदोक्ततयाअतिप्रसंगःस्यादेव॥ नन्विहगौणमुख्यन्यायेनसमाधानमस्तु॥ तथाहि। संधीभवंतिब्राह्मणाः॥ त्वद्भव
तिदेवदत्तः॥ मद्भवसित्वं॥ त्वद्भवाम्यहं॥ इत्यादौवचनपुरुषव्यवस्थानुरोधेनच्विप्रत्ययस्थलेसर्वत्रप्रकृतेरेवकर्त्तृत्वमितिसिद्धांतस्थितिः
॥ तथाचप्रकृतौआरोपेणवर्त्तमानाद्भूकृतिवाचकाच्छब्दाल्लोडुत्पत्तौच्विप्रत्ययंप्रतिप्रकृतिभूतस्यवाहीकादिवृत्तेर्गोशब्दस्यगौणार्थतास्य

शं.कौ. ष्टि व ॥ अतएवा महान् महान्भूतो महद्भूतश्चंद्रमा इत्यादावान्महतइत्यात्त्वं न प्रवर्त्तत इति चेन्न ॥ दृष्टांतदार्ष्टांतिकयोर्वैषम्यात् ॥ तथाहि ॥ वि
७२ शिष्टरूपोपादाने गौणमुख्यन्यायः ॥ तस्यार्थवद्ग्रहणे नानर्थकस्येत्येतत्परिभाषामूलकत्वात् ॥ अर्थोपस्थितेश्च रूपविशेषग्रहसापेक्ष
त्वात् ॥ तथा च आन्महत इति विशिष्टरूपग्रहणेन विधीयमानमात्त्वं गौणेन भवतीति युक्तं ॥ इह तु ओदिति वर्णपुरस्कारेण विधीयमाना
प्रगृह्यसंज्ञा कथं गौणार्थवृत्तेर्न भवेत् ॥ निपातसंज्ञा तु तस्यापि मुख्यैव ॥ अतएव संज्ञा श्वश्रुरस्यापत्यं श्वाश्रुरिरित्यत्र राजश्वशुराद्यन्न
प्रवर्त्तते ॥ अतइञ् तु प्रवर्त्तत एव अन्यथा इञोपतश्च तुल्ययोगक्षेमं तैव स्यात् ॥ अतएव गौर्वाहीको ब्रूते गां वाहीकं पाठयेत्यादौ वृद्ध्यात्त्वे
स्त एव एतयोरपि वर्णाश्रयत्वात् ॥ गोत इति न परत्वमोकारांतोपलक्षणार्थमिति वक्ष्यमाणत्वात् ॥ तथा च ओतोमिति सूत्रे भाष्यकृद्वक्ष्यति
॥ गामित्यत्र परापि वृद्धिर्निरवकाशेनात्त्वेन बाध्यत इति ॥ तत्रैव कैयटोपि वक्ष्यति ओत इति सूत्रं पाठ्यम् ॥ ओकारान्तोपलक्षणतया वा गो
त इत्येन व्याख्येयमिति ॥ वृत्त्यादिग्रंथेष्वप्येवमेव स्थितम् ॥ यत्तु वदंति ॥ मुख्य एवस्वार्थे सास्नादिमति गोशब्दो वृद्ध्यात्त्वे लभते ततो वाही
कादिशब्दांतरसन्निधानाद्गौणताप्रतीतिः ॥ गोभवदित्यत्र तु गौणार्थता विनाप्त्विरेवदुर्लभ इति वैषम्यं ॥ तस्मात्पदकार्येष्वयं न्यायो न प्राति
पदिककार्येष्विति स्थितमिति ॥ तच्चित्यम् ॥ वाक्यसंस्कारपक्षे वृद्ध्यात्त्वप्रवृत्तितः प्रागेव गौणार्थावगतेः ॥ यत्तु कारकाणां क्रियया श्रौतसंबंध
स्तत एकक्रियावशीकृतानामरुणैकहायनीन्यायेन पार्ष्ठिकः परस्परावच्छेदः ॥ तथा च गामानयेत्यन्वयवेलायां न गौणार्थता किंतु वाही
केन सह षाष्ठिकावच्छेदवेलायां न चांतरंगत्वेन प्रवृत्तः ॥ पदसंस्कारो बहिरंगगौणत्वप्रतीतावपि निवर्त्तत इति तदपि न ॥ तावतापि ब्रूते पाठ राम
येति क्रियान्वयार्थेव गौणतया आश्रयणीयत्वात् कटोपि कर्मभीष्मादयोपीति पक्षे कथंचिदुक्तिसंभवेपि सामानाधिकरण्याङ्गीकारे हि इती ७२

येत्येवंरूपेभाष्योक्तपक्षांतरेत्वदुक्तन्यायानवताराच्च। ष्वाश्गुरिरित्यत्रेऽप्यभावापत्तेश्च शब्दप्रयोक्त्रावाहीकनिष्ठस्यैवकर्मत्वादेर्विवक्षित
त्वाच्चतस्मादूर्णाप्रयत्वादृष्ट्यात्स्व इत्येवतत्वंनतुप्रातिपदिककार्यत्वादिति॥ अतएवचएकाच्चप्राचामित्यादौप्रातिपदिककार्यत्वेभिन्न
स्मायादयः॥ विशिष्टरूपपुरस्कारेणैवसर्वनामसंज्ञाविधानात्॥ अभिव्यक्तपदार्थायेइत्यपिगौणमुख्यन्यायसिद्धार्थकथनपरं प्रसिद्धा
प्रसिद्धत्वेएवहिमुख्यत्वगौणत्वेइत्यन्यत्रविस्तरः।अतएवसर्वादिसूत्रेसंज्ञोपसर्जनप्रतिषेधइति वार्तिकंप्रत्याचक्षाणोहरदत्तआह।
॥संज्ञाप्रतिषेधस्तावन्नवक्तव्यः॥ अभिव्यक्तपदार्थायेइत्येवसिद्धत्वादिति। यत्तुतत्रकैयटोवक्ष्यति॥ प्रसिद्ध्यप्रसिद्धिवशात्संभवन्नपिगौ
णमुख्यन्यायोनेह्योक्तः।पदकार्येष्वयंनतुप्रातिपदिककार्येष्विति ओत् सूत्रेउक्तत्वादिति॥ तदभ्युच्चयमात्रं।युष्मदस्मदोःस्वरूपमात्रा
श्रयाणांकार्याणामुपर्जनतायामिवसंज्ञायांप्रवृत्त्यापत्तेः।।युष्मद्युपपदेअस्मद्युत्तमइत्यादावपितदापत्तेश्चेतिदिक्॥ तदेवमदोभवज्जो
भवदित्यादौओदितिप्रगृह्यसंज्ञाव्ययत्वादिवद्दुर्वारेतिपूर्वपक्षःपर्य्यवसन्नः।अत्रोच्यते।पूर्वसूत्रेनाङितिपर्युदासादाङ्सदृशाः प्रतिपदं
घटितास्एवनिपातागृह्यंतेइहाप्यर्थाधिकारेणअनाङ्ग्रहणानुवृत्त्यावातथैवेतिसर्वंसुस्थं॥ तथाचसर्वादिसूत्रेअकारांतत्कारेअनुपसर्ज
नत्वेसत्येवभवतइतिपघट्केतदोःसप्ताविति सत्वंतेनत्वेविशेषिततत्वाद्गौणतायामपिस्यादित्याशंक्यत्स्यदादीनाम इत्यत्रानुपसर्जनादि
तिपरिभाषयानुपसर्जनानामेवग्रहणेसिद्धेतथाभूतानामेवसत्वविधावनुवर्त्तनाच्चकश्चिद्दोष इतिसमाधत्तकैयटः॥ संबुद्धौशाकल्य
स्येतावनार्षे॥ ऋषिर्वेदः॥ तदुक्तमृषिणेत्यादौतथादर्शनात्॥ संबुद्धिनिमित्तओकारोवैदिकेइतौपरेप्रगृह्योवास्यात्॥ विष्णोइतिविष्णं
विति॥संबुद्धाविति किंगवित्ययमाहेतिवृत्तिकारः॥ एतन्निष्कर्षश्चपूर्वसूत्रेउक्तएव॥ अनार्षेकिम्॥ ब्रह्मबंधवित्यब्रवीत्॥ इनाविति किंप

शा॰कौ॰ सेव॥ ऊञः॥ उञ इतौ प्रगृह्यसंज्ञा वा स्यात्॥ उ इति विति॥ ऊँ। उञ इत्यनुवर्त्तते शाकल्यस्य प्रगृह्यमिति च॥ प्रगृह्यस्य उञ इतौ परे ऊँ आदे
७४ शो वा स्यात् दीर्घोऽनुनासिकश्च ऊँ इति॥ इह यदि एको योगः स्यात् उञ ऊँ इति तदादेशे विकल्पिते रूपद्वयमेव स्यात्॥ ऊँ इति उ इति अतो योगं
विभज्य प्रगृह्यसंज्ञापि विकल्पिता एवमपि ऊं इति द्वितीयसूत्रे यदि प्रगृह्यग्रहणं शाकल्यग्रहणं चेत्युभयमपि नानुवर्त्तेत तदा उञ्मात्रस्य
नित्यमूंभावविधानात् प्रगृह्यस्यैवाप्रगृह्यस्याप्यादेशः स्यात्॥ तत्र प्रगृह्यस्यादेशे कृते स्थानिवद्भावेन प्रगृह्यत्वादूं इतीति रूपं सिद्धम्॥ न चा
ल्विधाविति प्रतिषेधः। उञ इति समुदायरूपेणाश्रयणात्॥ तथा च॥ इट ईटीति सूत्रे इट् इति समुदायरूपाश्रयणादग्रहीदित्यत्र च ग्रहो
लिटीति दीर्घस्य स्थानिवद्भावमाश्रित्य सिज्लोपः सिद्ध्यतीति स्थानिवत्सूत्रे वक्ष्यते॥ अप्रगृह्यस्य त्वादेशेऽनुनासिको यण् स्यात्॥ तथा
चेष्टरूपत्रितयमध्ये ऊं इतीत्येकमेव सिद्धं न त्वपरं द्वयमित्यव्याप्तिः॥ अतिव्याप्तिश्च सानुनासिकवकारयुक्तस्यानिष्टस्यापि प्रसंगात्॥ अ
थ प्रगृह्यग्रहणमात्रमनुवर्त्तेत तदा प्रगृह्यस्यो ओ नित्यमादेशः स्यात्तत श्च विति ऊं इति द्वे एव रूपे स्यातां न तु उ इतीति तृतीयं॥ अथ शाक
ल्यग्रहणमात्रमनुवर्त्तेत ननु उञ्मात्रस्यादेशविकल्पना दूं इति उ इतीति द्वयं प्रगृह्यस्य विति वितीति द्वयमप्रगृह्यस्येति संकलनया रूप
चतुष्टयं स्यात्॥ तत्र त्रितयस्येष्टत्वेपि सानुनासिकवकारयुक्तमनिष्टमापतति॥ तस्माच्छाकल्यग्रहणं प्रगृह्यग्रहणं चेत्युभयमनुवर्त्तेत
इत्युक्तं॥ इह विभक्तिविपरिणामेन प्रगृह्यस्योञ इति व्याख्यातं॥ आदेशसामानाधिकरण्येन प्रगृह्यं ऊँ इत्येतदादेशो भवतीति व्याख्या
नेपि न कश्चिद्दोष इत्यवधेयम्॥ ननु परिनिष्ठितमेव प्रयोगार्हं परिनिष्ठितत्वं च अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्॥ निह राम॰
तेतिहं तादृशव्याप्तिवारणाय प्रवृत्तेति वैकल्पिके डागमोद्देश्यतावच्छेदकाक्रांते सेहुत्वादाव्याप्तिवारणायोक्तं निसेति। अत एव प- ७५

चूलद्इत्यादीनामलौकिकत्वेनेति सिद्धांतः तथाच उइतीत्येतद्रूपं न स्यादेव अत्र शाकल्यमते ऊँ आदेशो न भाव्यमेव इतरेषां मते तु प्रगृह्यत्वमेव ना
स्तीति चेत्॥ भवेदेवं यदि शाकल्यग्रहणं यथाश्रुतं स्यात्॥ तत्तु विकल्पमात्रतात्पर्यकम्॥ तथाच भाष्यं॥ शाकल्यस्य विभाषा यथा स्यादिति ऊँ
वा शाकल्यस्येति च॥ तथा च तत्र कैय्यटः॥ शाकल्यश्रुतेरेव फलं वाग्रहणेन प्रतिपादयतीति स्मृत्यंतरानुसंधानद्वारेण विभाषा संपद्यत इत्यर्थ॥
यद्वा॥ अस्तु शाकल्यग्रहणं यथाश्रुतं॥ तथापि निपात एकाजित्यनेनैव सिद्धे उञ इति तावन्नियमार्थं॥ तथाच शाकल्यभिन्नमते न प्रगृ
ह्यतेति प्रथमसूत्रार्थः॥ उत्तरसूत्रे च प्रगृह्यस्योञ इत्येतावतैव शाकल्ये लब्धे पुनः शाकल्यानुवृत्त्या इतरेषामपि मते पाक्षिकः प्रगृह्योस्ती
त्यनुमीयते तेन उ इति रूपं सिद्धम्॥ अथवोत्तरसूत्रे पुनः शाकल्यानुवृत्तिसामर्थ्याच्छब्दाधिकाराश्रयणेन सकलस्यैव ऋषेरपत्यांतरं गृह्यते
॥ अस्मिंश्च पक्षे प्रगृह्यस्योञ इत्यनुवादसामर्थ्यादेव प्रगृह्यतापि लभ्यते यथा ढकिलोप इत्यनुवादसामर्थ्याद्रुमिति दिक्॥ आदेशश्चाय
मनुनासिक इति निर्देशादेव वक्तव्यं॥ तथाच बह्वृचप्रातिशाख्यं उकारश्चेतिकरणेन युक्तो रक्तोऽपृक्तो द्राघितः शाकलेनेति॥ रक्तसंज्ञोऽनुनासि
क इति च॥ अत एव यदेतन्नूं ३ इति पदकाराः पठंतीत्यनुकरणे यरोनुनासिके नुनासिको वेत्येष विधिः प्रवर्त्तते॥ ईदूतौ च सप्तम्यर्थे॥ शाकल्य
स्येतावितिनिवृत्तं। ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्त्तमानं प्रगृह्यं स्यात्॥ अध्यस्यां मामकी तनू मामक्यां तन्वामिति प्राप्ते सुपां सुलुगि
ति लुप्तसप्तमीकावेतौ॥ मामकी इति तनू इतीति पदकाले कार्योदाहरणे बोध्ये॥ सोमो गौरी अधिश्रित इति संहितायामप्युदाहरणं॥ ईदूता
विति किं॥ प्रियः सूर्य्ये प्रियो अग्ना भवाति॥ अग्निशब्दात् परस्याः सप्तम्या डा आदेशः पदकारैः प्रगृह्येषु इति शब्दप्रयोगस्य नियमितत्वेनेहापि
पदकाले इति शब्दप्रयोगप्रसंग इति प्रत्युदाहरणमिदं। सप्तमीग्रहणं किं॥ धीती मती सुष्टुती॥ धीत्या मत्या सुष्टुत्या इति प्राप्ते तृतीयैक

श· कौ· वचनस्य पूर्वसवर्ण ईकारः॥ ततोऽकः सवर्णे दीर्घ इत्येकादेशः॥ नत्विह सुपो लुक् ह्रस्वश्रवणापत्तेः॥ अर्थग्रहणं किम्॥ वाप्यामश्वो वाप्य
७५ श्वः॥ नद्यामातिर्नद्यातिः संज्ञायामिति सप्तमीसमासः॥ ननु सप्तम्यर्थोपीहास्त्येव तत्कथमर्थग्रहणेकृतेपीष्टसिद्धिरिति चेत्॥ इत्थं जहत्स्वा
र्थावृत्तिरिति पक्षे पदे वर्णवद्वृत्तौ वर्त्तिपदानामानर्थक्यादीदन्तमिहानर्थकं न तु सप्तम्यर्थं वृत्तीति स्पष्टमेव॥ अजहत्स्वार्थावृत्तिरिति पक्षेपि
उपसर्जनपदं स्वस्वार्थमात्रे पर्यवस्यति किं तु न तत्संसृष्टे प्रधानार्थे॥ अर्थग्रहणसामर्थ्याच्च यो वानर्थः स सप्तम्याभिधीयते॥ आधेयासंसृष्टो
निष्कृष्टाधिकरणरूपस्तावन्मात्रस्येह ग्रहणमिति वृत्तिप्रविष्टेन भविष्यति॥ यद्यपि वाक्यवत्समासेपि लुप्तसप्तमीबलेनाधिकरणमात्र
बोधः पश्चाद्वाक्यार्थतया संसृष्टबोध इति वक्तुं शक्यते॥ तथापि सिद्धांते तावत्समर्थः पदविधिरिति परिभाषानुरोधात् समासस्थले एका
र्थीभावरूप एव सामर्थ्यं न तु व्यपेक्षा॥ अत एवोपसर्जने विशेषणान्वयो न भवति शक्ये कदेशत्वादिति द्वितीये वक्ष्यते॥ मीमांसकादीनामपि
निषादस्थपति न्यायेन पूर्वपदार्थसंबंधिनि लक्षणाभ्युपगमाद्युक्ते वार्थग्रहणेन वाप्यश्वनद्यातिप्रभृतेर्व्यावृत्तिः॥ आतिर्बलाका शरारिराति
राटिश्च बलाका विसकंटिकेत्यमरः॥ आद्यास्त्रयोपि स्त्रीलिंगाः॥ बलाकासाहचर्यादिति केचित्॥ वस्तुतस्तु शरार्यादयस्त्रयः पक्षिविशे
षवाचका न तु बलाकापर्यायाः अतो बलाकासाहचर्यमकिंचित्करं स्त्रीत्वं त्वस्त्येव॥ रत्नकोशे स्त्रीलिंगकांडे आटिः शरारिर्वरटे स्युक्तेः अ
टेरपि साहचर्यात्॥ तपरकरणमसंदेहार्थमिति वृत्तिः॥ अत्र वार्त्तिकं॥ ईदूतौ सप्तमी स्येवलुप्तेर्थग्रहणाद्भवेत्॥ पूर्वस्य चेत्सवर्णोसा
वाडाम्भावः प्रसज्यते॥ वचनाद्यत्र दीर्घत्वं तत्रापि सरसीयदि॥ ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्॥ अस्यार्थः॥ ईदूतौ सप्तमी स्ये राम·
वास्तु नार्थोर्थग्रहणेन॥ अत्रोत्तरमाह॥ लुप्त इति॥ संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात् सप्तम्या एव संज्ञा स्यात्॥ लुप्तेपि प्रकृति ७५

भागस्य संज्ञासिद्ध्यै तु कर्त्तव्यमेवार्थग्रहणमित्यर्थः ॥ ननु सोमो गौरी इत्यादौ विभक्तिर्न लुप्यते किंतु धीती मतीत्यादाविव पूर्वसवर्णे कृते कः
सवर्ण इति दीर्घ एकादेशे तस्यादिवद्भावात् सप्तमीग्रहणेन ग्रहणाद् अस्त्येव सप्तमीत्याशंक्याह ॥ पूर्वस्येति ॥ आङ्गाभाव इति ॥ एकादेशं बाधि-
त्वा परत्वादांगत्वाच्च आडामोस्याता मित्यर्थः ॥ तस्माल्लुगेवेति स्थितेऽर्थग्रहणं कर्त्तव्यमेवेति भावः ॥ नन्वर्थग्रहणमास्तु वचनसामर्थ्याच्च सं-
ज्ञाविधावपि न तदन्तविधिर्भविष्यतीत्याशंक्याह ॥ वचनादिति ॥ यत्र दीर्घत्वं तत्रैव वचनात् स्यात् इति ॥ न शुष्कं सरसी शयानमिति यथा ॥ अत्र हि
सरशब्दात् परस्य सप्तम्येकवचनस्य इयाडियाजीकाराणामुपसंख्यानमिति ईकारादेशे सप्तमी श्रूयते ॥ तथा च सोमो गौरी इत्यादौ न स्या-
देवेत्यर्थः ॥ एतद् दूष्यति तत्रापीति ॥ तत्रापि सप्तम्या लुगेव न त्वीकारः ॥ यदि सरसीशब्दो प्रवर्त्तते ॥ असंदिग्धे संदिग्धवचनमेतत् शास्त्राणि
चेत् प्रमाणं स्युरिति यथा ॥ अस्ति हि सरसीशब्दः दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यन्ते इति भगवदुक्तेः कासारः सरसी सर इत्य-
मरकोशाच्च ॥ तथा च सरसीः परिशीलितुं मयेत्यादिप्रयोगोपि दृश्यते ॥ एवं च सरसीशब्दोपि लुप्तविभक्तिक एवेति वचनान्तदन्तविधिरिति
स्थितम् ॥ ननूक्तरीत्यास्तु सरसीशब्दः सरःशब्दोपि सान्तो निर्विवाद एव ॥ तथा च सान्तादेव ईकारादेशोयमस्तु ॥ एवं हि सति संज्ञाविधौ
ज्ञापकस्य कस्य तदन्तग्रहणस्य पुनराश्रयणं न कर्त्तव्यं भवतीति चेन्न ॥ तथा सति ईकारस्याप्लुप्त्वेनानुदात्ततया सरःशब्दस्य च सृ धातो-
रसुनि ञ्नुसादित्स्यति तु स्वरेण सरसी इति पदमाद्युदात्तं प्रसज्येत गौरादिषु पिप्पल्यादयश्चेति पाठात् पिप्पल्याद्यन्तःपातिनः सरःश-
ब्दान् ङीषान्तोदात्तमिष्यते ॥ तथैव वेदे पाठात् । एवं तर्हि प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं नास्तीति ज्ञापनायेदमर्थग्रहणमस्तु ॥ ए-
वं च ईदूदेद्द्विवचनमिति सूत्रे ईदूदेदन्तं द्विवचनान्तं इति पक्षः ईदूदेदन्तं यद् द्विवचनं तदन्तमिति पक्षश्च समर्थितो भवति । नत्वहि कुमार्योरगारं

शा·कौ· कुमार्य्यगारं॥अस्तुकेस्तुकेसमपद्येतांशुक्लास्तांवस्त्रेइत्यत्रातिव्याप्तिरितिदोषः॥सचप्रत्ययलक्षणविरहादेवोद्धृतइत्याह॥ज्ञापक
७८ मिति॥प्रगृह्यसंज्ञाप्रकरणेप्रत्ययलक्षणाभावस्येतिशेषः॥केदंज्ञापनमुपयुज्यतेतदाह॥तदंतत्वइति॥तदंतत्वगर्भेपक्षद्वयेपीत्यर्थः॥ननु
संज्ञाविधौप्रत्ययग्रहणेतदंतविधेरभावादेवतदंतपक्षस्तत्रनस्थितइत्यपरितोषादाह॥मावेति॥वाप्यश्वइत्यादौमाभूदित्यर्थः॥अ
त्रेदमवधेयम्॥अवितृस्तृतंत्रिभ्यईरितिसूत्रादीरित्यनुवर्त्तमानेयापोः किद्द्वेचवातप्रमीरितिसूत्राभ्यांशब्दत्रयंव्युत्पादितं॥यांसने
नेतिययीर्मुक्तिमार्गः॥पिबतिरसान्पातिवालोकमितिपपीःसूर्य्यः॥वातंप्रमिमीतेसंमुखधावनादितिवातप्रमीः॥निःशृंगोमृगाकृतिर्वा
तमृगनामापशुविशेषः॥एभ्यस्त्रिभ्योपिङौसवर्णदीर्घात्॥पपीययीवातप्रमीइतिरूपंनिर्विवादम्॥तथाचेहश्रूयमाणस्यईकारस्यसप्त
मीत्वात्तत्रापिसरसीयदीत्यसंगतम्॥ईकारस्यश्रूयमाणस्यासंभवात्सामर्थ्यात्तदंतविधिर्भविष्यतीत्यस्यार्थः॥तस्मादूकारांशेसामर्थ्या
त्तदंतविधौलब्धेसोमोगौरीइत्यादावपिभविष्यतीत्याशयःकल्प्यः॥ययीआसक्तइत्यादौतुभाव्यमेवप्रकृतिभावेन॥नचायंयोगः छांद
सस्तथाविधानामेवोदाहरणानांदृष्टत्वादितिवाच्यम्॥मुनित्रयोक्तिंविनास्मदिच्छयाछांदसत्वकल्पनेतिप्रसंगात्॥लोकेप्रगृह्यत्वंनभ
वतीत्यस्मिन्नर्थेप्रमाणानुपलंभाच्च।अप्रतिषिद्धमनुमतंभवतीतिन्यायेनलोकेययीपपीवातप्रमीइत्येषांप्रगृह्यत्वस्यैवन्याय्यत्वाच्च॥अ
तएवदृग्दृशवतुष्वितिसूत्रेदृक्षेचेतिवार्त्तिकमुपादायक्सप्रत्ययःसादेशश्चछंदस्येवभाष्येसदृक्षासइत्युदाहृतत्वादितिकेचिदितिन्यासव्या
ख्याणाहरदत्तादयःछांदसत्ववर्त्तामतेस्वस्यापरितोषमाविश्चकुरितिदिक्॥दाधाघ्वदाप्॥दारूपाधारूपाश्चधातवोघुसंज्ञाःस्युःदाप्दै राम
पौवर्जयित्वा॥तत्रदारूपाश्चत्वारःडुदाञ्॥प्रणिददाति॥दाण् प्रणियच्छति॥दो·प्रणिद्यति॥देङ्·प्रणिदयते॥धारूपौद्वौडुधाञ्·प्रणिदधाति॥ ७८

धेट् प्रणिधयति वत्सो मातरं॥ अदाबिति किम्॥ दाप् लवने॥ दातं बर्हिः लूनमित्यर्थः॥ घुत्वाभावाद्दो दद्घोरिति न प्रवर्त्तते॥ दैप् शोधने।
अवदातं मुखं इह घुत्वाभावाद्वउपसर्गात्त इत्येतन्न॥ घुप्रदेशाः नेर्गदनदेत्यादयः॥ इह दो दे ङ् धेटामनुकरणानि अव्ययस्याप्यत्र अप्र-
कृतिवदनुकरणमित्यतिदेशाद्दादेच उपदेशेऽशितीत्यात्वं क्रियते॥ अनैमित्तिकमात्वं शिति तु प्रतिषेध इति सिद्धांतात्॥ न चैवं विभ-
क्तेरुत्पत्तिर्न स्यात् अधातुरिति प्रातिपदिकसंज्ञानिषेधादिति वाच्यं॥ अधातुरिति पर्युदासोऽयं न तु प्रसज्यप्रतिषेधः॥ अस्ति चैहस्वाश्रय-
मधातुत्वं॥ यद्वा॥ यत्तदेतेभ्य इत्यादाविवेहापि कार्यविशेषपुरस्कारेणैवातिदेशप्रवृत्त्यप्रवृत्ती भविष्यतः॥ ततश्चतुर्णां दारूपाणां द्वयो-
श्च धारूपयोरेकशेषं कृत्वा द्वंद्वः कर्त्तव्यः प्रणिदातेत्यादौ कृतात्वानां दोदेङ्धेटां तु स्थानिवद्भावात् तस्मिन्घुत्वं लक्षणप्रतिपदोक्तपरिभाषा-
या निरनुबंधकग्रहणे न सानुबंधकस्येत्यस्याश्च नेह प्रवृत्तिः सर्वेषां स्वरूपेणैवानुकृतत्वात्॥ अत एव दाप्पतिधारयत्योर्नेति प्रसंगः॥ त-
योरनुकरणे आत्वासंभवेनेह दृष्ट इत्यनुपात्तत्वात्॥ ननु कृतात्वस्य सूत्रे निर्देशात् प्रणिद्यति प्रणिधयतीत्यादौ चात्वविरहात् कथं घुत्वमि-
ति चेत्॥ भ्रांतोऽसि॥ न हि वयं कृतात्वमनुकुर्मो येनोक्तदोषः स्यात्॥ अपि तु दे दो धे इत्येङन्तेष्वेवानुक्रियमाणेषु लक्षणवशान्निष्पन्नमात्व-
मित्युक्तं॥ न च लक्षणेन स्वरूपान्यत्वेऽपि अनुकरणता हीयते॥ सख्युरसंबुद्धावित्यत्रापि सखिरूपप्रतीतेः गवित्ययमाहेत्यत्र गोशब्दप्र-
तीतेश्च॥ दीङस्तु नेह ग्रहणं तदनुकरणे आत्वासंभवात्॥ वार्त्तिकमते एजंतानां दीङादीनामात्वविधानात्॥ भाष्यमते त्वेजनिमित्ते प-
रतस्तद्विधानात्॥ तेन दीङस्तृजादावात्वे कृतेऽपि घुसंज्ञाविरहात् प्रनिदातेत्यत्र नेर्गदेति नित्यं णत्वं न भवति शेषे विभाषेति वैकल्पिकं तु
स्यादेव॥ तथोपादास्तास्य स्वरः शिक्षकस्येत्यत्र स्याध्वोरिच्चेतीत्त्वं न भवतीति सूत्रकारस्य मतं॥ नन्वस्मिन्पक्षे दाप्दैपावनुकृतौ न वा आ-

 यैनुकरणपर्युदासोभयसामर्थ्यात्तयोर्घुसंज्ञाविकल्पःस्यात्॥ अंत्ये अदाविविति व्यर्थंस्यात्॥ अननुकृतत्वादेवदाप्दैपोर्घुसंज्ञाप्राप्तिविर
 हादितिचेन्न॥ अदाबित्यस्मिन्नसतितयोरप्यनुकरणंसंभाव्येत नहिलक्षणैकचक्षुषादोदेङादीनांदापदैपोश्चवैलक्षण्यंकिंचिदनुभू
यते यद्बलाद्ग्रहणाग्रहणेव्यवस्थाप्येयातांव्याख्यानतोविशेषप्रतिपत्तिरितिपरमवशिष्यते॥ किंत्वगतिकगतिरेषाऽनभिधानवत्॥ न
चतद्बलेनसिद्धस्यप्रत्याख्यानंशोभते॥ वार्त्तिककारमतेतुप्रयोगस्थानामेवदाधारूपाणामिदमनुकरणं॥ नचैवंप्रणिद्यतिप्रणिदयतइत्या
दौशितिनस्यात्॥ आत्वाभावात्॥ तथादेङ्रक्षणे॥ अदितधेट्व्यत्यधित्त॥ प्रणिदाताप्रणिधातेत्यादावपिनस्यादात्वस्यलाक्षणिकत्वा
त्॥ लक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यग्रहणमितिन्यायादितिवाच्यं॥ वचनबलेनैवतत्समाधानात्॥ तथाचकात्यायनवार्त्तिकं॥ घु
संज्ञायांप्रकृतिग्रहणंशिदर्थमिति॥ भारद्वाजीयास्तुपठंति॥ शिद्विकृतार्थमिति॥ तथाचदाधाप्रकृतयोघुइतिपठित्वादाश्चधाश्चप्रकृत
यश्चेतिद्वंद्वंकृत्वासन्निधानाद्दाधामेवप्रकृतयइतिव्याख्येयम्॥ भाष्यकारास्तुवार्त्तिकंप्रत्याचख्युः॥ तथाहि। नेर्गदेतिसूत्रेतावदवश्यं
प्रकृतिग्रहणंकर्त्तव्यंप्रणिमयतेप्रण्यमयतेत्यत्राणत्वंयथास्यात्॥ तदेवपुरस्तादपकृष्यघुप्रकृतिमाइतिपठिष्यामः॥ घुश्चप्रकृति
श्चमाश्चेतिद्वंद्वः सन्निधानाच्चपूर्वोत्तरयोःप्रकृतिर्ग्रहीष्यते। नचैवंमीनातिमिनोत्योरपिमाप्रकृतित्वात्ग्रहणापत्तिः माङ्मेङ्का
रानुबंधस्यैवतत्रावश्यपठनीयत्वात्॥ अन्यथामामानेइत्यत्रातिप्रसंगात्॥ तस्माद्घुप्रकृतिमाङितिपाठेनप्रणिद्यतिप्रणिदयतइत्यादेः
सिद्धत्वाच्छिदर्थंतावद्घुसंज्ञायांप्रकृतिग्रहणंनकर्त्तव्यमितिस्थितम्। भारद्वाजीयोक्तरीत्याविकृतार्थंकर्त्तव्यमितिपुनरवशिष्यते। तद 
पिन। गामादाग्रहणेष्वविशेषइतिपरिभाषयैवलाक्षणिकस्यापिदारूपस्यघुसंज्ञासिद्धेः॥ अस्यांचपरिभाषायांदैपःपित्त्वंलिंगं॥ 

तद्धि अदाविति सामान्यग्रहणार्थं क्रियते लाक्षणिकत्वादेव घुसंज्ञायां दैप् ग्रहणाभावे तु किन्निषेधे सामान्यग्रहणार्थेनपित्वेन ॥ नचैवमपि
धेटो घुसंज्ञा न स्यादेवेति वाच्यं ॥ दो दद्घोरित्यत्र धेटो निवृत्त्यर्थं क्रियमाणे न ‾ द् इत्यनेन धेटोपि घुसंज्ञाज्ञापनात् ॥ नच दधाति निवृत्त्यर्थं न दद्
इत्युक्तमिति वाच्यम् ॥ तत्र दधातेर्हि रितित्यादेश विधानादेव दद्घा वा प्रसंगात् ॥ नन्वेवमपि गामादाग्रहणेष्वविशेष इत्येतेनलक्षणप्रतिप
दोक्तपरिभाषाया निरनुबंधकग्रहणे इति परिभाषायाश्च यथा बाधस्तथार्थवद्ग्रहणपरिभाषाया अपि बाधः स्यात् ॥ तथाच प्रतिदारयति प्रति धारय
तीत्यत्राप्यतिप्रसंग इति चेन्न ॥ गदादीनां यउपसर्गस्तत्स्थान्निमित्तादुत्तरस्य तानेव गदादीन् प्रत्युपसर्गस्य नेरिति व्याख्यानात् ॥ दारयति धार
यत्यवयवयोस्तु दाधारूपयोरनर्थकत्वान्न तं प्रत्युपसर्गत्वं ॥ यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा इति वक्ष्यमाणत्वात् ॥ नचैवं प्र
णिदापयति प्रणिधापयतीत्यत्रापि णत्वं न स्यादिति वाच्यम् ॥ तत्र पुगागमात् पूर्वं दाधा इत्यवस्थायां घुसंज्ञा प्रवृत्तौ पुग्विशिष्टस्यापि घुग्रह
णेन ग्रहणात् ॥ अनागमकानां सागमका आदेशा इति पक्षे तु स्थानिवद्भावेन घुसंज्ञाप्रवृत्तेः ॥ नन्व ‾ नांतर्यमेवैतयोरांतर्य्यं संप्रयोगो वान
ष्टाश्वदग्धरथवदिति स्थानेंतरतमसूत्रस्य भाष्यरीत्या दारयत्यादेरपि दापयत्यादिसाम्यमेव ॥ निष्पन्नस्याणो रपरत्वाभ्युपगमेन रेफयुक्तो
रविशेषादिति चेत् ॥ सत्यं ॥ सिद्धं तु प्रसंगे रपरत्वादित्युरण्रपरसूत्रस्थवार्त्तिकरीत्या समाधानं कृतं। उक्तभाष्यरीत्या तु प्रसक्तो दोषः प्रागुक्त
सूत्रकारमतमाश्रित्योद्धर्त्तव्यः ॥ नहि दधृ इत्यनयोरनुकरणे आत्वं लभ्यत इति दिक् ॥ इदं त्ववधेयं ॥ प्रणीदापयतीत्यत्राप्युपसर्गयोः प्रकृ
त्यर्थविशेषणत्वे सत्येव नेर्गद इति नित्यं णत्वं णप्यर्थविशेषकत्वे तु घुसंज्ञकं प्रत्यनुपसर्गत्वाच्छेषे विभाषेति विकल्प एव न तु नित्यं णत्वमिति ॥ स्या
देतत् ॥ उपादिदीषत इत्यत्र सनिमीमेतीस्भावः स्यात् ॥ वार्त्तिककृता घुसंज्ञायां प्रकृतिग्रहणात् ॥ सूत्रकारभाष्यकारयोस्तु नासौ दोषः सूत्र

कृतादीङानुक्तत्वात्॥ भाष्यमते णत्वे प्रकृतिग्रहणेपि घुसंज्ञा पातद्दूरहादितिचेत्॥ सत्यं। वार्त्तिकमतेपिनेपंदा प्रकृतिः॥ एजंतानामात्ववि
धानाभ्युपगमात्॥ नचैवमादन्तत्वनिबंधनघुत्वप्रत्ययासिद्धिः॥ तत्राकारांतलक्षणप्रत्ययविधिरितिवचनेनैवतत्सिद्धेः॥ भाष्ये त्वेतद्वचन
प्रत्याख्यानायैज्विषये आत्वंसिद्धांतितमित्यन्यदेतत्॥ इदंत्ववशिष्यते॥ भाष्यवार्त्तिकोभयमतेपि। पादास्तास्यस्त्वरः शिक्षकस्येत्यत्रस्था
घ्वोरितीत्वंप्राप्तं तच्चभाष्येसन्निपातपरिभाषयापरिहृतं॥ उपदीक्षत इतिस्थितेएज्विषयेप्रवर्त्तमानमात्वंसिचोकित्वमुपजीवति यदिचात्र
घुसंज्ञास्यात्तर्हि स्थाघ्वोरिच्चेतिसिचः कित्वंस्याद्दतो कित्वमुपजीव्यप्रवृत्तआत्वरः कित्वप्रवर्त्तिकां घुसंज्ञां नप्रवर्त्तयत्येवेति॥ वार्त्तिककृतानु
दीङः प्रतिषेधः स्थाघ्वोरित्वे इतिवचनमेवकृतं॥ उभयमतेपि दीङस्तृजादावात्वेकृते प्रणिदातेत्यादौनेर्गदेतिणत्वंभवति॥ अतएववार्त्तिक
कृतादीङः प्रतिषेधइत्येवनोक्तं किंतुस्थाघ्वोरित्वेइति विषयविशेषोनिर्दिष्टः॥ सूत्रमतेतुनभाव्यंणत्वेनेतिस्पष्टमेव॥ किंच॥ भाष्यवार्त्तिक
योर्नकेवलंसूत्रकृतासहविरोधः किन्तुपरस्परेणापि॥ ॥तथाहि॥ भाष्यमतेप्रणिदीयतेप्रणिदीन इत्यादावपिनित्यंणत्वंणत्वविधौप्रकृ
तिग्रहणात्॥ वार्त्तिकमतेतुवैकल्पिकं॥ एजंतानामेवप्रकृतित्वाभ्युपगमेनईदन्तस्याप्रकृतित्वात् अन्यथाउपदिदीषतइत्यत्रेस्भावा
पत्तेः॥ तदेवंप्रणिदातेत्यादौसूत्रकृतासहद्वयोर्विरोधः प्रणिदीनइत्यादौतु भाष्यकृतासहेतरयोर्विरोधोदुष्परिहरइति॥ अत्रेदंवक्तव्यम्॥
यथोत्तरंमुनीनांप्रामाण्यमितिसिद्धांताद्भाष्योक्तरीत्यासर्वत्रदीङ्परेनेर्नित्यंणत्वमितिस्थितेसूत्रवार्त्तिकमतेपिशेषेविभाषेतिव्यवस्थि
तविभाषामाश्रित्यभाष्याविरोधः संपादनीयः॥ एकवाक्यतयैवसर्वनिर्वाहसंभवेमतभेदकल्पनस्यानाश्रयणीयत्वादिति॥ नन्वदा
पितिप्रतिषेधेदाप्लवनइत्यस्यैवग्रहणंयुक्तं॥ नतुदैपः॥ पकारेश्रूयमाणेआत्वायोगादितिचेन्न॥ अनुबंधाअनेकांताइतिपक्षेश्रूयमाण

स्यापि पकारस्य काकादिवदनर्थकत्वेन धातोरेजंतत्वानपाये आत्वप्रवृत्तेः एकांता अनुबंधा इति पक्षेपि भवत्येवात्वं॥ नानुबंधकृतमनेजं
तत्वमिति सिद्धांतात्॥ अत्रोदीचांमाङो व्यतीहार इति कृतात्वस्य मेङो निर्देशो ज्ञापकः॥ न च माङ् माने इत्यस्यैवायं निर्देशोऽस्त्विति मिमीतेः इ
त्यादौ तस्यापि कदाचिद्व्यतीहारे वृत्तिसंभवादिति वाच्यं॥ अपूर्वकालार्थस्य क्त्वाप्रत्ययस्य माङ् माने इत्यस्मादनभिधानात्॥ अत्र च भाष्यो
क्तेरेव प्रमाणत्वादित्याहुः॥ एवं च मेङ् इत्येव पठनीये माङो व्यतीहार इति गुरुकरणं नानुबंधकृतमनेजंतत्वमिति ज्ञापनार्थमेव॥ भा
ष्यकारास्तु नायं दैप् किंतु दिवादिषु दाप् शोधन इत्येव पठिष्यत इत्याहुः॥ न च स्वरे भेदः दापतीत्यादेरुभयथाप्याद्युदात्तत्वात्॥ ननु ना
व्लीलिके चानशि दायमान इत्यत्र स्वरे भेदः॥ श्यनि धातोराद्युदात्तत्वं शपि तु चानशोंऽतोदात्तत्वमिति चेन्न॥ उभयथाप्यंतोदात्तत्वानपाया
त्॥ न च श्यन्स्वरस्य सतिशिष्टत्वेन प्राबल्यमिति वाच्यं। अन्यत्र विकरणेभ्य इति पर्युदासात्॥ आत्मने रवश्चेत्यत्रत्य भाष्यकैय्यट
बलेन खशो वचानश्यपि अंतोदात्ततया निर्णयात्॥ स्थानिवत्सूत्रीयः कैयटग्रंथस्तु खशस्तत्रस्थभाष्यस्योक्तिभ्यां विरोधात् भ्रमादि
क इति वक्ष्यते॥ प्यायत्यादयस्तु दिवादिष्वेवादंतत्वेन न पठिताः॥ गणकार्यमनित्यमिति ज्ञापयितुम्॥ तेन न विश्वसेद्विश्वस्ते पृथिकवनि
ताः प्रत्ययादाश्वसंत्य इत्यादि सिद्धं॥ यत्तु भाष्ये एकांतत्वपक्षेपि न दोष इत्युपक्रम्य पकारलोपे कृते भविष्यति दाप्त्वं तु भूतपूर्वमनुबंधमा
श्रित्य व्युत्पादनीयमिति सिद्धांतितं॥ तत्रेत्थं प्रत्यवतिष्ठंते॥ सत्यप्येजंतत्वे उपदेशे एजंतत्वं कथमिति॥ अत्रोच्यते॥ पित्करणसामर्थ्या
दुपदेशे एजंतत्वाभावेपि आत्वप्रवृत्तिः॥ वस्तुतस्तूपदेशग्रहणं भाष्यकारो न मन्यते॥ तथा च तत्रैव वक्ष्यति॥ उपदेशग्रहणं न करिष्यते॥
यद्युपदेशग्रहणं न क्रियते चेतास्तोतेत्यत्रापि प्राप्नोति॥ अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति न परनिमित्तस्यैच आत्वं भवतीति॥ यदयं कीङ्जी

कृतादीङोननुकृतत्वात्॥ भाष्यमते णत्वे प्रकृतिग्रहणेपि घुसंज्ञापातद्धिरहादिति चेत्॥ सत्यं। वार्त्तिकमतेपि नेयं दाप्रकृतिः॥ एजंतानामात्वविधानाभ्युपगमात्॥ न चैवमादन्तत्वनिबंधनघुत्वप्रत्ययासिद्धिः॥ तत्राकारांतलक्षणप्रत्ययविधिरिति वचनेनैव तत्सिद्धेः॥ भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धांतितमित्यन्यदेतत्॥ इदं त्ववशिष्यते॥ भाष्यवार्त्तिकोभयमतेपि पादास्तास्यस्वरः शिक्षकस्येत्यत्र स्थाघ्वोरितीत्वं प्राप्तं तच्च भाष्ये सन्निपातपरिभाषया परिहृतं॥ उपदीक्षत इति स्थिते एज्विषयेप्रवर्त्तमानमात्वं सिचो कित्त्वमुपजीवति यदि चात्र घुसंज्ञा स्यात्तर्हि स्थाघ्वोरिच्चेति सिचः कित्वं स्यात् तो कित्वमुपजीव्य प्रवृत्त आत्वरः कित्वप्रवर्त्तिकां घुसंज्ञां न प्रवर्त्तयत्येवेति॥ वार्त्तिककृतानुदीङः प्रतिषेधः स्थाघ्वोरित्वे इति वचनमेव कृतं॥ उभयमतेपि दीङस्तु जादावात्वे कृते प्रणिदातेत्यादौ नेर्गदेति णत्वं भवति॥ अत एव वार्त्तिककृता दीङः प्रतिषेध इत्येव नोक्तं किंतु स्थाघ्वोरित्वे इति विषयविशेषो निर्दिष्टः॥ सूत्रमते तु न भाव्यं णत्वेनेति स्पष्टमेव॥ किंच॥ भाष्यवार्त्तिकयोर्न केवलं सूत्रकृता सह विरोधः किन्तु परस्परेणापि॥ ॥तथाहि॥ भाष्यमते प्रणिदीयते प्रणिदीन इत्यादावपि नित्यं णत्वं णत्वविधौ प्रकृतिग्रहणात्॥ वार्त्तिकमते तु वैकल्पिकं॥ एजंतानामेव प्रकृतित्वाभ्युपगमेन ईदन्तस्याप्रकृतित्वात् अन्यथा उपदिदीषत इत्यत्रेस्भावापत्तेः॥ तदेवं प्रणिदातेत्यादौ सूत्रकृता सह द्वयोर्विरोधः प्रणिदीन इत्यादौ तु भाष्यकृता सहेतरयोर्विरोधो दुष्परिहर इति॥ अत्रेदं वक्तव्यम्॥ यथोत्तरं मुनीनां प्रामाण्यमिति सिद्धांताद्भाष्योक्तरीत्या सर्वत्र दीङि परे नेर्नित्यं णत्वमिति स्थिते सूत्रवार्त्तिकमतेपि शेषे विभाषेति व्यवस्थितविभाषामाश्रित्य भाष्याविरोधः संपादनीयः॥ एकवाक्यतयैव सर्वनिर्वाहसंभवे मतभेदकल्पनस्यानाश्रयणीयत्वादिति॥ नन्वदाप्विति प्रतिषेधे दाप्लवन इत्यस्यैव ग्रहणं युक्तं॥ न तु दैपः॥ पकारे श्रूयमाणे आत्वायोगादिति चेन्न॥ अनुबंधा अनेकांता इति पक्षे श्रूयमाण

स्यापि पकारस्य काकादिवदनवयवत्वेन धातोरेजंतत्वानपाये आत्वप्रवृत्तेः एकांता अनुबंधा इति पक्षेपि भवत्येवात्वं॥ नानुबंधकृतमनेजं-
तत्वमिति सिद्धांतात्॥ अत्रोदीचां माङो व्यतीहार इति कृतात्वस्य मेङो निर्देशो ज्ञापकः॥ न च माङ् माने इत्यस्यैवायं निर्देशोऽस्त्विति मीनात इ-
त्यादेस्तस्यापि कदाचिद्व्यतीहारे वृत्तिसंभवादिति वाच्यं॥ अपूर्वकालार्थस्य क्त्वाप्रत्ययस्य माङ् मान इत्यस्मादनभिधानात्॥ अत्र च भाष्यो-
क्तेरेव प्रमाणत्वादित्याहुः॥ एवं च मेङ् इत्येव पठनीये माङो व्यतीहार इति गुरुकरणं नानुबंधकृतमनेजंतत्वमिति ज्ञापनार्थमेव॥ भा-
ष्यकारास्तु नायं दैप् किंतु दिवादिषु दाप् शोधन इत्येव पठिष्यन इत्याहुः॥ न च स्वरे भेदः दापतीत्यादेरुभयथाप्याद्युदात्तत्वात्॥ ननु ता-
च्छीलिके चानशि दापमान इत्यत्र स्वरे भेदः॥ श्यनि धातोराद्युदात्तत्वं शपि तु चानशोंतोदात्तत्वमिति चेन्न॥ उभयथाप्यंतोदात्तत्वानपाया-
त्॥ न चास्य नृस्वरस्य सतिशिष्टत्वेन प्राबल्यमिति वाच्यं। अन्यत्र विकरणेभ्य इति पर्युदासात्॥ आत्ममाने खश्चेत्यत्रत्यभाष्यकैयट-
बलेन खशीव चानश्यपि अंतोदात्ततया निर्णयात्॥ स्थानिवत्सूत्रीयः कैयटग्रंथस्तु खशः सूत्रस्थभाष्यस्वोक्तिभ्यां विरोधात् प्रामादि-
क इति वक्ष्यते॥ प्यायत्यादयस्तु दिवादिष्वेवादंतत्वेन न पठिताः॥ गणकार्यमनित्यमिति ज्ञापयितुम्॥ तेन न विश्वसेदविश्वस्ते पथिकं वनि-
ताः प्रत्ययाद्याश्च सन्त्य इत्यादि सिद्धं॥ यत्तु भाष्ये एकांतत्वपक्षेपि न दोष इत्युपक्रम्य पकारलोपे कृते भविष्यति दात्वं तु भूतपूर्वमनुबंधमा-
श्रित्य व्युत्पादनीयमिति सिद्धांतितं॥ तत्रेत्थं प्रत्यवतिष्ठंते॥ सत्यप्येजंतत्वे उपदेशे एजंतत्वं कथमिति॥ अत्रोच्यते॥ पित्करणसामर्थ्या-
दुपदेशे एजंतत्वाभावेपि आत्वप्रवृत्तिः॥ वस्तुतस्तूपदेशग्रहणं भाष्यकारो न मन्यते॥ तथा च तत्र वक्ष्यति॥ उपदेशग्रहणं न करिष्यते॥
यद्युपदेशग्रहणं न क्रियते चेतास्तोतेत्यत्रापि प्राप्नोति॥ अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति न परनिमित्तस्यैव आत्वं भवतीति॥ यदयं कीङ्जी-

नांणावेव आत्वं शास्ति॥ नैतदस्ति ज्ञापकं नियमार्थमेतत्स्यात्॥ क्रीङ्जीनां णावेवेति॥ यत्तर्हि मीनातिमिनोतिदीङां ल्यपि चेत्यत्र एज्
ग्रहणमनुवर्त्तयतीति॥ ननु प्रणिदापयतीत्यत्राप्यदाविति प्रतिषेधः स्यादिति चेन्न॥ यथोद्देशपक्षेंतरंगत्वाद्दावस्थायामेव घुसंज्ञाया निर्दे
नत्वात्॥ कार्यकालपक्षे तु घुसंज्ञाया णत्वसमानदेशतया एकं प्रति णत्वघुसंज्ञयोरसिद्धत्वेन प्रागेव प्रवृत्तौ घुसंज्ञा न स्यादिति दोषः प्र
सजत्येव॥ अत एव भाष्ये द्वेधा समाहितं॥ दाधाघ्वपिदिति वक्ष्यामि॥ यद्वा बांतावेतौ धातू सूत्रमपि बांतं॥ चर्त्वेन सर्वत्र पकारो निर्दिष्टः अतो
दापयतीत्यत्र नासौ निषेधः तस्यापित्वाद् बांतत्वाच्चेति॥ आद्यंतवदेकस्मिन्॥ असहाये आद्याविवांत इव कार्याणि स्युः॥ औपगवः॥ य
था तव्यादीनां प्रत्ययाद्युदात्तत्वं प्रवर्त्तते॥ एवमिहाणोपि आभ्यां॥ यथा वृक्षाभ्यामित्यादौ सुपि चेति दीर्घत्वं भवति एवमिहापि। ईङ्गतौ॥ दि
वादिः॥ एयं अचो यदिति॥ अजंताद्धातोर्विधीयमानो यत्प्रत्ययो यथा चेयं जेयमित्यादौ भवति तथेहापि॥ इणस्तु एतिस्तुवितिक्यपि इ
त्यमित्येव रूपं न तु एयमिति॥ एकस्मिन्निति किं॥ सभासन्नयने भवः साभासन्नयनः॥ अत्रत्याकारस्यादित्वसतितमेवाश्रित्य सभास
न्नयनशब्दस्य वृद्धत्वं स्यात्॥ ततश्चाणं बाधित्वा वृद्धाच्छः प्रसज्येत॥ ननु वृद्धिर्यस्याचामादिरिति सूत्रे आदिग्रहणस्यापीदमेव व्या
वर्त्यं॥ न तत्सामर्थ्यादेव सभासन्नयनशब्दे वृद्धसंज्ञा न भविष्यतीति चेन्न॥ यदि हि वृद्धसंज्ञासूत्रे आदिग्रहणसामर्थ्यादनातिदेशिक
स्य मुख्यस्यैवादेर्ग्रहणं नर्हि जानातीति ज्ञा ब्राह्मणीत्यादिरसहायोपि वृद्धो न स्यात्॥ ततश्च ज्ञाया अयं ज्ञीयइत्यादि न सिद्ध्येत्॥ असति
हि प्रकृतसूत्रस्यैकग्रहणे यत्रादिव्यपदेशो मुख्यो नास्ति॥ असहाये मध्ये अंते च ससर्वोप्यविशेषादतिदेशस्य विषयः स्यात्॥ यदि त्वति
देशसामर्थ्याज्ज्ञाशब्दे वृद्धत्वं तर्ह्यविशेषात्सभासन्नयनेपि स्यात्॥ वृद्धसंज्ञायामादिग्रहणं तर्हि व्यर्थमेवेति चेत्॥ हं नैवमतिदेशस्यादि

ग्रहणस्य च सामर्थ्यात् सर्वत्र विकल्पापत्तिः॥ इहैकग्रहणेकृते त्वन्त्यमध्ययोर्व्यावृत्त्या वृद्धसंज्ञायामादिग्रहणं सार्थकमिति दिक्॥ यत्तु न्या
सकृतोक्तम्॥ अतिदेशसूत्रे एकग्रहणाभावे वृद्धसंज्ञासूत्रस्थमादिग्रहणमनातिदेशिकप्रतिपत्त्यर्थं सद् सहायानां ज्ञादीनामेव वृद्धसंज्ञां
वारयेन्न तु सभासन्नयनस्य सन्नयनेत्येतदंतर्गतांश्च तुरोचोपेस्यानातिदेशिकस्यादित्वस्य तत्र सत्त्वादिति॥ तच्चिंत्यम्॥ परस्मिन्नसति
यस्मात् पूर्वं नास्ति स आदिरिति सिद्धांतरीत्या मध्यस्थेप्यादित्वविरहात्॥ इयानेव हि विशेषः॥ असहायेसत्यन्तेविशेषणविरहाद्धि वि
शेषाभावः मध्यस्थे तु विशेष्याभावाद्धि विशिष्टाभाव इति॥ वार्त्तिककारस्तु लाघवादपूर्वत्वमात्रमादिशब्दस्य प्रवृत्तिनिमित्तम्॥ अनुत्तरत्व
मात्रं चांतशब्दस्य न तु सत्यन्यस्मिन् इत्यपि विशेषणं गौरवात्॥ तथा चासहायेपि मुख्ययोरेवाद्यंतयोः संभव इति मन्वानः सूत्रमेतत् प्रत्या
चख्यौ॥ आह च॥ अपूर्वानुत्तरलक्षणत्वादाद्यंतयोः सिद्धमेकस्मिन्निति भाष्यकारस्तु नैतन्मेने। सत्यन्यस्मिन्निति विशेषणप्रक्षेपप्रयुक्त
स्य गौरवस्य प्रामाणिकत्वात्॥ लोके ह्ययमादिरंतो वेत्युक्ते अवशिष्टमपि किंचित् अस्तीति नियमेन प्रतीयते॥ यद्यान्नियतोपस्थितिश्च
शक्तिसाध्या॥ अनुभवमपलप्य एकदेशमात्रे शक्तिकल्पने तु श्वशुरादिपदानामपि लाघवाज्ज्ञायात्वमात्रं पितृत्वमात्रं तद्विदकपुंस्त्वमात्रं वाश
क्यतावच्छेदकं स्यादिति विशिष्टविषयकशक्त्युच्छेदेन सकलशिष्टव्यवहारव्याकोपः स्यादिति॥ नन्वेवमपि व्यपदेशिवद्वचनं कर्त्तव्यमेव
इयाय आरेत्यादौ धात्ववयवत्वं प्राथम्यमेकाच्त्वं चाश्रित्य द्वित्वं यथा स्यात्॥ एकाच इति हि बहुव्रीहिरिति वक्ष्यते॥ नचेणोवृञ्याया दे
शयोरत्तैश्चारपरत्वेन कृते आप आर् इत्यनयोरेकाच्त्वं यथादेरिव मुख्यमेवास्तीति वाच्यम्॥ द्विर्वचनेचीति रूपातिदेशेन इकः अनयोरेव द्वि
रुक्तेः॥ किंच॥ यजेः पंचमलकारे सदेवान्यक्षदिषितो यजीयानीत्यादौ सिब्बहुलं लेटीति सिप्॥ तस्य षत्त्वं व्यपदेशिवद्भावेनैव साध्यं प्र

प्रा॰कौ॰ त्यपस्य यः सकारस्तस्य षत्वमिति सिद्धांतात्॥ तस्मात् व्यपदेशिवदेकस्मिन्नित्येव सूत्र्यतां किं प्रकृतसूत्रेण॥ व्यपदेशो नाम विशिष्टो मु॰
८० ख्योपदेशो व्यवहार एकाच् इत्यादिः सोऽस्यास्तीति व्यपदेशी पचिप्रभृतिस्तस्मिन्निवासहायेऽपि कार्यं स्यादित्यर्थः॥ अत्राह भाष्यकारः
॥ अवचनाल्लोकविज्ञानात् सिद्धमिति॥ वचननिरपेक्षाल्लोकव्यवहारादेव व्यपदेशिवद्भावसिद्धेराद्यंतवदिति व्यपदेशिवदिति चोभयम
पि न सूत्रयितव्यमित्यर्थः॥ अस्ति हि लोके निरूढोऽयं व्यवहारः॥ अयमेव मे ज्येष्ठः पुत्रोऽयमेव मध्यमोऽयमेव कनिष्ठ इति॥ तथा। असूता
यामसोष्यमाणायां च प्रथमगर्भेण हतेति व्यवहरंति॥ तथा पूर्वमनागतोऽग्रे नाजिगमिषुश्चाह॥ इदं मे प्रथमागमनमिति॥ ननु सर्व इमे
गौणा व्यवहारास्तत्कथं मुख्ये चरितार्थे शास्त्रं गौणे प्रवर्त्तेतेति चेन्न॥ निरूढतरतया गौणस्याप्यस्य मुख्यसमकक्षत्वात्॥ ज्ञापकाच्च
॥ यदयमिटई दीति सिचो लोपं शास्ति तद्ज्ञापयति॥ व्यपदेशिवदेकस्मिन्निति॥ न ह्यन्यथा इट् लभ्यते॥ वलरूपत्वेऽपि वलादित्वविर
हात्॥ तथा दीर्घ इणः किति इत्यादीन्यपि ज्ञापकानि न हि व्यपदेशिवद्भावं विना इणोऽभ्यासो लभ्येत इति दिक्॥ यत्तूक्तं कैयटेन॥ अर्थ
वता व्यपदेशिवद्भावात् कुरुते इत्यादौ तच्छब्दाकारस्यानर्थकत्वेन तत्र टिसंज्ञासिद्धये आदिवद्भावो वचनेनैव साधीय इति॥ अत्रेदं
वक्तव्यम्॥ अर्थवता व्यपदेशिवद्भाव इति तावन्नेयं परिभाषा तस्या विध्यंगत्वात्॥ व्यपदेशिवद्भावस्तु लौकिक इत्युक्तत्वात् तत्प्रत्यंगत्वा
योगात्॥ किंतु शास्त्रे व्यपदेशिवद्भावयोजनाय शब्दार्थसमुदायमाश्रित्य तस्यैकदेशः शब्द इति व्युत्पादयितुमर्थवतापेक्षितेति परं
तस्याशयः॥ अत एव षष्ठे निजो चत्वार एकाच इत्येतद्व्युत्पादनावसरे भाष्यकैयटयोरनर्थकेनापि व्यपदेशिवद्भावः स्वीकृतः लोक इ राम
व शास्त्रेऽप्यनर्थकस्य व्यपदेशिवद्भावसंभवात्॥ तस्मादर्थवतेति प्रायोवादमात्रं सूत्रप्रत्याख्यानं तु सम्यगेवेति दिक्॥ तरप्तमपौ घः॥ ८०

एतौ घसंज्ञौ स्तः कुमारितरा॥ कुमारितमा॥ घरूपेति ह्रस्वः॥ नद्यास्तरो नदीतर इत्यत्र तु न भवति॥ तमपा साहचर्येण प्रत्ययस्यैव तरपो
ग्रहणात्॥ यद्यप्यातरविति रूपं संज्ञाप्रवृत्तावाश्रितं तच्च परिनिष्ठिते प्रयोगे क्वापि नास्तीत्यौपदेशिकं गृह्यते तच्च तरप्प्रत्ययस्यैवास्ति॥ अपि च
प्रतिपदोक्तत्वमपीह सुलभं॥ तेनावयवशो व्युत्पादितेन नदीतरेणातिप्रसंगः॥ किं च॥ समानाधिकरणे स्त्रीलिंगे परे ह्रस्वत्वं विधीयते॥ अ
न्यथा महिषीव रूपं महिषीरूपमित्यत्रापि स्यात्॥ सुप्सुपेति समासः॥ रूपमाकृतिः महिषीवेयमाकृतिरित्यर्थः॥ सामानाधिकरण्यं स्त्री
त्वे च स्वार्थिकत्वादातिशायनिकस्य स्तो न तु नदीतरे ऽतो नोक्तदोषः॥ नन्वातिशायनिकप्रकरण एव तादीघ इति पितौ घ इति वा क्रियतां
लाघवादिति चेन्न॥ प्रकरणोत्कर्षेणेह संज्ञाकरणस्यान्योपि तरबस्तीति ज्ञापनार्थत्वात्॥ स चानिर्दिष्टार्थत्वात् स्वार्थे भवति॥ तेनाल्पा
च्तरं लोपश्च बलवत्तर इत्यादि सिद्धं॥ केचित्तु सामान्यापेक्षं ज्ञापकमाश्रित्य ईयसुनोपि स्वार्थिकतामाहुः॥ तेनाहों महीयस्तव साहसि
क्यमित्यादि प्रयोगाः समर्थिता भवंति॥ बहुगणवतुडति संख्या॥ एते संख्यासंज्ञाः स्युः॥ बहुकृत्वः संख्यायाः क्रियाभ्यावृत्तिगणने
कृत्वसुच्॥ बहुधा संख्याया विधार्थे धा बहुभिः क्रीतो बहुकः॥ संख्याया अतिशदंतायाः कन् बहुशः बह्वल्पार्थाच्छस्कारकादित्यनुवर्त्त
माने संख्यैकवचनाच्च वीप्सायामिति शस्॥ गणकृत्वः॥ गणधा गणकः॥ गणशः॥ तावत्कृत्वः॥ तावद्धा तावत्कः तावच्छः॥ यत्तदेते
भ्यः परिमाणे वतुप्॥ आ सर्वनाम्नः शेषं प्राग्वत्॥ कतिकृत्वः॥ कतिधा कतिशः किमः संख्यापरिमाणे डति च॥ शेषं प्राग्वत्॥ स्यादेत
त्॥ वैपुल्येपि बहुशब्दो वर्त्तते॥ बहुर्हिमवानिति संघे च गणशब्दः भिक्षुकाणां गण इति। समवायश्चयो गण इत्यमरः॥ तथा च संघ
वैपुल्यवाचिनोरप्यनयोः संख्यासंज्ञा स्यादिति चेन्न संख्यापतेन यत्यन्वर्थसंज्ञाविज्ञानात्॥ तस्मात् संख्यावाचिनो रेव बहुगणशा
।

प्रा॰ कौ॰ ब्दयोरिह ग्रहणं तच्च नियमार्थं॥ अनियतबहुत्ववाचिनां मध्ये नयोरेव संख्यासंज्ञा न तु भूर्यादीनामिति॥ तेनाबहुविषययोर्द्व्येकयोर्नियतबहु
८१ त्ववाचिनां त्र्यादीनां च न व्यावृत्तिः॥ ननु नियमार्थत्वे सिद्धे सजातीयापेक्षत्वान्नियमस्य तदुक्ता व्यवस्था सिध्येत्। नियमार्थत्वमेव तु दुरुप-
पादं॥ विध्यर्थताया एवौचित्यात्॥ तथाहि॥ अस्ति तावत् कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति परिभाषा सा च न्यायमूला संज्ञा
सूत्रेण संज्ञिविशेषे नियम्यमानो हि संज्ञाशब्दः कथं तदितरं बोधयेत॥ एवं स्थिते बहुगणयोरिह ग्रहणाभावे संख्याप्रदेशेषु ग्रहणमेव न
स्यात्॥ अकृत्रिमत्वात्॥ तस्मात्स्वसंग्रहार्थमेव बहुगणग्रहणं न तु भूर्यादिनिवृत्त्यर्थमिति॥ अत्राहुः॥ संज्ञिविशेषे क्रियमाणः संज्ञानियमो यदि
सामान्यापेक्षस्तदा युक्ताऽकृत्रिमस्य व्यावृत्तिः विशेषपरत्वे तु सजातीयं कृत्रिमान्तरमेव नियमेन व्यावृत्त्यते न त्वकृत्रिममपि। तदेतदुच्यते।
उभयगतिरिह शास्त्रे भवतीति। कृत्रिमाकृत्रिमयोरुभयोरपि ग्रहणमित्यर्थः॥ अस्ति च संख्याप्रदेशेषूभयग्रहणे लिंगं संख्याया अतिश
दन्तायाः कन्निति सूत्रे शदन्तपर्युदासः॥ नहि कृत्रिमा संख्या शदन्तास्तीति दिक्॥ तेन पंचधा पंचकृत्व इत्यादि सिद्धं भवति॥ यद्यपि संज्ञाविधौ
प्रत्ययग्रहणे तदन्तग्रहणं नास्ति तथापि वतुडत्योः केवलयोः संज्ञायां प्रयोजनाभावात् सामर्थ्यात्तदन्तग्रहणं॥ तद्धितविधौ हि ङ्याप्प्रातिप
दिकादित्यधिकृतं न च केवलस्य प्रत्ययस्य प्रातिपदिकत्वमस्तीति बोध्यम्॥ एतच्च सूत्रे भाष्ये प्रत्याख्यातं॥ बहुपूगगणसंघस्य तिथुक्॥ व
तोरिथुक्॥ षट्कतिकतिपयचतुरां थुगिति सूत्रे डटि परे आगमा विधीयमाना बहुप्रभृतीनां डटो निर्वाहकं संख्यात्वं ज्ञापयंतीति किमने
नसूत्रेण॥ ननु बहुपूगगणसंघेत्यादौ विशेषाश्रयणात् संघवैपुल्यवाचिनोरपि बहुगणशब्दयोः संख्याकार्यं स्यादिति चेन्न॥ अनि राम
यतसंख्यावाचिनांमध्ये नयोः संख्याकार्यं भवतीत्येतावन्मात्रज्ञापनेन चरितार्थत्वे सति सर्वथा संख्यामप्रतिपादयतोरपि संख्याकार्य ८१

कल्पनस्यगौरवपरास्तत्वात्॥ भूर्यादीनांत्वनियतसंख्यावाचिनांग्रहणंनभवतिनियतसंख्यावाचिनांपञ्चादीनामेवलोकेसंख्याशब्द
त्वेनप्रसिद्धतरत्वात्॥प्रसिद्धाप्रसिद्धयोः प्रसिद्धग्रहणस्यन्याय्यत्वात्॥नन्वेवमपिबहुगणयोरिवपूगसंघादीनामपिधाशसकृत्वसुना
दिसंख्याकार्यप्रसंगः॥नचबहुगणयोःसामान्यापेक्षंज्ञापकंपूगादीनांतुडट्विषयकमेवेतिवाच्यम्॥अनुपपत्तेःसमानत्वेनएकसूत्रोपा
त्तत्वेनचवैषम्येबीजाभावादितिचेत्॥ मैवं॥लक्ष्यानुरोधेनक्वचित्सामान्यापेक्षंक्वचिद्विशेषापेक्षंज्ञापकमित्याश्रयणात्तदनुरो
धेनवैरूप्यस्यसोढव्यत्वादितिदिक्॥इमांकुसृष्टिमसहमानेनैवसूत्रकृतासूत्रमिदंप्रणीतमितितुपरमार्थः॥अत्रवार्त्तिकानि॥अ
ध्यर्द्धग्रहणंचसमासकन्विध्यर्थं॥अर्द्धेनाधिकमध्यर्द्धं॥एकदेशवाचकोयमर्द्धशब्दः॥तस्याधिशब्देनसमासेकृतेयौगिकार्थः प्र
तीयतेनसंख्येतिवार्त्तिकारंभः अध्यर्द्धेनशूर्पेणक्रीतमध्यर्द्धशूर्पंदिक्संख्येइत्यनुवर्त्तमानेतद्धितार्थेतिसमासः ततः शूर्पादञन्यतरस्या
मित्यञ्ष्ठञोवाअध्यर्द्धपूर्वेतिलुक्॥अध्यर्द्धेनक्रीतमध्यर्द्धकं॥संख्यायाअतिशदन्तायाःकन्नितिकन्॥इहसमासविध्यर्थमितिसंबंधसामा
न्येषष्ठी॥समासेविधीयमानेसमासनिमित्तेवान्यस्मिन्कार्येविधीयमानइत्यर्थः॥तेनद्विगुनिमित्तोलुगपिलभ्यते॥तथांचाध्यर्द्धपूर्वेतिसू
त्रेध्यर्द्धग्रहणंनकर्त्तव्यंभवति तदुक्तंलुकिचाग्रहणमिति॥अर्द्धपूर्वपदश्चपूरणप्रत्ययांतः॥संख्येत्यनुवर्त्तते॥पूरणप्रत्ययांतइत्यस्यपूरण
प्रत्ययांतोत्तरपदइत्यर्थः॥समासकन्विध्यर्थमित्येव॥अर्द्धंपंचमंयेषामितिबहुव्रीहिः॥अर्द्धपंचमैरर्द्धाधिकैश्चतुर्भिः शूर्पैः क्रीतमर्द्धपंचम
शूर्पंपूर्ववद्ञष्ठञोवालुक्॥अर्द्धपंचमेनक्रीतमर्द्धपंचमकं॥अधिकग्रहणंचालुकिसमासोत्तरपदवृद्ध्यर्थंअधिकयाषष्ट्याक्रीतोधिक
षाष्ठिकः॥अधिकसाप्ततिकः॥ तद्धितार्थेतिसमासः॥प्राग्वतेष्ठञ्॥अलुकीतिवचनात् लुकिकर्त्तव्येसंख्यासंज्ञानास्तीतिद्विगुत्वमपिन

श॰कौ॰ तेनाध्यर्द्धपूर्वद्विगोरितिलुङ्न॥ ततःसंख्यायाःसंवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः॥ नन्वलुकीतिव्यर्थम्॥ उत्तरपदवृद्ध्यर्थमिति वचनादेवलुग
८२ भावस्याक्षेप्तुंशक्यत्वादितिचेन्न॥ अर्हत्यर्थात् परेष्वर्थेषु ये प्रत्ययास्तेषांलुगप्राप्त्यातत्रैवोत्तरपदवृद्धेःसावकाशत्वात्॥ ष्णांतापट्॥ षांत
नांताचसंख्याषट्संज्ञास्यात्॥ षट्तिष्ठंतिषट्पश्य पञ्चसप्तेत्यादि॥ संख्येतिकिम्॥ विप्रुषः पामानः॥ ननुशतानिसहस्राणीत्यत्रनुमिकृ
तेनस्य पूर्वभक्ततयानांतासंख्येतिषट्संज्ञास्यादितिचेत्॥ अस्तु॥ नचैवंषड्भ्योलुगितिलुक्स्यादितिवाच्यम्॥ सर्वनामस्थानसन्निपाते
नकृतस्यनुमः तद्विघातकत्वात्॥ नन्वेवमप्यष्टानामितिनसिध्यति॥ तथाहि॥ अष्टन् आमितिस्थितेपरत्वान्नित्यत्वाच्चाष्टनआविभक्ता
वित्यात्वेकृतेःनांतत्वात्संज्ञायामसत्यांषट्चतुर्भ्यश्चेतिनुट् नप्राप्नोतीतिचेन्न॥ यथोद्देशपक्षेआत्वात्प्रागेवषट्संज्ञा॥ अंतरंगत्वात्॥ त
नः कृतेप्यात्वेएकदेशविकृतस्यानन्यतयाषट्संज्ञकत्वेननुटःसिद्धत्वात्॥ कार्यकालपक्षेतत्र्युक्तदोषस्तदवस्थएव॥ किंच॥ यथोद्देशेप्य
ल्विधित्वादतिदेशोदुर्लभः॥ अतएववव्रश्चेत्यचःपरस्मिन्नित्यस्यफलमितिकैयटइतिचेन्न॥ अष्टनोदीर्घादितिदीर्घग्रहणेनकृतात्वस्या
पिषट्संज्ञाज्ञापनात्॥ तथाहि॥ त्रेःसंख्याया इत्याद्युदात्तत्वंबाधित्वाघृतादिपाठादंतोदात्तोष्टन्शब्दःसाधितः॥ तस्माद्भिसि अष्टभिर
ष्टाभिरितिरूपद्वयंतत्रात्वाभावेमध्योदात्तमात्वपक्षेत्वंतोदात्तत्वमितिसिद्धांतः॥ तत्रषट्त्रिचतुर्भ्योहलादिरितिसूत्रेणषण्णांषड्भिरित्या
दाविवविभक्तेरुदात्तत्वंशासंतद्बाधित्वाझल्युपोत्तममिति प्राप्तंषट्त्रिचतुर्भ्योयाझलादिर्विभक्तिस्तदंतेपदेउपोत्तममुदात्तंभवतीतिहितस्या
र्थः॥ तद्बाधनायाष्टनोदीर्घादित्यारभ्यते॥ दीर्घांतादष्टनः परासर्वनामस्थानंविभक्तिरुदात्ताभवतीतिसूत्रार्थः॥ तत्रयद्यात्वपक्षेषट्संज्ञा राम॰
नस्यात्॥ तर्हिसावकाशोष्टनःस्वरःपरत्वादात्वाभावपक्षेझल्युपोत्तममिति षट्स्वरेणबाधिष्यतइतिकिंदीर्घग्रहणेन। कृतात्वस्यापिषट् ८२

संज्ञायां सत्यां तु षट्स्वरस्याष्टनः स्वरोपवादः संपद्यते॥ न चाष्टनः स्वरः शसि सावकाश इति वाच्यं॥ तत्रैकादेश उदात्त इति सूत्रेणैव गतार्थ-
त्वात्॥ अष्टनशब्दोऽन्तोदात्त इति समनंतरमेवोक्तत्वात्॥ तेन दीर्घपक्ष इव तदभावपक्षेऽपि विभक्तेरुदात्तता स्यादिति तद्वारणार्थं क्रियमा-
णं दीर्घग्रहणं सार्थकमेव॥ तस्माद्दीर्घग्रहणेनात्वपक्षेऽपि षट्संज्ञा ज्ञाप्यत इति स्थितम्॥ न चैवं दीर्घग्रहणस्यात्वविकल्पज्ञापकत्वं न
स्यादिति वाच्यम्॥ उभयज्ञापकत्वसंभवात्॥ न ह्येकेनैकमेव ज्ञाप्यत इति नियमः॥ यावता विनानुपपत्तिस्तावतो ज्ञाप्यत्वात्॥ तच्चैकम-
नेकं वेत्यन्यदेतत्॥ प्रकृते चोभयं विना दीर्घग्रहणवैयर्थ्यानुद्धारादिति दिक्॥ यदि तु ष्णाः षकारनकाराकारा अंते यस्याः सा ष्णांतेति प्रकृ-
त सूत्रस्य आकारोऽपि प्रश्लिष्येत तदा ह्वाभ्यामित्यत्र षट्त्रिचतुर्भ्यो हलादिरिति विभक्तेरुदात्तत्वं स्यात्॥ आह्वाभ्यां हरिभ्यामिंद्र याही-
त्यादौ आद्युदात्तमेव तु ह्वाभ्यामिति पदं पठ्यते तस्मादिह्नाकारप्रश्लेषो न वर्णनीयः किंतूक्तप्रकार एवादर्त्तव्य इति स्थितम्॥ तथा सप्तमे
योगविभागं कृत्वा न ह्रले नापि द्वेधा भाष्ये समाहितम्॥ तथाहि॥ षड्भ्यो लुगित्यत्र षड्भ्य इति विभज्यते अष्टाभ्य औशिति सूत्रादष्टाभ्य इ-
त्यनुवर्त्तते॥ तेन षड्भ्यो यदुक्तं कृताकारादष्टनोऽपि तत्स्यादिति सूत्रार्थः॥ न चैवं जश्शसोर्लुगप्यतिदिश्येतेति वाच्यम्॥ औश्त्वविधिवैय-
र्थ्यापत्तेः॥ अथवाष्टन आ विभक्तावित्यस्मादनंतरं राय इति योगं विभज्य हलीत्युभयोर्योगयोः शेषो व्याख्येयः॥ तेनाष्टानामित्यत्र नुटः पश्चा-
देशात्वं न तु प्राक्॥ न चैवं जश्शसोरात्वं न स्यादिति वाच्यम्॥ लाघवार्थमष्टभ्य इति निर्देष्टव्ये अष्टाभ्य औशिति कृतात्वनिर्देशेन जश्शसोर्विष-
ये आत्वानुमानात्॥ यत्रात्वं तत्रैवौश्त्वं यथा स्यादित्येवदर्थं हि तत्र दीर्घोच्चारणं कृतमिति॥ स्यादेतत्॥ हलीति यद्युभयोः शेषस्तर्हि प्रिया-
ष्टन्शब्दे औजसमौट्शस्टाङेङसिङसोसाम्ङ्योस्सु वैकल्पिकतयेष्यमाणमात्वं न सिद्ध्येत्॥ न च तत्रात्वं नेष्यत एवेति वाच्यम्॥ इतः प्राची

नपक्षाणामतिव्याप्तिप्रसंगात्॥ तेषुत्वात्वंप्राप्यतएवविभक्तिमात्रेनहिविधानात्॥ नचषड्भ्योलुक्षट्चतुर्भ्यश्चेतिसूत्राभ्यांविधीयमानौलु
ग्लुटौयथागौणतायांनस्तस्तथात्वमपिनस्यादेवेतिवाच्यम्॥ वैषम्यात्॥ लुग्लुटोर्विधौहिषड्भ्यइतिषट्चतुर्भ्यइति बहुवचननिर्देशात् ष
डर्थप्राधान्यएवतौप्रवर्त्तेते॥ आत्वविधौतु अष्टनइत्येकवचननिर्देशात् गौणेपिप्रियाष्टाभ्यामित्यात्वंप्रवर्त्तनएव॥ पदांगाधिकारेतस्यतदुत्त
रपदस्यचेतिवक्ष्यमाणत्वात्॥ नचजश्शसोरष्टाभ्यऔशितिकृतात्वनिर्देशेनानुमीयमानमात्वंकेवलेप्राधान्येचाष्टौपरमाष्टावित्यत्रयथा
भवत्येवंगौणत्वेपिभविष्यतीतितद्दशेनानुपपत्तिरितिवाच्यं॥ औश्त्वंहिलुग्लुगिवगौणत्वेनभवति॥ अष्टाभ्यइतिबहुवचननिर्देशात्
अन्यथाहिकृतात्वानुकरणेपिएकवचनेनैवनिर्दिशेत्॥ अष्टाऔशिति॥ अष्टइतिवास्पष्टंचैतदिहैवसूत्रेभाष्यकैयटयोः॥ तथाचौश्त्वविधौ
कृतात्वनिर्देशबलेनानुमीयमानमात्वमपिप्राधान्यएवस्यान्नतुगौणतायामितितद्दशेप्यनुपपत्तिसाम्यात्॥ तस्माद्धलीत्युभयशेषश्चे
न्नस्यादात्वंप्रियाष्टनना टाङेङसिङसोसाम्सुतथैवौजसमौड्शस्सि॥ प्रागुक्तेषुतुपक्षेषुभवेदात्वममीष्वपि॥ फलभेदेमहत्येवंकथंपक्ष
विकल्पनात्॥ अत्रोच्यते॥ प्रियाष्टन्शब्दस्याजादावात्वमनिष्टमेवहलीत्युभयोःशेषस्यभाष्यएवसिद्धांतितत्वात्। तथासतिऔजसोःक्रमेणप्रि
याष्टौप्रियाष्टानइत्येवरूपंस्यान्नतुप्रियाष्टौप्रियाष्टाइत्यपिइत्याशंक्ययथालक्षणमप्रयुक्तेइत्यभिहितत्वाच्च॥ अतएवयथालक्षणमिति
प्रतीकमुपादायनभवत्येवात्रात्वमित्यर्थइतिकैयटोव्याख्यत्॥ एवंस्थितेप्राचीनाःपक्षाअपरितोषग्रस्ताएवव्यवस्थितविभाषयागौणता
यामजादिष्वात्वंनभवतीत्याशयेनवायोज्याः॥ उदाहृतभाष्यकैयटप्रामाण्यात्॥ तस्मात्प्रियाष्टनःसर्वेषुवचनेषुराजन्शब्दसाधारणंरू
पंहलादौतुहाहाशब्दसाधारणमपरंरूपं॥ औश्लुटोस्तुप्राप्तिरेवनास्तीतिप्रामाणिकःपंथाः॥ अतएवसर्वादीनिसर्वनामानीतिसूत्रेहरदत्ते

नगौणत्वे औश् न भवतीति स्पष्टमेवाभिहितं॥ अत एवाष्टाभ्य औशिति सूत्रे नदंतग्रहणमत्रेष्यते॥ परमाष्टाविस्युक्त्वा प्रियाष्टान इत्यत्रात्वस्या
भावादौश्न भवतीति काशिका संगच्छते॥ अत एव चानष्टन आ विभक्ताविति सूत्रे तदंतविधिश्चात्रेष्यते प्रियाअष्टौ यस्य प्रियाष्टा इत्यपि य॰
था स्यादिति काशिकाग्रंथोपि संगच्छते॥ हलादावात्वस्य निर्बाधत्वात्॥ हरदत्तस्त्वष्टाभ्य औशिति सूत्रे प्रियाष्टान इत्यत्रेति वृत्तिग्रंथमुपादाय
यथाश्रुनगौणाताभ्यामात्वं न भवति तथा तद्धि धावेव वस्य तदिति प्रतिज्ञाय अष्टन आ विभक्ताविति सूत्रे एकवचननिर्देशात्स्वरूपस्य ग्रहणं
नार्थस्य तेनोपसर्जनेप्यष्टनि भवति॥ तत्रापि विकल्पितत्वात्॥ प्रियाष्टानौ प्रियाष्टान इत्यपि भवति॥ तत्राप्यात्वपक्षे भसंज्ञाविषये आतो लो
पमिच्छंति॥ प्रियाष्टः पश्येत्यादि आत्वाभावपक्षेप्यल्लोपे ष्टुत्वं प्रियाष्ट इति भवति इत्यं तेन ग्रंथेन पूर्वप्रतिज्ञातार्थविपरीतं भाष्यवृत्त्यादिविरुद्धं
चकथमभिहितवानिति तस्याशयः स एव प्रष्टव्यः॥ अल्लोपे ष्टुत्वमित्यपि तदुक्तिश्चिंत्यैव॥ पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावे नष्टुत्वा
योगात्। न च पूर्वत्रासिद्धीयेन स्थानिवदिति निषेधः। तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति सापवादत्वात्। ननु रषाभ्यां णो न इति प्रतिपदोक्तं णत्वं तत्र गृ॰
ह्यते न तु ष्टुत्वविधिलभ्यमपि। विलंबितप्रतीतिकत्वादिति चेन्न। अपदांतस्य मूर्धन्य इति सूत्रं संपूर्णं रषाभ्यामिति सूत्रेनुवर्त्यते न त्वस्य णग्रहणस्य पदांत॰
स्येति निषेधसूत्रस्य च भाष्ये प्रत्याख्यातत्वात्॥ यथोत्तरं मुनीनां प्रामाण्यात्। न च मूर्धन्यशब्देन ष्टुशब्देन वा निर्वर्त्यमानेन णकारे वैषम्यमस्ति सूत्रकारीत्याक
थंचित्संभवन्नपि न्यायोत्र भाष्यानुरोधात्त्याज्य एव॥ तथा च शर्पूर्वाः खय इति सूत्रे खर्पूर्वग्रहणं कर्तव्यमिति वार्त्तिकं प्रत्याचक्षाणो भगवानाह। अभ्यासजश्त्वचर्त्वं
सिद्धमित्येवमेतत्तु ग्रहणं न कर्तव्यमिति। तथा च हलादिः शेषे कर्तव्ये तु कश्चुत्वेन निष्पन्नस्य चकारस्यापि चर्त्वेन सिद्धत्वाउच्चिच्छिषतीति रूपं सिद्धमि·
तितदाशयः कैयटेन वर्णितः। तदेवं प्रियाष्टन् इत्याद्युक्तरूपमुचितं॥ न चैवं पूष्ण इत्यादावपि नलोप एव पठ्येतेति वाच्यं। तत्राट्कुप्वाङिति सूत्रेण णत्वप्रवृत्तेरिति दिक्॥

इतिच॥ डत्यन्तासंख्याषट्संज्ञास्यात्॥ कतिसंतिकत्यप्राक्षीः षट्त्वाज्जशशसोर्लुक्॥ संख्येतिकिं॥ पातेर्डतिः पतयः॥ नचास्य संज्ञापि स्या
दितिवाच्यम्॥ वतुसाहचर्येणतत्रतद्धितस्यैवग्रहणात्॥ इदंसूत्रंप्रत्याख्यातंभाष्ये॥ बहुगणवतुसंख्या इति संख्येत्यनुवर्त्तते॥ ततः ष्णां
ताषट् संख्याडती त्युभयमनुवर्त्तते॥ पूर्वसूत्रेप्यन्वर्थसंज्ञाविज्ञानात्॥ संख्याप्रश्नविषयस्यैवडतेर्ग्रहणंनत्वौणादिकस्येति॥ क्तक्तवतू नि
ष्ठा॥ एतौनिष्ठासंज्ञौस्तः। कृतः कृतवान्॥ ननुविहितयोः प्रत्यययोरनेनसंज्ञासंज्ञयाचविधानं॥ वक्ष्यतिहितृतीये। निष्ठेति॥ तथाचान्योन्या
श्रय इतिचेन्न॥ सूत्रशाटकवद्भाविसंज्ञाविज्ञानात्॥ तौभूतेकालेभवतोययोर्विहितयोर्निष्ठेत्येषासंज्ञाभविष्यतीति॥ स्यादेतत्॥ अनुबं
धाः कार्यार्थमुपादीयंते नतुश्रवणार्थं तेषांलोपविधानात्॥ तथाचलुप्तानुबंधस्यपरिनिष्ठितस्ययत्रसारूप्यंतत्रक्कानुबंधकार्यंभवतु
कवानेतितुनिश्चेतुमशक्यं। नचकाकादिवदुपलक्षणस्यापिव्यावर्त्तकताभविष्यतीतिवाच्यम्॥ काकादिनापिहिवेदिकापुंडरीकादि कं
स्थिरंकिंचित्परिचाय्यतेतद्दूलाचोड्डीनेपिकाकेव्यवहारोनसंकीर्यते॥ नचेहपरिचेयांतरमुपलभ्यते क्तप्रत्ययतत्प्रत्यययोः काकादि
कल्पौहिककारनकारौतदपगमेसंवृत्तेत इत्यत्रपरिचेयस्यपरस्परव्यावृत्तस्यदुर्वचत्वात् इति। अत्राहुः कालकारकविशेषाद्यो अर्थो
एवात्रवेदिकापुंडरीकादिस्थानापन्नास्तद्दर्शनाच्चानुबंधस्मृतौसत्यांनत्तत्प्रयुक्तंकार्यंसाधुतयाज्ञायते॥ तथाल्लूनः शालिरिति के
नचित्प्रयुक्तेलक्षणज्ञेनकर्मभूतकालवलात् क्तप्रत्ययोयमितिनिर्णीयते॥ लोत्तमालभेतेतिप्रयुक्तेतुमेषवाचीलोतशब्दस्तन्प्र
त्ययांतः प्रयुक्तः इतिनिर्णीयते। हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्नित्युणादिसूत्रात्॥ लोतः स्यादश्वचिन्हयोरितितुपंचपादी राम
वृत्तौस्थितं॥ तथाप्राभिन्नघटेदेवदत्तइतिप्रयोगेकर्त्रेकत्वाद्यवगमात्तु डं तस्यायंप्रयोगोनतुनिष्ठांतस्येतिनिर्णीयते॥ स्यादेतत्॥ ८४

अंजिघृसिभ्यः क्तः इति क्तप्रत्यये अक्तं घृतं सितमिति ञ्नुत्सादितं॥ तत्रापि निष्ठासंज्ञा स्यात्॥ ततश्च निष्ठा च द्व्यजनादिति स्वरः स्यात्॥ निष्ठांतं द्व्य
ज्कं संज्ञायामाद्युदात्तं स्यात् स चेदादिराकारो नेति सूत्रार्थः। न चेष्टापत्तिः। घृतं मिमिक्षत इत्यादावंतोदात्तस्यैव पठ्यमानत्वादिति॥ अत्राहुः॥ अतः
कृकमीति सूत्रे कमिग्रहणेनैव सिद्धे कंसग्रहणेन ज्ञापितमुणादयः क्वचिद्व्युत्पत्तिकार्यं न लभंत इति॥ अतो नात्र निष्ठासंज्ञेति॥ यद्वा घृतादीनां
चेति फिट्सूत्रेण सिद्धम्॥ ॥ इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे पंचममाह्निकम्॥ ॥ ॥ सर्वादीनि सर्वनामानि ॥ एतानि
सर्वनामसंज्ञानि स्युः॥ तद्गुणसंविज्ञानोऽयं बहुव्रीहिः॥ तस्यान्यपदार्थस्य गुणानां वर्त्तिपदार्थरूपाणां विशेषणानां कार्यान्वयितया संविज्ञानं यत्र
स तद्गुणसंविज्ञानः॥ तत्र सर्व आदिर्येषां तानीति विग्रहः॥ तच्छब्दप्रयोगेणान्यपदार्थप्राधान्यं लभ्यते॥ एवं चित्रा गावो यस्य स इत्यादावपि॥
अन्यथा हि यस्य गावश्चित्रा इति गोशब्दार्थप्राधान्यं स्यात्॥ न चैवंविधेऽर्थे बहुव्रीहिरिष्यते॥ यत्तु वृत्तिवाक्ययोर्विशेष्यैक्यसंपत्तये चित्राणां
गवामयमित्यादिविग्रहवर्णनं मीमांसावार्त्तिके कृतं॥ तत्तु न मुनिवचसामनुकूलं॥ अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति वार्त्तिककृता वक्ष्यमाण
त्वात्॥ भाष्यकृता च शेषो बहुव्रीहिरिति सूत्रे त्रिकतः शेषमाश्रित्य सूत्राक्षरैरेवोक्तस्यार्थस्य साधितत्वात्॥ द्वितीया श्रितातीतादिभिस्तृती
या तत्कृतार्थेनेत्यादिक्रमेण द्विषण्णां त्रिकाणां समास उक्तस्तदपेक्षया शेषः॥ प्रथमारूपः त्रिकस्तस्यैव बहुव्रीहिसंज्ञेति दृष्टे देवे गत इत्या
दाविव चित्राणां गवामित्यस्यापि दूरापास्तं बहुव्रीहित्वम्॥ किंच। मत्वर्थे बहुव्रीहिरिति कात्यायनवचनात् कथं चित्राणां गवामित्यत्र तत्प्रसक्तिः
॥ ननु दंडीत्यादावपि दंडस्यायमिति विग्रहाभ्युपगमादस्मद्रीत्यायमेव मत्वर्थ इति चेत्तर्हि सुतरां मुनिवचनविरोधः॥ तदस्यास्त्यस्मिन्निति
सूत्रेण प्रथमांतादस्त्युपाधिकात् संबंधिनि मतुब्विधानात्॥ समर्थानां प्रथमाद्वेति सूत्रेण प्रथमनिर्दिष्टस्यैव प्रकृतित्वावधारणाच्च॥ नन्वेता

श०कौ० न्यपि सूत्रवार्त्तिकभाष्यवचांसि कथंचिद्भङ्क्त्वा नेष्याम इति चेत्॥ समर्थः पदविधिरित्यादीनि व्रीहिभिर्यजेतेत्यादिषु पदविधिभिन्नेष्वपि यो
८५ जयित्वा सामर्थ्यं च भाष्यादिसंमताद्विपरीतमेव वर्णयन् भवादृशो निरंकुशः किं किं न कुर्यात्॥ किंतु व्याकरणाधिकरणे सिद्धांतितं व्याकर
णप्रामाण्यं कथं स्वेच्छया व्याकुलयसीति परं पर्यनुयोगे समाधानं विभावय॥ तस्माच्चित्रा गावो यस्येत्येव विग्रहः सकलशिष्टसंप्रदाय
सिद्धो मुनित्रयवच—सामनुकूलश्चेति दिक्॥ आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थस्तस्य च समुदायस्य
युगपल्लक्ष्ये प्रयोगाभावादानर्थक्यात्तदंगेष्विति न्यायेन तदवयवेषु प्रवर्त्तमाना संज्ञाऽविशेषात् सर्वशब्देपि प्रवर्त्तत इति युक्तं न तद्गुण सं
विज्ञानत्वं। हलि सर्वेषामित्यादिनिर्देशश्चेह लिंगं॥ जसित्यादयः षडिति सूत्रे तु जसिति योगं विभज्य जसः संज्ञाविधानसामर्थ्यादेव तद्गु
त्यादय इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। एतेन कृततेभ्यः कृण्वादिभ्य इत्युभयत्रापि शकलशब्दसंग्रहार्थं यथा तत्पुरुषबहुव्रीह्योरेकशेष
इति चतुर्थे वक्ष्यते। तथेहापि नपुंसकमनपुंसकेनेति वा स्वरभिन्नानां यस्योत्तरः स्वरविधिः स शिष्यत इति वा तत्पुरुषबहुव्रीह्योः सहविवक्षा
या बहुव्रीहेः शेष इति परास्तं॥ तद्गुणसंविज्ञानबहुव्रीहिणैव सर्वशब्दस्यापि संग्रहे सिद्धे एकशेषाश्रयणस्य गौरवपराहतत्वात्॥ महासं
ज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं सर्वेषां नामानीति॥ तत्सामर्थ्याच्च सर्वाभिधानसामर्थ्यविशिष्टानामेव संज्ञित्वमनुमीयते॥ तथा च तथा
भूतानां गणे पाठस्यावश्यकतया प्रकारांतरजुषां च पाठे प्रमाणाभावादेव विशेषे व्यवस्थितानां संज्ञानामुपसर्जनानां च सर्वादित्वमेव नास्ति ते
नैतेषां गणकार्यं संज्ञाप्रयुक्तकार्यं चेत्युभयमपि न भवति॥ गणकार्यं यथा त्यदादीनामः॥ तद्नामकश्चित्॥ अतिक्रांतस्तमतितत्॥ त राम
थाड्डतरादिभ्यः॥ अन्यमतिक्रांतमत्यन्यम्॥ अतिकतरम्॥ संज्ञाप्रयुक्तं॥ यथा सर्वनाम्नः स्मै॥ अतिसर्वाय॥ तदेतदभिप्रेत्योक्तं वार्त्ति ८५

ककृता संज्ञोपसर्जनप्रतिषेधः पाठात् पर्युदासः पठितानां संज्ञाकरणमिति॥ तस्मात् प्रसिद्धेन प्रवृत्तिनिमित्तेन प्रयुक्त इतरं भवत्यनुपस
र्जनीभूत एवेह संज्ञीति स्थितं॥ यत्तु स्वरूपमात्राश्रयं कार्यं न तु गणपाठं संज्ञां वापेक्षते। यथा युष्मदस्मद्भ्यां ङसोऽश् इत्यादि तदुपसर्जनत्वे
ऽपि भवत्येवेत्यवधेयं॥ नचैवं युष्मत्सुपपद इत्यादावपि त्वमादिप्रसंगः॥ लोकप्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः॥ अभिव्यक्तपदार्थी ये इ
ति न्यायात्॥ तदंतग्रहणमत्र बोध्यम्॥ द्वंद्वे चेति ज्ञापकात्॥ तच्च तत्रैव वक्ष्यते॥ प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वार्त्तिकवचनाच्च
तेन परमसर्वतः परमसर्वत्र परमसर्वके इत्यत्र समस्तात्तसिल्त्रल् अकच्च सिध्यति॥ न च तसिलादिविधौ प्रातिपदिकादित्यनुवृत्तेः स
र्वनाम्नाच तद्विशेषणे तदंतविधिर्भविष्यतीति वाच्यं॥ समासप्रत्ययविधौ न तदंतविधिरिति निषेधात्॥ नचैवमतिसर्वायेत्यादावतिप्रसं
गः॥ उपसर्जनपर्युदासस्योक्तत्वात्॥ अत एव परमसर्वस्मा इत्यादौ स्मायादयो भवंत्येव। स्यादेतत्॥ असः अतस्मिन् अनेष इत्यादा
वपि अत्वसत्वस्मिन्नादीनि न स्युः॥ अतिसर्व इत्यत्रेवोपसर्जनत्वात्॥ तथा च अब्राह्मण इत्यादेर्ब्राह्मणभिन्न इत्यादिक्रमेण पूर्वपदा
र्थप्राधान्येन विवरणं कुर्वंति। सत्यं। वैयाकरणमते नञ्समासस्योत्तरपदार्थप्राधान्यमेव नञ्सूत्रे भाष्यकारेण तथैव सिद्धांतितत्वात्॥ त
थाहि॥ आरोपितत्वं नञर्थः॥ मायामनुष्यमायामृगव्याजनिशाकरकपटब्राह्मणादिशब्देभ्य इव आरोपितो मिथ्याभूतोऽयं ब्राह्मण इ
त्येवं शाब्दबोधपर्यवसाने ब्राह्मणभिन्न इत्यादिकमार्थिकार्थविवरणं न तु शाब्दोऽयमर्थः अत एव एतत्तदोरिति सूत्रे नञ्समास इति
तार्थकं। अत एव च औत्सर्गिकी तत्पुरुषस्योत्तरपदार्थप्रधानतापि निर्वहतीति दिक्॥ ननु यदीह तदंतविधिरिष्टस्तर्हि भाष्यविरोधः॥ तत्र
हि संज्ञोपसर्जनप्रतिषेध इति वार्त्तिकस्य प्रत्याख्यानमुपक्रम्यार्थद्वारकं विभक्तिविशेषणमाश्रित्यातिप्रसंग उद्धृतः सर्वनामार्थसमवेतसं

सा॰कौ॰ ८६ रव्याकारकाद्यभिधायिनोङेः स्मैस्यादित्यादिनाउक्तरीत्यातदंतविधौसतित्वतिसर्वायेत्यादौसमुदायस्यसर्वनामतयार्थद्वारकविभक्तियो
गाश्रयणेपिस्मायादिप्रसंगः तदवस्थएवस्यादितिचेत्॥ सत्यं॥ अतएवापरितोषाद्भाष्ये अथवामहतीयंसंज्ञाक्रियतइतिपक्षांतरमुपन्य
स्तमितिगृहाण॥ ननुयदीयमन्वर्थसंज्ञातर्हि पूर्वपदात्संज्ञायामगइतिणत्वंस्यादितिचेत्॥ सत्यम्॥ अतएवनिपातनाण्णत्वाभावः॥सणं
त्वंतुरूपमसाध्वेव॥ निपातनेनणत्वशास्त्रस्यबाधितत्वात्॥ अतएवशाश्वतकइत्याद्यप्यसाध्वेवयेषांचविरोधःशाश्वतिकइतिनि
पातनेनइसुसुक्तांतादित्यस्यबाधितत्वात्॥ नन्वेवमपरस्पराःक्रियासातत्यइतिनिपातनेनसंततशब्दोबाध्येतेतिचेन्न॥ नत्रसातत्य
इत्यनेनैकदेशानुमतिद्वारातुल्येदवश्यमःकृत्यइतिपूर्वाचार्य्यपठितस्यश्लोकस्यैवज्ञापनात्॥ नन्वेवमपिपुराणप्रोक्तेषुब्राह्मणक
ल्पेष्वितिपुराणशब्देनपुरातनशब्दस्यबाधःप्राप्नोति।सत्यं। पृषोदरादिषुपुरातनशब्दस्यपाठोबोद्धव्यः॥ आगमशास्त्रस्यानित्यतं
लोपस्यचानित्यतामात्रेपुराणेतिनिर्देशोनज्ञाप्यतइतितुतत्वम्॥ तदेवंबाधकान्येवनिपातनानीतिभाष्येस्थितं॥ यद्वा।नेदंसंज्ञासूत्रंकिं
तुगणशुद्धिमात्रफलकम्॥ यानिसर्वनामानितान्येवसर्वादीनिनत्वितराण्यपीतिव्याख्यानात्॥ यथातिङोगोत्रादीनिकुत्सनाभीक्ष्ण्य
योरितिसूत्रेकुत्सनाभीक्ष्ण्ययोरितियोगंविभज्यगोत्रादीनीत्यनुवर्त्यएतयोरर्थयोर्यानिवर्त्तंतेतान्येवगोत्रादीनि इतिगणशुद्धिपरतयाव्या
ख्यास्यतेतेनचनचिदिवगोत्रादित्तद्धितास्रेडितेष्वगतेःकुत्सनेचसुप्यगोत्रादाविति सूत्रयोरपिविशिष्टार्थानामेवगोत्रादीनांग्रहणंतथे
हापि॥ ननूक्तरीत्यात्यदादीनामइत्याद्यंनगणकार्यंसिद्ध्यतुसर्वनाम्नःस्मैइत्यादिकंतुकृत्स्नसकलादिशब्देष्वतिव्याप्तंस्यादितिचेन्नं॥ग
णपाठसामर्थ्यात्तत्रपठितानामेवग्रहणात्॥ एतावानेवहिभेदः॥ यत्पूर्वोक्तेपक्षेसंज्ञाविधेयागणशुद्धिस्त्वार्थिकी अस्मिंस्तुपक्षेगणशुद्धिः राम ८६

शा स्त्री रुत्तरादिभ्या वृत्तिस्त्वं यादिति॥ अथवो भयमनेन क्रियते॥ पाठशुद्धिः॥ संज्ञाच॥ तंत्रावृत्त्येकशेषाणामन्यतमाश्रयणात्॥ तत्र स
ह विवक्षां विनापि वाचनिक एकशेषः॥ आकृतिपक्षे हि प्रत्याख्यातं सरूपसूत्रं इको गुणवृद्धी इत्यादिवच्छास्त्रप्रक्रियार्थं सत् सह विवक्षां
विनाप्येकशेषं विधत्ते तदित्थं पंचापि पक्षाः स्थिताः॥ संज्ञाभूतानां व्यावृत्तिस्तु गौणमुख्यन्यायेनापि सिध्यति॥ न चासौ पदकार्ये एवेति वा
च्यम्॥ विशिष्टरूपोपादाने सर्वत्र न तत्प्रवृत्तेरित्युपपादितमोत्सूत्रे॥ वार्त्तिकरीत्या त्वेकसंज्ञाधिकारे सर्वनामसंज्ञानंतरमेकद्रव्यनिवेशिनी
संज्ञेति संज्ञा संज्ञया सर्वनामसंज्ञा बाध्यत इत्यपि समाधानांतरं बोद्धव्यम्॥ यद्वा॥ पूर्वपरावरेति गणसूत्रे संज्ञायामिति योगं विभज्य पूर्वो
त्तरयोः शेषो व्याख्येयः॥ उक्ताः सर्वादयो वक्ष्यमाणाः स्वादयश्च संज्ञायामिति॥ तस्मादुपसर्जनव्यावृत्तिरेवान्वर्थसंज्ञाश्रयणस्य मुख्यं
फलं॥ नन्वनुपसर्जनादिति योगं प्रकारांतरेण व्याख्याय तद्बले नैवांतर्गणकार्यं वारितं भाष्ये॥ तद्यथा॥ अनुपसर्जनेति लुप्तषष्ठीकं पदम्॥
अः आदित्विच्छेदः अश्च अच्च तयोः॥ समाहार आत्॥ अकारात्परौ अअत् इत्यादेशौ यत्र क्रियेते तत्रानुपसर्जनस्य ग्रहणमिति परिभा
षार्थः॥ तेन त्वदाद्यत्वमड्डुतरादिभ्य इत्यद्ड्भावश्च गौणतायां न भवति॥ अकारात्परत्वेन विशेषणत्वं किम्॥ पंचम्या अत्॥ युष्मानति
क्रांतेभ्यो तियुष्मत्॥ एकवचनस्य च युष्मानतिक्रांतात् अतियुष्मत्॥ न ह्ययमकारात्परो विधीयत इति॥ तथा चोपसर्जनव्यावृत्तेरप्यन्य
थासिद्धेः किं महासंज्ञयेति चेन्न॥ अति सर्वायेत्यादिवारणस्य तदेकसाध्यत्वात्॥ नहीदमनुपसर्जनादित्यनेन साधयितुं शक्यते॥ एतद
परितोषादेव हि भाष्ये पक्षांतराश्रयणमिति दिक्॥ एवं चानुपसर्जनादिति सूत्रं परिभाषात्वेनापि नोपयुज्यत इत्यर्थात् प्रत्याख्यानमेव भव
तीत्यवधेयम्॥ स्यादेतत्॥ कौंभकारेयसिद्धये सूत्रमारंभणीयं॥ तत्र हि कुंभकारीशब्दादेव ढगुत्पादयितव्य अन्यथा कुंभेत्युकारस्य

वृद्धिर्नस्यात्॥ तथाचविशिष्टस्यस्त्रीप्रत्ययांततान्येष्टव्यासा च तदैवनिर्वहति॥ ॥ ॥ यदिदिटिड्ढा णञितिसूत्रे प्रत्ययग्रहणपरिभाष
याःणित्यनेनाणंतग्रहणेतेनचप्रातिपदिकविशेषणाद् णंतांतंप्रकृतिःस्यात्॥ तच्चसमास प्रत्ययविधौ प्रति षेध इति ग्रहणवता प्रातिपदि
केनतदंतविधिर्नैति चप्रतिषेधाद् दुर्लभम्॥ अनुपसर्जनादित्युपसर्जन निषेधसामर्थ्यात्तुप्रधानेन नदंत विधौ ज्ञापितेकौं भकारे यः सिध्यती
तिस्पष्टमेव। नच कृद्ग्रहणेगतिकारकपूर्वस्यापीति परिभाषया कुंभकारशब्दा देव स्त्रीप्रत्ययो स्त्विति वाच्यम्॥ अणितिहितद्धितोपि गृह्य
ते॥ औपगवीतियथा॥ कृद्ग्रहण इति परिभाषानुकृन्मात्रग्रहणे प्रवर्त्ततेनतु कृदकृद्ग्रहणेपिएवमर्थमेवेदं सूत्रमिति भाष्यकृतैव चतुर्थे ऽ
स्थापयिष्यते॥ तत् कथमिहोक्तमनुपसर्जनादित्ययं योगः प्रत्याख्यायत इति॥ अत्रोच्यते॥ चतुर्थेसूत्रकाराभिप्रायवर्णनमात्रंकरिष्य
तेनिष्कर्षेतुक्रियमाणेसूत्रेवैयर्थ्यमेवायातीत्याशयेनेह भगवतोक्तंप्रत्याख्यायते इति॥ तथाहि॥ कारशब्दान्ङीबुत्पत्तावपिकौंभका
रेयः सिध्यत्येवष्यङः संप्रसारणमित्यत्र भाष्यकृतापठिष्यमाणयावाचनिक्यास्त्रीप्रत्ययेचाःनुपसर्जनेनेति परिभाषयानुपसर्जनेस्त्री
प्रत्ययेतदादिनियमनिषेधेनकुंभकारीशब्दाद्दृगुत्पत्तेः॥ अतएवहि परमकारीषगंधीपुत्र इत्यत्रष्यङः तस्योच्यमानंसंप्रसारणंपरमका
रीषगंध्याशब्दस्यापि भवत्येव॥ नचैवमतिकारीषगंध्यापुत्र इत्यादावतिप्रसंगः॥ अनुपसर्जनइत्युक्तत्वेनोपसर्जनेतदादिनियमसत्त्वा
त्॥ नचैवमर्द्धपिप्पलीत्यादौ हल्ङ्यादिलोपो नस्यादिति वाच्यम्॥ हल्ङ्यादिसूत्रे दीर्घग्रहणसामर्थ्येन तत्रोपसर्जनेनापि तदादि
नियमो नास्तीति ज्ञापितत्वात्॥ वस्तुतस्तु निष्कौशांब्यादौ समुदायस्याङ्याबं— तत्वेपिअवयवस्यङ्याबंततयातत: परस्यसोर्लोपप्रा
प्तेर्नैतत् ज्ञापकं॥ अर्द्धपिप्पल्यादावप्यवयवस्यङ्यंततयैव निर्वाहः॥ नच विहितविशेषणतावत्कुंशक्यायसेत्यादावव्याप्तेः॥ नचनत्र

हलंताद्विहितत्वेन निर्वाहः॥ कर्त्ताहर्त्तेत्यादावलोपापत्तेः॥ यः स इत्यादौ लोपापत्तेश्च॥ पद्य॥ सुप्तिसीति प्रत्यये प्रकृतिराक्षिप्यते हलंत्स
सूत्रे कैय्यटग्रंथनिर्वाहाय विवरणे तथैव वर्णनात्॥ एवं च ज्ञापकं सुस्थं एकदेशस्याप्रकृतित्वात्॥ अत एव पंचमसमासो गोस्त्रियोरुपसर्ज
नस्येति सूत्रे च कैयटे न ज्ञापकत्वपक्षस्स एवोक्तः॥ ननूभयथापि मालादृशेत्यादौ समुदायादावंतत्वप्रयुक्तः सुः स्यात्तन्नश्चैकपद्यैकस्वर्ययो
रापत्तिः॥ एकवाक्यतया विधिरिति पक्षेपि पचतिकल्पमित्यादिसिद्धये एकवचनमुत्सर्ग इत्यस्यावश्याश्रयणीयत्वादिति चेन्न ङ्याब्ग्र
हणस्यान्यार्थतया यथाकथंचित् प्रातिपदिकग्रहणे लिंगविशिष्टग्रहणेन चाबंतत्वात् सुबुत्पत्तेश्च वक्ष्यमाणत्वात्॥ इह च समुदाय॥
स्याप्रातिपदिकत्वात्॥ अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति हि स्थास्यति॥ न चैवमपि कदाचित्कारीशब्दाट्ठक्स्यादेवेति
वाच्यम्॥ एकाज्द्विर्वचनन्यायेन समुदायादेवोत्पत्तेः॥ कुंभेनैकार्थीभूतस्य निष्कृष्यापत्येन योग इति वक्तुमशक्यत्वाच्च॥ किंच॥ सूत्रमा
रभ्यमाणस्याप्येषैव गतिः॥ औपगवीत्यादाविव केवलात्कारशब्दादपि कदाचिन्ङीप्प्रसंगेन कौंभकारेये पाक्षिकदोषस्य त्वत्प
क्षेपि तुल्यत्वात्॥ स्यादेतत्॥ अक्रियमाणेस्मिन्सूत्रे कुंभकारीत्यत्र ङीवेव न स्यात्॥ कुंभेनैकार्थीभूतस्याणंतस्य स्त्रीत्वेनायोगात्॥
यस्य च स्त्रीत्वेन योगो विशिष्टस्य न तदणंतं॥ तस्मादमहत्पूर्वादिति निषेधेन ज्ञाप्यमानस्तदंतविधिरुत्तरत्राप्यभ्युपगंतव्यः स च यथा
पूर्वत्रोपसर्जने नापि भवति न षट्स्वस्रादिभ्यः॥ प्रियपंचा द्रौपदी॥ वनोरच॥ अतिधीवरीति॥ तथा टिदादावपि स्यात्॥ ततश्च बहुकुरुच
रेत्यादावतिप्रसंगः॥ अतो निषेधसूत्रमिदं सार्थकं॥ ननु पूर्वत्रोपात्तं तदंतं च स्त्रियामित्यनेन विशेष्यते टिड्ढाणञित्यादौ तूपात्तं टिदादि
मेव तेन बहुकुरुचरेत्यादौ टिदादेरस्त्रीत्वान्न ङीप्॥ कुंभकारीत्यादौ त्वणंतस्य स्त्रियां वृत्तेस्तदंतादपि ङीप्भविष्यतीति चेन्न॥ एतर्हि हि ष

शा· ९९ यविभागस्यदुरूहतयातज्ज्ञानार्थमेवसूत्रारंभस्योचितत्वात्॥नैतदेवं॥आरब्धेप्यस्मिन्सूत्रेव्याख्यानस्यैवशरणीकरणीयत्वात्॥अन्य
थापंचाजीत्यत्राजानामस्त्रीत्वेपितदंतस्यस्त्रियांवृत्त्याटाप्प्रसंगात्॥अतोविशेषणविशेष्यभावंप्रतिकामचारादजाद्यतष्टावित्यत्रैकस्मि
न्ह्रुणञित्यादौचोपात्तंस्त्रीत्वेनविशेष्यतेवनोरचेत्यादौतूपात्तंतदंतंचेतिसकलेष्टसिद्धेः सूत्रंव्यर्थमेव।स्यादेतत्॥तदंतविधिज्ञापनार्थमे
वेदंसूत्रमारंभणीयं॥नचामहत्पूर्वेत्यनेनैवतत्सिद्धिरितिवाच्यम्॥तस्यज्ञापकत्वायोगात्॥पंचाजीत्यादिसिद्ध्यर्थमजादिभिःस्त्रीत्वं
विशेष्यतइतिहिवक्ष्यते॥तथाचमहाशूद्रीत्यत्रसमुदायस्यस्त्रियांवृत्तावप्यवयवस्यातथात्वेनसत्यपितदंतविधौटाप्प्राप्नोतीतिकथंत
दंतविधिंज्ञापयित्वानिषेधःपर्यवस्येत्॥मैवम्॥इतरैरजादिभिःस्त्रीत्वविशेषणेपिशूद्रशब्देनाविशेषणात्॥एवंस्पष्टमेवज्ञापकपर्यव
सानं॥नचैवंपंचशूद्रीत्यत्रापिप्रसंगः जातिरित्यनेनशूद्रस्यविशेषणात्॥स्यादेतत्॥पूर्वसूत्रनिर्देशोवापिशलमधीतइतीतिकात्याय
नोक्तरीत्यासूत्रंसार्थकं॥तथाहि॥अप्रधानमुपसर्जनं॥तथैवपूर्वाचार्यसूत्रेषुलोकेचव्यवहारात्॥ततश्चापिशलिनाप्रोक्तमित्य
र्थेत्यण्॥ततोऽध्येत्र्यांतदधीतइत्यण्तस्यप्रोक्ताल्लुगितिलुक्॥आपिशलाब्राह्मणी अत्रप्रोक्तार्थस्याणःप्रधानत्वात्तदंतान्नङीप्॥अ
ण्योःअःप्रधानमितिविशेषणात्॥नचैवमप्यध्येत्र्यामुत्पन्नस्याणोऽनुपसर्जनतयातदाश्रयोङीप्स्यादेवेतिवाच्यम्॥तस्यलुप्तत्वात्
॥नचप्रत्ययलक्षणंशंक्यंवर्णाश्रयेतन्निषेधात्टिड्ढाणञित्यत्रद्यतइत्यनुवर्तते॥अणाचअकारोविशेष्यते॥अण्योःकारइतिनतु
विपरीतोविशेषणविशेष्यभावः॥वर्णस्याप्राधान्यप्रत्ययलक्षणापत्तेः अतृणेडित्यत्रतृणहइम्वत्।ननुस्त्रियामित्यनेनाणोविशेष राम
णान्नोक्तदोषइतिचेन्न॥काशकृत्स्निनाप्रोक्तामीमांसाकाशकृत्स्नीतामधीतेकाशकृत्स्नाब्राह्मणी॥अत्रद्वितीयेणिप्रोक्ताल्लुगितिलु ९९

तिप्रथमोप्यण्स्त्रियामेवोत्पन्न इति तदंताद्ब्राह्मण्यां वर्त्तमानान्ङीप्स्यात्॥ तस्मात्प्रधानाद्यथा स्यादप्रधानान्मा भूदित्येतदर्थमारंभणी
यं सूत्रमिति॥ अत्रोच्यते॥ अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यं॥ यश्चेह्यध्येत्र्यामणुत्पन्नः सतु स एव। यश्च प्रयूयते॥ तस्मादीकारउ
त्पन्नो लुप्तश्चेति पुनर्न भवति सकृत्प्रवृत्या लक्षणस्य चरितार्थत्वात्॥ तस्मादनुपसर्जनादित्ययं योगः प्रत्याख्यायत इति भगवदुक्तिर्निर्बाधैवे
तिदिक्॥ सर्वादयश्च पंचत्रिंशत्॥ सर्व· विश्व· उभ· उभय· इतर· डतम· अन्य· अन्यतर· इतर· त्वत्· त्व· नेम· सम· सिम· पूर्वपरावरदक्षिणोत्तरा
पराधराणि व्यवस्थायामसंज्ञायां॥ स्वमज्ञातिधनाख्यायां॥ अंतरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अ
स्मद् भवतु किम्॥ इति॥ तत्र सर्वविश्वशब्दौ कृत्स्नपर्यायौ सर्वशब्दस्य स्वांगशिटामित्याद्युदात्तत्वे प्राप्ते नोदात्तत्वं गणे निपात्यते तेन सर्वे षांति
कार इत्यत्रानुदात्तादेरञ्प्रसिद्धः सत्यनुदात्तादिप्रकृतिकाह्यधीयते इति ङ्याप्सूत्रे भाष्ये स्थितं प्रयोगे तु सर्वस्य सुपीत्याद्युदात्त एव। उभशब्दो
द्वित्वविशिष्टस्य वाचकः॥ अत एव नित्यं द्विवचनांतः॥ यद्येवं नर्हि किमर्थमसौ सर्वादिषु पठ्यते॥ न ह्यत्र स्मायादयः संभवंति॥ काकचोक्तं
नास्ति रूपे स्वरे वा विशेषः॥ अवग्रहस्तु कप्रत्ययेपि पदकारैर्न क्रियते चित्र इंद्राजाराजका इदन्यके इत्यादौ तथैव निर्णीतत्वात्॥ न चोभाभ्यां
हेतुभ्यामुभयोर्हेत्वोरित्यत्र सर्वनाम्नस्तृतीया चेति पाक्षिकं तृतीयासिद्ध्यर्थमिह पाठ इति वाच्यं॥ निमित्तकारणहेतुषु सर्वासां प्रायदर्शन
मिति गतार्थत्वात्॥ न च वृत्तिकृता सर्वनाम्नस्तृतीया चेति सूत्रे पठितत्वादिदं वार्त्तिकमपि सर्वनामसंज्ञासापेक्षमेवेति वाच्यं॥ भाष्ये हेता
विति सूत्रे नस्य पठितत्वात्॥ अत एवान्येन कारणेन वसत्यन्नस्य कारणस्येत्युदाहृतं हरदत्तेन॥ अत्रोच्यते॥ उभ शब्दस्तावद्द्विवचन
मात्रविषयः॥ वृत्तौ तु द्विवचनलोपान्नासौ प्रयुज्यते॥ उभाभ्यां पक्षाभ्यां विनीतनिद्रा इति विग्रहे उभयपक्षेत्यादिप्रयोगदर्शनात्॥ कथं त

सि.कौ. र्हि उभस्थाने उभयशब्दसिद्धिरिति चेत्॥ इत्थं। उभादुदात्तो नित्यमित्यत्रो भादिति योगो विभज्यते॥ अवयवरृत्तेः संख्यावाचिन उभशब्दा
८९ द्वयवविन्यर्थे अयच् स्यात् उभयो मणिः॥ ततो नित्यं उभशब्दा दृत्तिविषये नित्यमयच् स्यात्॥ अनिर्दिष्टार्थत्वात् स्वार्थे॥ तदेतदुक्तं वार्त्तिककृता
उभयो न्यत्रेति॥ एवं स्थिते उभयत उभयत्रेत्यादाविव कप्रत्ययेप्युभयएव प्राप्तः॥ अकच्चि तु उभकावित्यादि सिद्ध्यति॥ नचेह स्युभय इति स्या
देवेति वाच्यम्॥ अकजर्थं सर्वादिषु पाठेनापचो बाधात्॥ अन्यथा पाठवैयर्थ्यापत्तेरिति दिक्॥ स्वांगशिटाम दंतानामित्यांद्युदात्तार्थं पाठ इति
तु नयुक्तं॥ गणए वांतोदात्तस्य निपात्यमानत्वात्॥ अन्यथा उभे प्रभद्रे जोषयेते॥ उभाउनूनमुभाभ्यां देवसवितः॥ सपत्यत उभयोर्नृम्णम
योरित्यादावाद्युदात्तप्रसंगात्॥ उभयशब्दस्तु अवयवद्वयारब्धेऽवयविनि वर्त्तते उभयोमणिरिति यथा श्यामलोहिताभ्यामवयवाभ्यामार
ब्ध इत्यर्थः॥ तिरोहितावयवभेदत्वादेकवचनम्॥ उभयमेव वदंति मनीषिण इत्यादौ तु समुदायि द्वयघटितः॥ समुदायोर्थः॥ तिरोहिताव
यवभेदत्वं तु तुल्यमेव॥ यदा तु वर्गद्वयारब्धे महासमुदाये वर्त्तते तदा वर्ग्यभिन्ने न वर्गद्वयेन महाभेदविवक्षयोद्भूतावयवभेदत्वाद्बहुवचनांत
एव उभये देवमनुष्याः॥ तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपा इति यथा॥ यदा तु प्रागुक्तरीत्या उभयो मणिरिति व्युत्पाद्यतादृशमेव मणि
द्वयं सह विवक्ष्यते॥ तदा एकशेषेण द्विवचनं प्राप्नोति॥ अनभिधानात्तु न भवति॥ तथा च तद्धितश्चासर्वविभक्तिरिति सूत्रे कृत्तद्धितानां ग्रह
णं च पाठे इति भाष्यमवतारयन् कैय्यट आह॥ उभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वमिति॥ हरदत्तस्तु तस्मिन्नेव सूत्रे उभ
यशब्दाद्द्विवचनमंगीकृत्य पाठाश्रयणं तु पचतिकल्पं पचतिरूपमित्यादावतिप्रसंगं वारयितुमित्याह॥ इहायजादेशस्य स्थानिवद्भावे रामः
ननयप्रत्ययांनतया प्रथमचरमेति सूत्रेण जसि विभाषा प्राप्नोतिव्यवस्थितविभाषया पूर्वविप्रतिषेधेन वा नित्यमेव जसि सर्वनामतेति केचि ८९

त्॥विभक्तिनिरपेक्षत्वेनांतरंगपानित्यसंज्ञयाबहिरंगावैकल्पिकीबाध्यतइतिनुसिद्धांतः॥नवेतिविभाषेतिसूत्रेभाष्यकारस्त्वाह॥अयच्
प्रत्ययांतरमेवनत्वसौतयस्यादेशः उभादुदात्तइतिसूत्रेतयपोऽननुवृत्तेः अयचएवानुवृत्तेः नचैवंउभयीइत्यत्रटिड्ढाणञ्इतिसूत्रेण
तयबंतत्वप्रयुक्तोङीप्नस्यादितिवाच्यं॥तत्रमात्रजितिमात्रशब्दात्प्रभृत्यपचश्चकारेणप्रत्याहारग्रहणात्॥एवंचतयब्ग्रहणमपि
नतत्रकार्यं॥यद्वा॥द्वयसजितिप्रत्याहारः॥तथाचदघ्नज्मात्रचोरपिग्रहणंनकर्त्तव्यमितिमहद्देवलाघवं॥वस्तुतस्तुप्रमाणेमात्रच्द्व
यसच्दघ्नच्इतिपाठ्यमितिभाष्याशयः॥तथाचतनोपिलाघवं॥नचैवंकतिस्त्रियइत्यत्रातिप्रसंगः।अतइत्यनुवृत्तेः॥नषट्स्वस्रादि
भ्यइतिनिषेधाद्वा।नचैवंतैलमात्रेत्यादावतिप्रसंगः सदृशस्याप्यस्यप्रत्याहारेऽसन्निविष्टत्वात्इति॥अत्रकश्चित्॥उभयेत्यर्थपरो
निर्देशः॥तेनव्यथांद्वयेषामपिमेदिनीभृतामितिमाघप्रयोगः समर्थितोभवतीत्याह॥तन्न॥अर्थपरतायांवृत्तिकाराद्यभियुक्तवचनानु
पलंभात्॥महाकविप्रयोगवलादेवंकल्प्यतइतिचेत्॥न॥महाकविभिरेवतद्विपरीतस्यबहुशः प्रयोगात्॥तथाचमाघः॥गुरुद्वया
पगुरुणोरिति॥कालिदासोपि॥अस्मिन्द्वयेरूपविधानयत्नइति॥श्रीहर्षश्च॥अयेममोरासितमेवजिह्वयाद्वयेपितस्मिन्ननतिप्र
योजनइति॥तस्माद्द्वयंद्वैधमिष्यंतिगच्छंतीतिद्वयेषस्तेषांद्वयेषामितिद्विषेः क्विबंतस्यरूपंबोध्यम्॥यत्तुकश्चिदाह॥[illegible]कवर्मण व्या
करणेद्वयशब्दस्यापिसर्वनामताभ्युपगमात् तद्रीत्यायंप्रयोगइति॥तदपिन॥मुनित्रयमतेनेदानीं साध्वसाधुविभाग[illegible]स्यैवेदानीं
तनशिष्टैर्वेदांगतयापरिगृहीतत्वात्॥दृश्यंतेहिनियतकालाः स्मृतयः॥यथाकलौपाराशरस्मृतिरित्यादीति।शताच्च ठन्यतावशत इ
तिसूत्रेसर्वैकवाक्यतयासिद्धांतितत्वात्॥डतरडतमौप्रत्ययौ॥यद्यपिसंज्ञाविधौप्रत्ययग्रहणेतदंतग्रहणंनास्तितथापीहप्रयोजनि

सर्वनामाव्ययसंज्ञायामिति वाचनिकस्तदंतविधिः केवलयोः संज्ञायाः प्रयोजनाभावाद्धि ॥ अन्योभिन्नः ॥ अन्यतरान्यतमशब्दावव्युत्पन्नौ
स्वभावाद्धि बहुविषये निर्धारणे वर्त्तेते इति पस्पशायां कैय्यटः ॥ तत्रान्यतमशब्दस्य गणेपाठाभावान्न सर्वनामकार्यं ॥ नाप्यडुतरादिभ्य इ
त्याद्यंतर्गणकार्य्यम् ॥ तथात्वप्रयुज्यते ॥ नतावतत्सामान्यादिष्वन्यतमं तमद्इति ॥ शाकटायनस्त्वन्यतरान्यतमो इतरडतमंतौ व्युत्पादि
तवान् ॥ तन्मतेप्यन्यतरशब्दपाठस्यनियमार्थत्वादन्यतमशब्दोंतर्गणकार्यंसर्वनामसंज्ञाकार्यंच नलभ्यतइतितद्व्याख्यातारः ॥ इत
रस्त्वन्यनीचयोरित्यमरः ॥ त्वत्वइतिद्वावप्यदन्तावन्यपर्यायौ तत्रैकउदात्तोपरोऽनुदात्तः एतंत्वंमन्येदशापत्रमुत्समित्युदात्तस्य प्र
योगः ॥ उतत्वःपश्यन्नित्यादिरनुदात्तस्येति विशेषः ॥ केचित्तुत्वदितितांतमेकंपठंति ॥ तथाचजयदेवःप्रायुंक्त ॥ त्वदधरमधुरमधूनि
पिबंतंइति ॥ त्वत्तोन्यस्याअधरइतिषष्ठी तत्पुरुषो ननुलबाधरस्त्वदधरइति ॥ पश्यतिदिशिदिशिरहसिभवंतंइति पूर्ववाक्येनसहान्वय
यापत्तेः ॥ अनुदात्तश्चायम् ॥ त्वत्वसमसिमेत्यनुच्चानीतिफिट्सूत्रात् ॥ तथाचप्रयुज्यते स्तरीरुत्वद्भवतिसूतउत्वदिति ॥ त्वदितिसर्व
नामसुपठितोन्यपर्यायइति तद्व्याख्यायांवेदभाष्यकाराः ॥ इहप्रागुक्तरीत्याउदात्तानुदात्तयोरकारांतयोरनुदात्तस्य तकारांतस्यच प्राम
णिकत्वंनिर्विवादमेव ॥ गणपाठेपरंविप्रतिपत्तिः ॥ तत्राप्यनुदात्तस्याकारांतस्यगणपाठेनसंशयः ॥ उतोत्वस्मैतन्वमित्यादिप्रयोगात् ।
अवशिष्टयोर्मध्येकतरस्यगणेपाठइतितुसंशयः उदात्तत्वप्रयोगाणां तत्रौदासीन्यात् ॥ तस्मात्तांतस्याकजादिकमुदात्तस्यचास्मांमांदि
कंक्वचिच्छाखायांप्रयुज्यतेनवेतिविभाव्य तत्त्वंनिर्णेयंबहुश्रुतैरितिदिक् ॥ वस्तुतस्तु आद्यस्यतांतच्छेदएवयुक्तः अन्यथाऐस्या क
शब्दद्वयस्वरसर्वनाम्नाएकश्रुत्योभयसंग्रहसंभवात्त्वशब्दमेकमेवापठिष्यदितिध्येयं ॥ त्वेषस्तूनित्वेरायइत्यादयस्तुशोभत्यर्थांत

स्य गुणपदः प्रयोगानर्हत्वशब्दस्य पदकारैः प्रगृह्यत्वप्रयुक्तस्येतिशब्दस्य प्रयोगादिति स्थितं वेदभाष्ये। नेम इत्यर्द्धं प्रयोगश्च। प्र नेमस्मिन्द
दृशे सोम इति। समः सर्वपर्यायः॥ नभन्तामन्यके समे। मानो वृकाय वृक्ये समस्मै। उरुष्या णो अघायतः समस्मात्॥ उतो समस्मिन्न॥ तुल्यप
र्यायस्य तु समशब्दस्य न सर्वनामता॥ यथासंख्यमनुदेशः समानामिति ज्ञापकात्॥ कृत्स्नेऽन्त इति सूत्रे एते दोषाः समा भूयांसो वेति भाष्यक
र प्रयोगाच्च॥ एतेन समे यजेतेति प्रयोगो व्याख्यातः। सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोरिति निघंटुः॥ आ द्रात्री वासस्तनुते सिम
स्मै। उच्छ्रुकमक्तमजते सिमस्मात्॥ यद्यपीह त्वत्त्वसमसिमेत्यनुच्चानीति प्राप्तं तथापि सिमस्याथर्वणान्त उदात्त इत्युदात्तता॥ अथर्ववे
दप्रविष्टे मन्त्रे ऋग्वेदादिगतेपीत्यभियुक्तैर्व्याख्यातत्वादिति अवधेयम्॥ पूर्वपरावरोत्तरापराः पंच दिक्कालयोस्तदवच्छिन्ने च॥ पूर्वस्यां
दिशि पूर्वस्मिन् काले पूर्वस्यां वाप्याम्॥ पूर्वस्मिन् गुरावित्यादि॥ दक्षिणाधरशब्दौ दिशि तदवच्छिन्ने च॥ अर्थनियमश्चायं व्यवस्था या
मित्युक्तेर्गम्यते॥ स्वाभिधेयेनापेक्ष्यमाणस्यावधेर्नियमो हि व्यवस्था॥ पूर्वादिशब्दानामुक्तोर्थो हि नियमेन किंचिदवधिमपेक्षते॥ स्था
गापापचो भावे इति क्तिनि प्राप्ते। तत एव निपातनादङ्। व्यवस्थायां किं॥ दक्षिणा गाथकाः॥ प्रवीणा इत्यर्थः॥ अधरे ताम्बूलरागः॥ उत्तरे प्रत्यु
त्तरे वाशक्तः॥ कथं तर्हि तथापरेषां युधि चेति कालिदासः। अपरे प्रत्यवतिष्ठन्ते इत्यादि च॥ अत्राहुः॥ देशवाचितया व्यवस्थाविषययोरेवपर
परशब्दयोरुपचाराच्छत्रौ प्रतिवादिनि च प्रयोगः॥ न चैवमुपसर्जनता॥ नहि लाक्षणिकत्वमुपसर्जनत्वं किंतु स्वार्थविशिष्टार्थान्तरसंक्रमः
स तु न वृत्तिप्रविष्टस्यापि प्रधानस्य न वा लाक्षणिकस्यापि वृत्तिमप्रविष्टस्य॥ अत एव तस्माहून्हिमानित्यादौ ज्ञानलक्षणापक्षेपि सर्वनामता
तथाहं सोसौ योसौ सोहमित्यत्र भागत्यागलक्षणायामपि सर्वनामकार्यप्रवृत्तिरिति॥ भूवादिसूत्रे एतान्यपीति एतत् प्रतिपाद्यानि वस्तूनीत्

र्येइतिकैयटस्य।वस्तुतस्त्वत्रशत्रुत्वादिप्रकारकोबोधोनस्वादिशब्देभ्योभिन्नत्वादिरिवार्थिकः।शब्दात्तुदेशांतरनिष्ठत्वादिप्रकारकएवेतितत्वं॥असंज्ञा
यांकिम्॥उत्तराःकुरवः॥क्रमेरूमवधिमपेक्ष्यकुरुषुउत्तरशब्दोवर्त्ततइत्यस्तीहव्यवस्थाप्रसिद्धत्वात्तुनावधेःप्रयोगःमेघोवर्षतीत्यस्मिन्निव
लस्ययथा॥एवंदिशःसपत्नीभवदक्षिणस्याइत्यादावपिवस्तुतोव्यवस्थास्तीतिसर्वनामकार्यंसंभवत्येव॥नचसंज्ञात्वात्प्रतिषेधः॥आ
धुनिकसंकेतोहिसंज्ञानचदिक्षुसास्तीतिपंचमेऽस्तातिप्रकरणेकैयटहरदत्तादयः॥अत्रदिक्षुचिरंतनः॥कुरुषुत्वाधुनिकःसंकेतइत्यत्र
व्याख्यातृवचनमेवप्रमाणं॥स्वशब्दस्यचत्वारोर्थाः॥आत्माआत्मीयोज्ञातिर्धनंचेति।स्वोज्ञातावात्मनिस्वंत्रिष्वात्मीयेस्वोस्त्रियांधनइत्यमरः
॥यद्यपिस्वामिन्नैश्वर्यइतिसूत्रेईश्वरत्ववाच्यपिस्वशब्दःस्वीकृतस्तथाप्यसौमत्वर्थीयामिनिच्प्रत्ययमात्रविषयोनतुकेवलःप्रयोगार्हः॥
तत्रज्ञातिधनयोर्निषेधार्थात्मात्मीययोरेवसंज्ञा॥आख्याग्रहणंकिम्॥आत्मीयत्वंपुरस्कृत्यज्ञातिधनयोरपिप्रवृत्तौसर्वनामतायथास्यात्
॥आत्मात्मीययोरित्येवतुवक्तुमिहोचितं॥स्वस्मैइत्यादि।जसिविभाषाविधायकेऽष्टाध्यायीस्थेसूत्रेप्येवम्॥यत्तुतत्रस्वमात्मीयइत्येववक्
तुमुचितमात्मवाचिनोनपुंसकत्वाजसिविभाषायामुपयोगाभावादितिकेचित्तच्चिंत्यं॥सूत्रसामर्थ्यादेवात्मन्यपिपुंस्त्वलाभात्॥अतएवा
मरकोशेपिआत्मनीतिपूर्वान्वयिस्वमितितूत्तरान्वयि॥तथाचहेमचंद्रः॥द्यौःस्वर्गनभसोः स्वोज्ञात्यात्मनोःस्वंनिजेधनेइति।मेदिनीकारो
पि॥स्वःस्यात् पुंस्यात्मनिज्ञातौत्रिष्वात्मीयेस्त्रियांधनेइति॥वस्तुतस्तुपूर्वपरेत्यादित्रिसूत्र्यामर्थनिर्देशःपाठविशेषणं॥तेनेतरेषांपाठादे
वपर्युदासः॥तथाचविभाषाजसीतिप्रकरणेपूर्वादीनिनवेत्येवलाघवात्कर्त्तव्यम्॥त्रिसूत्रीतुनपठनीयैवेतिनिष्कर्षः॥अथवागण
पाठएवपूर्वादिनवकपाठांतरंविभाषाजसीतिकर्त्तव्यंपूर्वादीनिचार्थविशिष्टान्यनुवर्त्तनीयानि॥नचसर्वादीनामप्यनुवृत्तिःशंक्या॥नेम

स्यजसि विभाषारंभात्॥ यद्वा॥ जसङसिङीनां शिस्मात्स्मिनः पूर्वादिभ्यो नवभ्यो वा औङ आपः शी· नपुंसकाच्चेति सप्तमेन्यासः कर्त्तव्यः॥ परमा
र्थस्तु सप्तमे यथान्यासमेवास्तु॥ पूर्वादिभ्यो नवभ्यो वेत्येतत्तु जसः शीत्यत्रानुवृत्य वाक्यभेदेन संभवत्यनेवाछंदसीत्येतदमिपूर्व इत्यत्र यथा तथा
चेयं त्रिसूत्री अष्टाध्याय्यां न पाठ्येति स्थितम्॥ असंज्ञायामिति तु न कार्यं अन्वर्थसंज्ञयाभिव्यक्तपदार्थाये इतिन्यायेन वा संज्ञायान्युदस्तस्मात्
॥ अंतरशब्दस्तु नानार्थः॥ तथा चामरः॥ अंतरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये। छिद्रात्मीये विना बहिरवसरमध्येंतरात्मनि चेति॥ त
त्र बहिर्योगोपसंव्यानयोरेवार्थयोः संज्ञा॥ बहिरित्यनावृतो देशो बाह्यं चोच्यते॥ तत्राद्ये अंतरे अंतरा वा गृहाः॥ नगरबाह्याश्चांडालादिगृहा इत्यर्थः
॥ द्वितीये नगराभ्यंतरगृहा इत्यर्थः॥ उपसंव्यानशब्दोपि करणव्युत्पत्त्या उत्तरीयपरः॥ कर्मव्युत्पत्त्या त्वन्तरीयपरः॥ उभयथापि बहिर्योगेण
गतार्थत्वात्॥ उपसंव्यानग्रहणं न कर्त्तव्यमिति भाष्ये स्थितं। केचित्तु शाटकानां त्रये शरीरसंयुक्तस्य तृतीयस्य। चतुष्टये तु चतुर्थस्य तत्प्रयुक्त
स्य च तृतीयस्य बहिर्योगाभावादुपसंव्यानग्रहणं कर्त्तव्यं शाटकयुगाद्यर्थमिति वदतो वार्त्तिककारस्याप्ययमेवाशय आदिशब्दबलादेव ल
भ्यते भाष्यमते तु बहिर्योगग्रहणं स्वर्यते तेन शीतोष्णाभ्यां कारिणीत्यादाविव गौणग्रहणात्परंपरया बाह्यसंबद्धस्यापि भविष्यतीत्याहुः स
त्यपि बहिर्योगे पुरीविषयतायां न सर्वनामता अपुरीति च वक्तव्यमिति वार्त्तिकात्॥ तद्धि गणसूत्रस्य शेषो न तु जसि विभाषाविधायकस्य अत
इत्यधिकृत्य जसः शीविधानादावंतात् प्राप्त्यभावात्॥ अंतरायां पुरि प्राकाराद्बाह्यायां तदंतर्वर्त्तिन्यां वेत्यर्थः॥ लिंगविशिष्टपरिभाषया एका
देशस्य पूर्वान्तग्रहणेन ग्रहणाद्वा प्राप्तिर्बोध्या। यद् तद् एतौ पूर्वोक्तपरामर्शकौ तत्राद्यश्छांदसः॥ एषस्य भानुरिति गणरत्नकारस्तन्न॥ तथासुदि
स्य ष्टुर्दसि बहुलमिति सूत्रे छंदोग्रहणवैयर्थ्यापत्तेः॥ यदुद्देश्यसमर्पकः एतदिदमौ प्रत्यक्षोपस्थिते॥ अदसस्त्व्यवहिते॥ एकोन्यार्थे

नेत्वप्रथमेकेवलेतथा॥ साधारणे समानेचसंख्यायांचप्रयुज्यते॥ द्विशब्दो द्वित्वविशिष्टे अलिंगः संबोधनैकविषयश्च युष्मदर्थः॥ अस्मच्चे [illegible]
स्त्वच्चारयितृत्वर्थः॥ सलिंगः संबोधनव्यभिचारी च भवत्वर्थः॥ भातेर्डवतुरितिव्युत्पादितोयं॥ यद्यप्यस्मात्स्मायादयो न संभवंति सर्वनाम्नस्तृ
तीयाचेति निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमित्यनेनैवगतार्थं तथापि॥ फिञद्रिमयटः पूर्वनिपातश्छकृछसौ तथा॥ आत्वंशेषष्ठ्य[illegible]
हाभकच्च भवतः फलं फिञ्॥ भवतायनिः॥ त्यदादित्वेन वृद्धत्वादुदीचां वृद्धादितिफिञ् भवंतमंचतीति भवद्यङ्॥ विष्वग्देवयोश्चेतिचका
रेण सर्वनाम्नोनुकर्षणाद्‌द्र्यादेशः॥ भवन्मयः॥ नित्यं वृद्धशरादिभ्य इति मयट्॥ भवन्मित्रः॥ सर्वनामसंख्ययोरिति प्राङ्निपातः भावत्कः भ
वदीयः भवतष्ठक्छसावित्यत्र हि शत्रंतं न निवृत्तये वृद्धादित्यनुवर्त्यते॥ आत्वम्॥ भवादृक्॥ आसर्वनाम्न इत्यात्वं देवदत्तश्च भवांश्च भवंतौ
॥ त्यदादीनि सर्वैर्नित्यमित्येकशेषः॥ भवतो भावो भवतेत्यत्र सर्वनामसंज्ञया गुणवचनसंज्ञाबाधनात्ष्यञ् विरहोपि फलं॥ अन्यथा हि भावत्यमि
तिस्यात्॥ भवकान्॥ सर्वनाम्नो वृत्तिमात्र इति पुम्भावोपि फलं॥ भवत्याः पुत्रो भवत्पुत्रः॥ किंशब्दः प्रश्ने आक्षेपे चेति दिक्॥ वृत्सर्वादिगणोवृ
त्तः समाप्त इत्यर्थः॥ यदींद्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुतस्थ इत्यत्र तु अवममध्यमपरमशब्देषु छंदसि सकलविधिव्यत्य
यात्स्याडागमः॥ न त्वेतदनुरोधेन सर्वादेराकृतिगणत्वमिति मंतव्यं अतएव छंदस्यपि सर्वनामकार्यमेषां न नियतं॥ येमध्यमाः पितरः वि
ष्णोः पदे परमे इत्यादौ तदभावात्॥ व्यूहावुभौनावितरेतरस्मात् अन्योन्येषां पुष्करैरामृषांत इत्यादिषु हि प्रयोगो द्विर्वचनमिति पक्षे तदंतं वि
धिनासिद्धं॥ स्थाने द्विर्वचनपक्षे तु स्थानिवद्भावेनेत्यवधेयम्॥ ननु वसन्नसादाविव प्रकृतिप्रत्ययविभागस्य संमोहात् स्थानिवद्भावेनापि पदं
त्वमात्रं स्यात्॥ ननु सर्वनामतासु विशिष्टे स्थानिनि तद्विरह्यादितिचेन्न॥ सन्नियोगशिष्टत्वेनांतरंगमपि द्वित्वं बाधित्वा समासवच्च बहुलमिति

समासवद्भावप्रयुक्तस्य लुकः प्रथमं प्रवृत्तेः ॥ अंतरंगानपि विधीन् बहिरंगो लुग् बाधत इति वक्ष्यमाणत्वात् ॥ ततः प्रत्ययलक्षणेन पदत्वमाश्रि
त्य हित्वप्रवृत्तेः ॥ एतेन तत्तन्नामसभूतभीतपदद्वयादि व्याख्यातं ॥ नन्वस्तूक्तरीत्या इतरेतरस्मादित्यस्य सिद्धिः ॥ अन्योन्येषामिति कथं ॥ न ह्य
त्र समासवद्भावोस्तीति चेत् ॥ तत्र प्रथमैकवचनांतत्वं पूर्वपदस्य द्वितीयादयस्तु परपद इति वचनबलेनैव प्रकृतिप्रत्ययविभागस्य सिद्धेरि
ति दिक् ॥ वन्येतरा जानपदेषोपदाभिरिति तु वन्या इतरे येभ्य इति बहुव्रीहिणा समाधेयं ॥ तपर इति ज्ञापकात् सर्वनाम्नः पूर्वनिपातो ऽनित्यः ॥
पुत्रादेकात् पराजय इति तु प्राधान्यादिना आख्यातादित्यर्थे आख्यातणिजंताद्वृत्त्यर्थैकप्रत्यये लाक्षणिकस्य सर्वनामता विरहः ॥ तत्समा
धेयम् ॥ विभाषा दिक्समासे बहुव्रीहौ ॥ अत्र सर्वनामसंज्ञा वा स्यात् ॥ उत्तरपूर्वस्यै ॥ उत्तरपूर्वायै दिङ्नामान्यंतराल इति प्रतिपदोक्तो दि
क्समासो गृह्यते ॥ तेनेह न ॥ या पूर्वा सैवोत्तरा यस्य भ्रांतस्य तस्मै पूर्वोत्तराय एवं च बहुव्रीहिग्रहणं न कर्त्तव्यं ॥ दक्षिणोत्तरपूर्वाणामिति द्वंद्व
स्य लक्षणप्रतिपदोक्तपरिभाषयैव वारणात् ॥ ननूत्तरार्थं तत् ॥ तथा हि ॥ एकं बहुव्रीहिवत् ॥ आबाधे चेति द्विर्भावे एकैकस्मै देहि ॥ दक्षिणे
दक्षिणस्यै इत्यादीष्यते ॥ तत्रोत्तरसूत्रेण निषेधो मा भूत् ॥ बहुव्रीहिरेव यो बहुव्रीहिर्न त्वतिदिष्टबहुव्रीहिस्तत्रैव यथा स्यादिति ॥ मैवं ॥ समा
सग्रहणानुवृत्त्याप्युक्तार्थलाभात् ॥ उत्तरसूत्रप्रत्याख्यानाच्च ॥ न बहुव्रीहौ ॥ बहुव्रीहौ कर्त्तव्ये सति सर्वनामसंज्ञा न स्यात् ॥ त्वकंपिता यस्य त्व
त्कपितृकः ॥ अहकंपिता यस्य मत्कपितृकः ॥ द्व्कौ पुत्रौ यस्य द्व्किपुत्रः ॥ इह हि समासप्रवृत्तेः प्राक् अंतरंगतया अकच् प्रवर्त्तेत तस्य च समा
से सत्यपि श्रूयेत ॥ अतिक्रांतो भवकंतमतिभवकानिति वत् ॥ न हि वृत्तेः प्रागपि उपसर्जनतास्ति ॥ ननु यदि प्रागेव प्राप्नुवन् अकच् निवर्त्ति
तः ॥ तर्हि त्वकंपितेत्यादि कथं विगृह्य वेत्ति त्वत्कः पितेत्यादिकप्रत्ययदर्शनौचित्यादिति चेत् [illegible] हि यस्मिन् प्रक्रियावाक्ये [illegible]

श॰ कौ॰ ९२

अगोचरे बहुव्रीहिसंज्ञा प्रवृत्ता सर्वनामसंज्ञा च निषिद्धा तत्र प्रयुज्यते॥ अपरिनिष्ठितत्वात् किं तु तत्सदृशं बहुव्रीहिसंज्ञाशून्यं वाक्यांतरमेवे
त्याह कैयटः॥ अप्रयोगसमवायि यत् प्रक्रियावाक्यं तत्रायं निषेधो न तु लौकिके॥ तस्य पृथगेव प्रयोगात् तादर्थ्याभावादिति॥ अतएव दृ[illegible]
सर्वे येनेत्येव विग्रहो न तु सर्वा इति॥ राज्ञः पुरुष इत्यादिविग्रहेऽपि ह्येषैव गतिः॥ अलौकिके वाक्ये अल्लोपोन इत्यादेरप्रवृत्तेः॥ अंतरंगानपि वि
धीनिति सिद्धांतात्॥ अतएव गोमत्प्रिय इत्यादौ सोर्लुगेव न तु हल्ङ्यादिलोपः॥ तेन नुम्दीर्घादयो न प्रवर्त्तंते॥ भाष्ये त्वकंस्मित्क इत्याद्येव
रूपं स्वीकृत्येदं सूत्रं प्रत्याख्यातम्॥ यदाह अकच्स्वरौ तु कर्त्तव्यौ प्रत्यंगं मुक्तसंशयाविति॥ अंगम्प्रतीति प्रत्यंगं॥ अनकारांतेषु त्वकत् पितृको
हकि पुत्र इत्यादिष्वकच्॥ विश्वप्सिप इत्यादिष्वदंतेषु तु स्वांगशिटामदंतानामित्याद्युदात्तत्वेति विषयविवेको बोध्य इत्यर्थः॥ यथोत्तरं मुनीनां
प्रामाण्यात्॥ भाष्योक्त्यैव व्यवस्थेत्यवधेयम्॥ तृतीयासमासे॥ अत्र सर्वनामता न स्यात्॥ मासपूर्वाय॥ लक्षणप्रतिपदोक्तपरिभाषया पूर्वस
दृशेति समासो गृह्यते न कर्तृकरणे कृता स्यादिरपि तेन त्वयका कृतं त्वकत्कृतमित्यादौ निषेधो न॥ समास इत्यनुवर्त्तमाने पुनः समासग्रहणं
गौणार्थस्यापि संग्रहार्थं तेन समासार्थवाक्येऽपि निषेधः मासेन पूर्वाय॥ अयं च लौकिके वाक्ये निषेधो न तु बहुव्रीहाविति वदलौकिके॥ अ
कारांते का कचोर्विशेषेण नकारांतानां प्रतिपदोक्ततृतीयासमासविरहेणालौकिके निषेधस्यैव पर्यापत्तेः॥ द्वंद्वे च। इहोक्ता संज्ञा न स्यात्
॥ पूर्वापराधराणां॥ समुदायस्यायं निषेधो न त्ववयवानाम्॥ तथाहि॥ त्यदादीनां तावद्द्वंद्व एव नास्ति त्यदादीनि सर्वैर्नित्यमित्येकशेषेण बाधि
तत्वात्॥ न च द्वंद्वे कृते एकशेष इति भ्रमितव्यम्॥ एकवद्भावस्वरसमासांतप्रसंगेन द्वंद्वापवादत्वपक्षस्यैव स्थापयिष्यमाणत्वात्॥ अन्यथा
तेषामित्यादावपि द्वंद्वे चेति निषेधापत्तेश्च॥ त्यदादिभ्यः प्राचीनास्त्वदंताः॥ तत्र काकचोर्विशेषः॥ सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावस्त्वि

राम ९२

ष्यत एव दक्षिणोत्तरपूर्वाणामिति॥ किंच सर्वनामसंज्ञानिषेधेनाप्यसौ दुर्वारः॥ तत्र हि मात्रग्रहणं क्वचित् सर्वनामत्वेन दृष्टानां संभवत्सर्वनामत्वे
पि पुंवद्भावार्थं॥ अत एव दक्षिणपूर्वायै इत्यत्र संज्ञाभावेपि पुंवद्भावः॥ नन्वेवमपि संज्ञा चेन्न निषिद्धा तर्हि अंगाधिकारे तस्य च तदुत्तरपद-
स्य चेति वचनात् दक्षिणोत्तरपूर्वाणामित्यादौ सुडागमादिप्रसंगः॥ न च निषेधवैयर्थ्यं॥ अनांगस्यात्र तसिलादेर्व्यावृत्त्या चरितार्थत्वादि-
ति चेन्न॥ अंगकार्येषु सर्वनाम्नो विहितस्यामोऽङेङसिङ्योरित्यादिक्रमेण व्याख्यानात्॥ विहितविशेषणत्वस्याश्रयणे प्रमाणं तु दक्षिणो-
त्तरपूर्वाणामिति भाष्यप्रयोग एव॥ तस्मात् समुदायस्यैवायं प्रतिषेधो नावयवानां इति स्थितम्॥ अत एव सर्वनामसंज्ञायां तदंतविधि-
सद्भावे द्वंद्वे चेति ज्ञापकमित्युक्तं॥ विभाषा जसि॥ जसीति कार्यापेक्षयाधिकरणसप्तमी॥ जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्त्तव्ये द्वं-
द्वे उक्तसंज्ञा वा स्यात्॥ वर्णाश्रमेतराः॥ शीभावं प्रत्येवेयं विभाषेति व्याख्यातं॥ तेन अकच् न भवति॥ तस्मिन् कर्त्तव्ये द्वंद्वे चेति नित्यं निषे-
धात्॥ अतस्तत्र कप्रत्यय एव भवति॥ वर्णाश्रमेतरकाः॥ केन व्यवधानान्नेह शीभावः॥ अकचि तु कृते तु तन्मध्यपतितन्यायेन शीभावः स्या-
देव॥ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च॥ एते जसः कार्यं प्रति सर्वनामसंज्ञा वा स्युः॥ प्रथमे प्रथमा इत्यादि शेषं रामवत्॥ नेमे नेमाः॥
शेषं सर्ववत्॥ इहापि प्राग्वच्छीभावं प्रत्येव संज्ञाविकल्पः। तेन प्रथमका इत्यादावकज् न॥ अन्यथा प्रथमके इति स्यात्॥ उभयशब्दस्य तु ने-
यं विभाषा किंतु नित्या संज्ञेति गणव्याख्याप्रसंगे नोपपादितं॥ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायां॥ स्वमज्ञातिधनाख्या-
यां॥ अंतरं बहिर्योगोपसंव्यानयोः॥ एषां त्रिसूत्रीगणमध्येपि पठ्यते सा च व्याख्याता तथापि अस्मिन्नेवोपाधौ नित्या संज्ञा प्राप्ता तत्रैव जसि वि[illegible]
[illegible]नया विधीयते॥ पूर्वे पूर्वा इत्यादि॥ स्वे स्वा आत्मीया इत्यर्थः। आत्मान इति वा॥ इह त्रिसूत्र्यां यद्वक्तव्यं तत् सर्वं गणव्याख्यावसर एवो[illegible]

सा॰कौ॰ विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानं॥ द्वितीयस्मै द्वितीयायेत्यादि॥ एकादेशस्य पूर्वांतग्रहणेन ग्रहणाल्लिंगविशिष्टपरिभाषया वा।
९५ द्वितीयस्यै द्वितीयायै इत्याद्यपि सिद्धं॥ एवं च विभाषा द्वितीयातृतीयाभ्यामिति सूत्रं न कर्त्तव्यं भवति॥ अर्थवत्वात्॥ प्रतिपदोक्तत्वाच्च
द्वेस्तीयस्त्रेः संप्रसारणं चेत्ययमेव गृह्यते॥ तेनेह न प्रकारवचने जातीयर् पटुजातीयाय॥ जात्यंताच्छ बन्धुनि॥ ब्राह्मणजातीयाय॥ मु-
खपार्श्वशब्दाभ्यां तसंताभ्यां गहादिभ्यश्चेति छः मुखतीयाय॥ पार्श्वतीयाय॥ तथा द्वितीयाय भागायेत्यत्रापि न भवति पूरणाद्भागे ती-
यादन् स्वनिष्कृते यस्येति चेत्यकारलोपे च सति तीयस्य लाक्षणिकत्वादिति दिक्॥ इति सर्वनामसंज्ञाप्रकरणं॥ स्वरादिनिपातमव्ययं॥ स्व-
रादयो निपाताश्चाव्ययसंज्ञाः स्युः॥ प्राग्रीश्वरान्निपाता इत्यारभ्याधिरीश्वर इत्येतत् पर्यंतं ये वक्ष्यंते ते निपाताः॥ नन्वेवं चादिष्वेव स्वराद-
योपि पठ्यंतां प्रकृतसूत्रं च त्यज्यतां॥ अव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेन्न॥ चादीनां ह्यसत्ववाचिनामेव निपातसं-
ज्ञा॥ पशुर्लोधं नयंति पशु मन्यमाना इत्यत्र सम्यगर्थस्य पशुशब्दस्य न तु सत्ववाचिनां॥ यथा पशूंस्तांश्चक्रे वायव्यानित्यादौ स्वरा-
दीनां तु सत्ववचनानामव्ययसंज्ञेष्यते॥ स्वस्ति वाचयति॥ स्वः पश्येति यथा॥ अथ प्राग्रीश्वरान्निपाताः स्वरादीनि चादयोसत्वे इति कु-
तो न सूत्रितं इति चेन्न॥ एवं हि सति निपात एकाजनाङिति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत ततो हि स्वरादिषु किमोत् दक्षि-
णादाजित्येकाचौ न स्तौ॥ के न प्रभृतयस्तु कृत एकाचः॥ यदि तु चादिरेकाजनाङिति क्रियेत तदा चादीनामसत्ववचनत्वं विशेषणं न
लभ्येत॥ ततश्चास्यापत्यमिमे दनस्तस्य संबोधनमे अ बेत्यत्र प्रगृह्यत्वं स्यात्॥ ननु चादयोसत्व इत्यत्रासत्व इति पाठविशेषणं॥ तथा राम॰
हि॥ चादय इति योगो विभज्यते॥ चादयो निपातसंज्ञाः स्युः॥ ततोसत्वे॥ इह शास्त्रे चादयोसत्वे ज्ञेयाः॥ ततश्च चादीनामसत्ववाचिनां ९५

पाठात् पर्युदासस्तेन एवेत्यादौ न दोषः ॥ एवं चोभेसंज्ञेन कर्त्तव्ये ॥ अव्ययं निपाताद् इति ॥ किंतु प्राग्रीश्वरान्निपाताद् इति वा अव्ययानीति वा
सूत्र्यताम् ॥ ततः स्वरादीनि ॥ तद्धितश्चासर्वविभक्तिरित्याद्यव्ययीभावश्चेत्यंतं सूत्र्यतां ॥ ततश्चादयोऽसत्वे इत्यारभ्य यावद् धीश्वरे वि
भाषा कृञीति ॥ तत्र यस्मिन् प्रदेशे निपातग्रहणं तत्र चादिग्रहणमस्तु ॥ अव्ययप्रदेशेऽव्ययग्रहणं निपातग्रहणं वेति ॥ उच्यते ॥ अव्ययसंज्ञा
विरहेऽन्वर्थसंज्ञाबललभ्यं वक्ष्यमाणं प्रयोजनं न सिद्ध्येत् ॥ निपातसंज्ञाविरहे तु शांतनवाचार्यप्रणीतस्य निपाता आद्युदात्ता इति फिट्
सूत्रस्य विषयविभागो न लभ्येत ॥ अथ फिट्शिट्नबादिशब्दानामिव निपातशब्दस्याप्यन्यतरएवार्थाध्यवसायः ॥ तर्ह्यव्ययसंज्ञामा
त्रेण निर्वाहः सुकर एवेत्यवधेयं ॥ महासंज्ञाकरेणमन्वर्थसंज्ञाविधानार्थं न व्येति विविधं विकारं न गच्छति ॥ सत्वधर्मान् लिंगसंख्याकारका
दीन्न गृण्हातीति यावत् ॥ तेनोपसर्जनप्रतिषेधः सिद्धः ॥ अत्युच्चैसो ॥ अत्युच्चैस इति ॥ अतिक्रांतप्रधानत्वेन सत्वधर्मपरिग्रहान्नेहाव्ययसं
ज्ञा ॥ ननु स्वरादिषूच्चैःशब्दः पठ्यते तत्र कथं तदंतस्य संज्ञेति चेन्न ॥ अन्वर्थसंज्ञयैव तदंतविधेरपि ज्ञापनात् ॥ अव्ययोपसर्जने प्रसंगाभावे
न तन्निरत्स्यर्थायास्तस्यावैयर्थ्यापत्तेः ॥ तेन परमस्वः ॥ परमोच्चैरित्यादौ स्वरादिप्राधान्येऽव्ययत्वं सिद्धं ॥ अव्ययसंज्ञाया अन्वर्थत्वमा
थर्वणे प्रणवविद्यायां श्रुतिरपि दर्शयति ॥ सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति ॥ एतेषु य
न्न व्येति किंतु सदृशमेकप्रकारं तदव्ययमिति योजना ॥ यद्वा यस्मान्न व्येति तस्मादव्ययमिति ॥ त्रिषु लिंगेषु सदृशं लिंगविशेषप्रतिपाद
ने सामर्थ्याभावादिति भावः ॥ विभक्तिषु कारकेषु वचनेषु च एकत्वादिसंख्यासु अव्ययीभावस्य यद्यपि लिंगकारकसंख्यायोगोऽस्ति तथा
पि वचनादव्ययत्वम् ॥ अथ स्वरादयः ॥ स्वरिति स्वर्गपरलोकयोः ॥ स्वर्गे ॥ द्यावेव यास्वर्जलधेर्जलेषु ॥ परलोके ॥ स्वर्यातस्य ह्यपुत्रस्येति ॥ अं

ग्र·कौ तरिति मध्ये अंतर्वाप्याश्चिरमनुचरः॥ प्रातरिति प्रत्यूषे प्रातः संध्यामुपासीत॥ एते त्रयोंतोदात्ताः इति काशिका॥ नन्वित्यं स्वः शब्दस्य स्वरि-
९५ तत्वात्॥ तथा च फिट्सूत्रम्॥ न्यङ्स्वरौ स्वरिताविति॥ प्रयोगश्च॥ अंतरिक्षमथो स्वः यत्तु प्रातःशब्द आद्युदात्त इति कश्चित्॥ नन्न॥ प्रात-
रग्निं प्रातरिंद्रं हवामहे इत्यादावंतोदात्तस्यैव प्रसिद्धतरत्वात्॥ पुनरित्याद्युदात्तः प्रथमे विशेषे च॥ अप्रथमे॥ पुनरुक्तं॥ किंपुनर्ब्राह्मणाः
पुण्याः॥ सनुतरित्यंतर्द्धाने॥ सनुतश्चोरो गच्छति उच्चैरिति महति॥ नीचैरित्यल्पे शनैरिति क्रियामांद्ये॥ ऋधगिति सत्ये वियोगशीघ्रसामी-
प्यलाघवेष्वित्यन्ये ऋते इति वर्जने॥ युगपदित्येककाले॥ आराद्दूरसमीपयोः॥ पृथगिति भिन्ने॥ एते सनुतप्रभृतयो नवांतोदात्ता इति काशि-
का॥ शनैश्चिरंतो अद्रिवः ऋधगित्था समर्त्यः। इत्यत्र तु शनैरृधक्शब्दावाद्युदात्तौ प्रयुज्येतेत्यप्रसिति अनीतेन्हि म्बो नागतेन्हि॥ दिवेति दि-
वसे रात्राविति निशिसायमिति निशामुखे चिरमिति बहुकाले मनागिति ईषदर्थे ईषदित्यल्पे जोषमिति सुखमौनयोः॥ तूष्णीमिति मौने बहिस् अ-
वस् इत्येतौ बाह्ये॥ समयेति समीपे मध्ये च ग्रामं समया निकषेत्यंतिके॥ विलंघ्य लंकां निकषा हनिष्यति स्वयमित्यात्मनेत्यर्थे॥ स्वयंकृतं॥ वृथेति
व्यर्थे॥ नक्तमिति रात्रौ॥ नञिति निषेधे हेताविति निमित्तार्थे॥ इद्धेति प्राकाश्ये॥ अद्धेति स्फुटावधारणयोः॥ तत्वातिशययोरित्येके॥ सामीत्य-
र्द्धे जुगुप्सितयोः॥ एते त्वप्रभृतयः साम्यंता द्वाविंशतिरंतोदात्ता इति काशिका॥ दिवा चिन्नमः कृण्वंति वृष्णा सृजत्पथिभिः॥ नक्तंदद्दशे कुहचि-
द्विवेयुः॥ इत्यादौ तु आद्युदात्ताः प्रयुज्यंते॥ वत्॥ वत्प्रत्ययांतमव्ययसंज्ञं स्यात्॥ ब्राह्मणवत्॥ तेन तुल्यमित्यादिभिर्विहितो वतिरिह गृह्यते न तू-
पसर्गाद्धात्वर्थ इति विहितः सत्वार्थकत्वात्॥ यदुद्वतो निवतो यासि वप्सत्॥ सनेति नित्ये सनाजात इंद्रः। सनातनः॥ सनत् इदमपि नित्ये स- राम
नत्कुमारः॥ तिरसित्यं तर्द्धौ तिर्यगर्थे च तिरोहितः॥ तिरःकाष्ठं कुरु। परिभूते नु लक्षणा॥ तिरस्कृतो गिरिरिति यथा॥ स्वनेत्यादयस्तिरोंता आद्यु ९५

दात्ता इतिकाशिका ।।सनाच्चहोतानव्यश्चसत्ति निरःपुरूविदश्चि नेत्यादौत्वंत्तोदात्तं प्रयुज्यते।अंतरेत्यंतोदात्तोमध्येविनार्थे।।त्वांमाचांतरा कमंडलुः।। त्वामंतरातामरसायनास्ति।।अंतरेणेतिवर्जने।।अंतरेणहरिंनसुखं।।ज्योगितिकालभूयस्त्वेप्रश्नेशीघ्रार्थेसंप्रत्यर्थेच।।कमिति वारिमूर्द्धनिंदासुखेषु।।वारिणिकंजंपद्मं मूर्द्धिकंजाःकचाःनिंदायां कंदर्पःसुखेकंयुःशमिति सुखेशंकरःसहसेत्याकस्मिकाविमर्षयोः।।दिवः प्रसूनंसहसापपात।।सहसाविदधीतनक्रियां।।स्वधेतिपितृदाने।।अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु भूषणे अलंकारः।।पर्याप्तौ अलमस्यधनंबहु इत्यर्थः।।शक्तौअलंमल्लोमल्लायशक्त इत्यर्थः।।वारणेअलमतिप्रसंगेननिषेधे आलप्यालमिदंबभ्रोर्यत्सदारानपाहरत्।।नवक्तव्यमित्यर्थः।।वषडितिहविर्दाने विनेतिवर्जने।।नानेत्यनेकविनार्थयोः।। ।।नानाभृतंदेहभृतांसमाजं।।नानानारींनिष्फलालोकयात्रा।।स्वस्तीतिमंगले।।अन्यदित्यन्यार्थे।।देवदत्तआयातोन्यच्चयज्ञदत्तइति ।।अस्तीतिसत्तायां।।अस्तिपरलोकइतिमतिरस्यास्तिकः उपांश्विति अप्रकाशेम्वारणरहस्ययोः क्षमेतिक्षांतौ।।क्षमाकरोतुभवान्।।विहायसेतिवियदर्थे।।विहायसारम्यमितोविभाति।।दोषेतिरात्रौमृषामिथ्येत्येतौवितथे।।मुधेतिव्यर्थे।।त्वातोसुनुकसुनः।। कृन्मकारसंध्यक्षरांतःअव्ययीभावश्चइदंगणसूत्रत्रयम्।।अष्टाध्यायीस्थसूत्र्यासमानार्थे वैयर्थ्यंतूद्दिश्यते।।पुरेति अविरतेचिरातीते भविष्यदासन्नेच।।पुराधीतेअविरतमपाठीदित्यर्थः।।पुरिलुङ्चेति लट्।। चिरातीते। पुरापिनवंपुराणं।।पुरेदमूर्द्धंभवतीतिवेधसाप्यसमनंतरंभविष्यतीत्यर्थःस्यात्प्रबंधेचिरातीतेनिकटागामिकेपुरेत्यमरः।।मिथ्येतिरहःसहार्थयोः।।मंत्रयंतेमिथोमिथसित्यपिपूर्ववत्।।प्रायसितिबहुकाल्येमुहुसितिपुनरर्थे।।प्रवाहुकमितिसमकालेयुगपदर्थेच।। केचित्तुप्रवाहिकेतिपठंति।।आर्यहलमितिबलात्कारे शाकटायनस्त्वाह।।आर्येतिप्रतिबंधेहलमितिप्रतिषेधविवादयोरिति।।आम्

प्रा·कौ· तरिति मध्ये अंतर्वीप्याश्चिरमनुचरः॥ प्रातरिति प्रत्यूषे प्रातः संध्यामुपासीत॥ एतेत्रयोंतोदात्ताः इतिकाशिका॥ नन्वित्यंस्वः शब्दस्यस्वरि
९५ तत्वात्॥ तथाचफिट्सूत्रम्॥ न्यङ्स्वरौ स्वरितावितिं॥ प्रयोगश्च॥ अंतरिक्षमथोस्वः यत्तुप्रातः शब्द आद्युदात्तइतिकश्चित्॥ तन्न॥ प्रातर्
रग्निंप्रातरिंद्रंहवामहे इत्यादावंतोदात्तस्यैवप्रसिद्धतरत्वात्॥ पुनरित्याद्युदात्तः प्रथमेविशेषेच॥ अप्रथमे॥ पुनरुक्तं॥ किंपुनर्ब्राह्मणाः
पुण्याः॥ सनुतरित्यंतर्द्धाने॥ सनुतश्चोरोगच्छतिउच्चैरितिमहति॥ नीचैरित्यल्पेशनैरितिक्रियामांद्ये॥ ऋधगितिसत्येवियोगशीघ्रसामी
प्यलाघवेष्वित्यन्येऋते इतिवर्जने॥ युगपदित्येककाले॥ आराद्दूरसमीपयोः॥ पृथगितिभिन्ने॥ एतेसनुतप्रभृतयोनवांतोदात्ताइतिकाशि
का॥ शनैश्चियंतोअद्रिवः ऋधग्मित्वासमर्त्यः। इत्यत्रतुशनैर्ऋधक्शब्दावाद्युदात्तौप्रयुज्येतेत्यसितिअनीतेन्हिष्वोनागतेन्हि॥ दिवेति दि
वसेरात्राविति निशिसायमिति निशामुखेचिरमिति बहुकालेमनागिति ईषदर्थे ईषदित्यल्पेजोषमितिसुखमौनयोः॥ तूष्णीमिति मौनेबहिस्स्अ
वस् इत्येतौ बाह्ये॥ समयेति समीपे मध्येच ग्रामंसमयानिकषेत्यंतिके॥ विलंघ्यलंकांनिकषाहनिष्यति स्वयमित्यात्मनेत्यर्थे॥ स्वयंकृतं॥ वृथेति
व्यर्थे॥ नक्तमितिरात्रौ॥ नञितिनिषेधे हेताविति निमित्तार्थे॥ इद्धेतिप्राकाश्ये॥ अद्धेतिस्फुटावधारणयोः॥ तत्वातिशययोरित्येके। सामीत्य
र्द्धजुगुप्सितयोः॥ एतेत्यस्त्रप्रभृतयः साम्यंताद्वाविंशतिरंतोदात्ता इतिकाशिका॥ दिवाचिन्नमः कृण्वंतिवृथासृजत्पथिभिः॥ नक्तंददृशे कुहचि
द्विवेयुः॥ इत्यादौतु आद्युदात्ताः प्रयुज्यंते॥ वत्॥ वत्प्रत्ययांतमव्ययसंज्ञंस्यात्॥ ब्राह्मणवत्॥ तेनतुल्यमित्यादिभिर्विहितोवतिरिह गृह्यते॥ नमू
पसर्गोद्वात्वर्थइति विहितः सत्वार्थकत्वात्॥ यदुद्रुतोनिवतोयासिवप्सत्॥ सनेतिनित्ये सनाजातइंद्रः। सनातनः॥ सनत् इदमपिनित्येस राम
नत्कुमारः॥ तिरसित्यं तर्द्धौतिर्यगर्थेचतिरोहितः॥ तिरःकाष्ठंकुरु। परिभूतेनुलक्षणा॥ तिरस्कृतो रिरितियथा। सनेत्यादयस्तिरोंता आद्यु ९५

दात्ता इतिकाशिका ॥ मनाचहोता नव्यश्चसस्ति निरःपुरूचिदश्वि नेत्यादौ त्वंत्तोदानं प्रयुज्यते॥अंतरेत्यंतोदानोम ध्येविनार्थे॥ त्वांमांचांतरा
कमंडलुः॥ त्वामंतरातामरसायतास्ति॥ अंतरेणेतिवर्जने॥ अंतरेणहरिंनसुखं॥ ज्योगितिकालभूयस्त्वेप्रश्नेशीघ्रार्थेसमम्यर्थेच॥ कमिति
वारिमूर्द्ध्नि निंदासुखेषु॥ वारिणिकंजंपद्मं मूर्ध्निकंजाः कचाः निंदायां कंदर्पःसुखेकंयुः शमिति सुखेशंकरः सहसेत्याकस्मिकाविमर्शयोः॥ दि
वःप्रसूनैसहसापपात॥ सहसाविदधीतनक्रियां॥ स्वधेतिपितृदाने॥ अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु भूषणेअलंकारः॥ पर्या
प्तौ अलमस्यधनंबहु इत्यर्थः॥ शक्तौ अलंमल्लोमल्लायशक्त इत्यर्थः॥ वारणेअलमतिप्रसंगेननिषेधेआलप्यालमिदंवभ्रोर्यत्सदाराननपाहर
त॥ नवक्तव्यमित्यर्थः॥ वषडितिहविर्दानेविनेतिवर्जने॥ नानेत्यनेकतिनार्थयोः॥ ॥ नाना भृतंदेहभृतांसमाजं॥ नानानारींनिष्फलालो
कयात्रा॥ स्वस्तीतिमंगले॥ अन्यदित्यन्यार्थे॥ देवदत्तआयातोन्यच्चयत्तदत्तइति ॥ अस्तीतिसत्तायां॥ अस्तिपरलोकइतिमतिरस्यास्तिकः
उपांश्विति अप्रकाशेन्वारणरहस्ययोः क्षमेतिक्षांतौ॥ क्षमाकरोतु भवान्॥ विहायसेतिवियदर्थे॥ विहायसारम्यमितोविभाति॥ दोषेतिरा
त्रौमृषामिथ्येत्येतौवितथे॥ मुधेतिव्यर्थेत्क्तातोसुन्कसुनः॥ कृन्मकारसंध्यक्षरांतःअव्ययीभावश्चइदंगणसूत्रत्रयम्॥ अष्टाध्यायीस्थ
त्रिसूत्र्यासमानार्थवैयर्थ्यंतूद्दिष्यते॥ पुरेति अविरतेचिरातीतेभविष्यदासन्नेच॥ पुराधीतेअविरतमपाठीदित्यर्थः॥ पुरिलुङ्चेतिलट्॥ मि
चिरातीते। पुरापिनवंपुराणं॥ पुरेदमूर्द्ध्वंभवतीतिवेधसमनंतरंभविष्यतीत्यर्थः स्यात् प्रबंधेचिरातीतेनिकटागामिकेपुरेत्यमरः॥ मि
थोइतिरहःसहार्थयोः॥ मन्त्रयंतेमिथोमिथःसित्यपिपूर्ववत्॥ मायसितिबहुकाल्येमुहुसितिपुनरर्थे॥ प्रवाहुकमितिसमकालेयुगपदर्थेच॥ प्र
केचित्तुप्रवाहिकेतिपठंति॥ आर्यहलमितिवलात्कारे शाकटायनस्त्वाह॥ आर्येतिप्रतिबंधेहलमितिप्रतिषेधविवादयोरिति॥ आमी

स्यामिति पौनःपुन्ये साकं सार्द्धमित्येतौ सहार्थे नमसिति नतौ हिरुगिति वर्जने धिगिति निंदाभर्त्सनयोः॥ तसिलादिस्तद्धितएधाच्पर्यंतः॥
शस्तंसी कृत्वसुच्॥ सुच् आस्थालौ च्व्यर्थाश्चेति॥ तसिलादिरित्यादेरयमर्थः॥ पंचम्यास्तसिलित्यारभ्य एधाच्चेत्येतदंतैः सूत्रैरुक्तो
स्तद्धितस्तदंताः स्वरादिषु बोद्धव्याः॥ तथा बह्वल्पार्थाच्छस्॥ प्रतियोगे पंचम्यास्तसिः क्रियाभ्यावृत्तिगणने कृत्वसुचं॥ द्वित्रिचतुर्भ्यः सु
च्॥ इण आसिरित्युणादिसूत्रेण आसिप्रत्ययो विहितः॥ अपा इत्युदाहरणं॥ प्रत्नपूर्वविश्वेमात्थाल् छंदसि संपद्यकर्त्तरि च्विः विभाषा सा
तिकार्त्स्न्ये देये त्रा च॥ एतदंता अपि ग्राह्याः॥ अम् इति अमुच्छंदसीति विहितः आमित्यंगीकारे आम् कुर्मः किमेत्तिङव्ययघादाम्॥
कास्प्रत्ययादाममंत्रे लिटीत्यपीति केचित्॥ प्रतामिति ग्लानौ॥ प्रशानिति समानार्थे॥ प्रशान् देवदत्तो यज्ञदत्तेन प्रतानिति विस्तारे॥ मा
इति निषेधे माभवतु माभविष्यति॥ माङिति निषेधाशंकयोः माकार्षीत्॥ अस्य पापं माभूदिति॥ आकृतिगणश्चायं॥ तेनान्येपि ग्राह्याः॥ तु
यथा भामिति शैघ्र्ये अल्पे च काममिति स्वाछंदे प्रकाममित्यतिशये॥ भूय इति पुनरर्थे सांप्रतमिति न्याय्ये परमिति किंत्वर्थे गुणवानसि परं मद
कारी सास्मादिति प्रत्यसे साचीति तिर्यगर्थे सत्यमित्यर्द्धांगीकारे मन्विति शैघ्र्ये॥ आश्विति च॥ संवदिति वर्षे॥ अवश्यमिति निश्चये सपदि शैघ्र्ये
बलवदित्यतिशये बलवदपि शिक्षितानां प्रादुस् आविस् इति प्रकाशे अनिशं नित्यं नित्यदा सदा॥ अजस्रं संततम्॥ एतेसातत्ये उषेति रात्रौ उषा
तनो वायुः॥ रोदसी द्यावापृथिव्यर्थे॥ ओमिति ब्रह्मवाची भूर्भुवरिति पृथिव्यंतरिक्षलोकयोः भूर्लोकः भुवर्लोकः॥ झटिति झगिति तरसा इति
शैघ्र्ये॥ स्राक् द्रुतं शैघ्र्यं क्षिप्रमिति च॥ अतीवेत्यतिशये सुखु इति प्रशंसायाम्॥ कु इति कुत्सिते षदर्थयोः॥ कापथः कवोष्णम्॥ अंजसेति न
त्वरीघ्रार्थयोः अ इति वहिरर्थे मिथुरिति ह्वावित्यर्थे॥ मिथुर्मन्त्रयेते॥ विष्वगिति समंतात् भावे भाजगिति शैघ्र्ये॥ भाजक्पचति॥ अन्वक् इ

सानुकूल्ये॥ चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः॥ आद्यशब्दाच्चिरं चिरेण चिरादिति गृह्यते अस्तमिति विनाशे॥ आनुषगित्यानुपूर्व्ये॥
आनुषक् प्रविशतीह बंधुना॥ अनुमाने नुषगिति शाकटायनः॥ आनुषदित्निदांतं केचित्॥ अम्नस् इति शीघ्रसाम्प्रतिक्रियोः॥ अम्नरेवेति रेफो
ऽप्यस्माने कृतिप्युक्तार्थे वरमिति हि ईषदुत्कर्षे दुष्टु निकृष्टार्थे बलादिति हठार्थे॥ शु इति पूजायां॥ शुनासीरः। स्त्रमेति स्त्रांतौ॥ अर्वागित्वि प्राची
ने। शुदिशु क्लृप्तपक्षे वदिकृष्णपक्षे इति स्वरादिः॥ तद्धितश्चासर्वविभक्तिः॥ तद्धितांतः शब्दोऽव्ययं स्यात्॥ यस्मात् सर्वा वचनत्रयात्मिका विभक्ति
र्नोत्पद्यते किं त्वेकेवचनम्॥ ततः तत्र तद्धित इति किम्॥ एकः द्वौ बहवः असर्वविभक्तिरिति किम्॥ औपगवः॥ ननु गोदौ वरणा इत्यादावति
व्याप्तिः नच लुब्योगाप्रख्यानात् योगप्रमाणे च तदभावेऽदर्शनं स्यादिति पठतः सूत्रकृतो मते नैते तद्धितांता इति वाच्यम् एवमपि पंचैव पंचकाः
शकुनयः उभयो मणिः पचतिकल्पं पचतिरूपमित्यादावतिव्याप्तेः दुर्वारत्वादिति चेत्॥ अत्राहुर्वार्त्तिककारः सिद्धं तु पाठात्॥ तसिलादयः
प्राक्पाशपः शस्प्रभृतयः॥ प्राक्समासांतेभ्यः मांतः कृत्वोर्थः॥ तसिवतीनानाञाविति॥ नच इवे प्रतिकृताविस्यधिकारे प्रत्नपूर्वविश्वेमा
त्थाल् छंदसि इति विधानात् तदंतस्यासंग्रह इति वाच्यम्॥ प्रकारवचने थालिति प्रकरण एव प्रत्नादिभ्य इवे थाल् छंदसि॥ प्रकारवचने इ
दमस्थमुरिति पठितुं शक्यत्वात् स्वरादिगणेऽप्यस्थाल्विधिपाठेन सिद्धत्वाच्च॥ मान्त इति॥ आम् अम् चेत्यर्थः॥ तसिप्रतियोगे पंचम्यास्त
सिः॥ नैनेकदिक्नसिश्चेति ह्यावपि गृह्येते स्यादेतत्॥ सूत्रमते कथमुक्तिसंभवः यावता कर्मणि द्वितीयाद्येकयोर्द्विवचनैकवचने इत्यादी
नां स्वादिवाक्ये नैकवाक्यतापक्षेऽव्ययेभ्यः स्वाद्युत्पत्तिरेव नास्ति॥ अव्ययादाप्सुप इति ज्ञापके ननु सर्वा विभक्तयः उच्यंते। अव्यये
भ्यः सप्तानामपि विभक्तीनां त्रीण्यपि वचनानि तथा सप्तानामपि एकवचनान्येव अथवा प्रथमाया एव वचनत्रयम्॥ यद्वा प्रथमायाः एकवचन

प्र·कौ मेवेति पक्षश्चतुर्थं यद्यपि ग्रन्थेषु लभ्यते तथापि प्रथमैकवचनमात्रमेवेति चतुर्थपक्ष एव क्षोदक्षमः॥ तमेव गृहीत्वा सूत्रस्याप्युक्तिसंभवोऽस्प
९७ ष्टः इतरस्तु पक्षस्त्रिकमभ्युच्चयवादमात्रेणोपन्यस्यते न तु तात्विकम्॥ तथाहि॥ यदि कर्मणि द्वितीयैव अभिहिते प्रथमैव॥ एकत्वे एकवचनमे
वेत्यादिरर्थनियमः॥ यदि वा द्वितीया कर्मण्येवेत्यादिः प्रकृतार्थापेक्षो विभक्तिनियमः॥ यदि वा एकवाक्यत्वे सामान्यापेक्षवचनविभक्तिनियमे
पि वा अव्ययादाप्सुप इति सामान्यापेक्षज्ञापकाद्विभक्तिसिद्धिस्तदा अविशेषात् सप्तानामपि विभक्तीनां त्रीण्यपि वचनानीति पक्षो लभ्यते य
दा तु द्वित्वे द्विवचनमिति सूत्रयित्वा एकवचनमित्येव पृथक् सूत्र्यते॥ तदन्यथानुपपत्त्या च कर्मण्येव द्वितीयानकारणाद्द्वित्वबहुत्वयोरेव द्विवच
नबहुवचने न त्वेकस्य इत्यादिक्रमेण सजातीयापेक्षो नियमः न तस्माद्व्ययेभ्यः सकलविभक्तिप्राप्तावेकवचनमित्यनेन नियमः क्रियते अत्रैक
वचनं चान्यच्च प्राप्नोति तत्रैकवचनमेवेति यदि वा सामान्यापेक्षनियमाश्रयणादव्ययात्प्राप्तावेकवचनमिति सूत्रं क्रियते तस्य च ङ्याप्प्रातिप
दिकादित्यनेनैकवाक्यतया च ङ्याबादिभ्यः कर्मादिष्वेकवचनं सिद्धमेवेति॥ एतत्सूत्रबलादव्ययेभ्य एव भवतीति ङ्यन्तात्तु न भवति। एकवच
नमित्यस्याप्राप्तप्रापणार्थत्वे पि ङ्याप्सूत्रेणैकवाक्यत्वात्॥ प्रदेशान्तरे पाठसामर्थ्याच्च स्वातन्त्र्येणापि ङ्याप्सूत्रं विधायकमिति द्वित्वे द्विव
चनमित्यादेर्नियामकत्वं संगच्छते॥ तदाव्ययेभ्यः सर्वाण्येकवचनानीति॥ द्वितीयः पक्षो लभ्यते॥ यदा तु द्वितीया कर्मण्येवेत्यादिः सा
मान्यापेक्षः प्रत्ययनियमः॥ अव्ययेभ्यस्तु प्रथमैव प्रथमा प्रातिपदिकार्थ एवेति नियमेन हि कर्माद्याधिक्यस्थल एव सा निवार्य्यते एकयो
रिति तु यथान्यासमेव तत्र चैकवचनं न संख्यान्तरे इति सजातीयापेक्षप्रत्ययनियमपक्षस्तदा निःसंख्येभ्यो व्ययेभ्यः प्रथमायाः वचनत्रय राम
मपि भवतीति तृतीयः पक्षो लभ्यते त्रिष्वप्यमीषु पक्षेषु पचति कल्पं पचतीरूपमित्यादौ दोषः॥ तत्र हि प्रथमैकवचनमात्रमिष्यते उक्तपक्ष ९७

नयेप्यधिकं प्राप्नोति॥ तस्मात् द्वितीयपक्षरीत्या सकलैकवचनानि प्राप्यैकवचनमित्येकत्वस्य विवक्षितत्वात् प्रथमातिक्रमे कारणाभा
वात् प्रथमैकवचनमेव कर्त्तव्यमिति सिद्धांतः एवंच सत्यपि सूत्रस्योक्ति संभवे पचति रूपमित्यादावतिव्याप्तिभयात् परिगणनमेव क
र्त्तव्यं सूत्रं तु न कर्त्तव्यमिति स्थितम्॥ कृन्मेजंतः॥ कृद्यो मांत एजंतश्च तदंतमव्ययसंज्ञं स्यात्॥ स्वादुंकारं भुंक्ते॥ वक्षेराय॥ तुमर्थे सेइति
वचेः सेप्रत्यये रूपं॥ नन्वेवं कारपांचकारेत्यामंतस्य न प्राप्नोति॥ अत्रातिङ्भावितया लिटः कृत्वेपि मान्तत्वाभावात्॥ सत्यम्॥ स्वरादिष्वामिति
पाठात् सिद्धं यदि तु तत्र तद्धितस्यैव ग्रहणं तर्हीह कृदंतत्वादुत्पन्नानामपि सुपामाम इति लुग् भविष्यति॥ तत्र हि लेरिति नानुवर्त्तते॥ नन्वे
वंतरवादेरपि तुगापत्तिः॥ अपरिसमाप्तार्थतया तरवाद्युत्पत्तेरेवाभावात्॥ अपरिसमाप्तार्थत्वं च संख्याकर्त्रादिविषयकोत्थिताकांक्षत्वं
अत एवानुप्रयोगः प्रार्थ्यते॥ आमंतार्थगतप्रकर्षादिप्रतीतिस्तु अनुप्रयोगादुत्पन्नेन तरवादिना भविष्यति॥ अत एव सूत्रितं कृञ्चानुप्रयुज्यत इ
ति अनुशब्दो हि व्यवहितविपर्यस्त तस्य च प्रयोगनिरन्तय इति वक्ष्यते॥ यद्वा पूर्वसूत्रोक्तनिष्कर्षरीत्या आमंतात् सोरेवोत्पत्तौ हल्ङ्याप्भ्यो दि
लोपो भविष्यति अस्तु वा कृदंतं यन्मेजंतेभ्य इति वा क्यार्थः॥ आमेनेहि प्रत्ययलक्षणेन कृदंतं स्मृयते च मान्तं॥ नन्वेवं प्रतामौ प्रतामः लवमात्व क्षणो
णो लोमित्यादावतिप्रसंग इति वाच्यम् स्वरादिषु प्रशान् शब्दस्य पाठेन धातोः प्रत्ययलक्षणे न कृदंतत्वमुपजीव्याव्ययसंज्ञा न भवतीति ज्ञा
पितत्वात्॥ नच मो नो धातोरिति नत्वे कृते नैतन्मांतमिति किर्कथं ज्ञापकेति वाच्यं नत्वस्यासिद्धत्वात्॥ नच शान्तेजनइत्यस्यार्थांतरवृत्ति
त्वे शानयतीत्यादिप्रयोगसिद्ध्यर्थं च रादित्वस्वीकारेण नित्यसनंतत्वाभावात्तस्यैवापि स्वरादिषु पाठ इति वाच्यम्॥ अनभिधानात् तस्मा
त् क्विपोनुत्पत्तेः॥ अत्र च ज्ञापकत्ववर्णनपरं भाष्यमेव प्रमाणं॥ अव्ययमित्यन्वर्थसंज्ञाबलादसत्त्वार्थस्य साम्यवाचिन एव प्रशामस्या

शा॰कौ॰ स्य तत्र ग्रहणं न तु शांतिमह्याचकस्य तेन प्रशामौ प्रशाम इत्युदाहरणं न विरुध्यते॥ स्वस्रादीनां तु सत्त्ववाचिनामपि पाठसामर्थ्याद्व्ययत्वेमि-
९८ तिविशेषः॥ अंतग्रहणसामर्थ्यान्नित्ययोगे बहुव्रीहिराश्रीयते॥ तेनौपदेशिकस्य ग्रहणात्तेनेह अधयेच्चिकीर्षवो कुंभकारेभ्यः॥ वस्तुतस्त्वं-
तग्रहणं व्यर्थं॥ लक्षणप्रतिपदोक्तपरिभाषयैवातिप्रसंगभंगात्॥ ननु वर्णग्रहणे इयं परिभाषा न प्रवर्त्तते अन्यथैचोयवायाव इत्यादावतिप्रसं-
गादिति चेन्न॥ एवमपि वहिरंगपरिभाषया सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषयावेष्टसिद्धेः॥ अयमत्रार्थः॥ सन्निपा-
तः॥ संश्लेषः तन्निमित्तो यो विधिः स तद्विघातस्यानिमित्तं॥ तं सन्निपातं यो विहंति स तद्विघातस्तस्येत्यर्थः। एवं च सुप्सन्निपातलक्षणस्य
घेर्ङितीति गुणस्य बहुस्वच्छनस्य स्वर्त्यादित्येतस्याव्ययसंज्ञां प्रतिनिमित्तत्वं नेत्यवधेयम्॥ तथा परिभाषायाः प्रयोजनांतराण्यपि संति दि-
ङ्मात्रं तूच्यते श्रीपं कुलं तस्मै श्रीपायेत्यत्रातो लोपो न भवति॥ तथा अगव्यीत्॥ अनाव्यीत् यस्य हल इति लोपो न॥ तथातिजरं कुलं॥ अतिजि-
रेण अतिजरैः अतिजरादित्यत्र अम् इन ऐस् आत् इत्येतेषु अकारमुपजीव्य कृतेषु सत्सु जरसादेशो न भवतीत्यादि॥ अनित्या चेयं परिपरि-
भाषा कष्टाय क्रमणे न यासयोरित्यादिज्ञापकात्॥ तेनाग्निमानित्यत्र ह्रस्वनुड्भ्यां मतुविति अंतोदात्ताद्ध्रस्वांतात् परस्य मतुप उदात्तत्वे कृते
शेषनिघातेन प्रकृतेरनुदात्तत्वं भवत्येवेति दिक्॥ गोर्ग्लौनौरित्यत्र नेदं सूत्रं प्रवर्त्तते॥ उणादीनामव्युत्पन्नत्वात्॥ व्युत्पत्तिपक्षेपि चिरण्य य॰
मित्सुग्रहि सूत्रेण डौ डो प्रत्ययांताम्ब्यं त एवाव्ययमिति नियमस्य कृतत्वात्॥ क्त्वातोसुनकसुनः॥ एतदंतमव्ययं स्यात्॥ कृत्वा पुरा सूर्य-
स्योदेतोः॥ पुरा वत्सानामपाकर्त्तोः॥ भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्॥ पुराक्रूरस्य विसृपो विरप्शिन्॥ पुराजन्तुभ्य आ॰ राम
आतृदः॥ सृपितृदोः कसुन्निति कसुन्॥ अव्ययीभावश्च॥ अयमव्ययसंज्ञः स्यात्॥ विषयपरिगणनं कर्त्तव्यम्॥ लुकि मुखस्वरोपचारयो- ९८

निवृत्तौ चेति ।उपाग्नि प्रत्यग्नि अव्ययादाप्सुप इति सुपो लुक् ॥ उपाग्निमुखः प्रत्यग्निमुखः ॥ मुखंस्वांगमित्युत्तरपदांतोदात्तत्वे प्राप्ते नाव्ययदिक्
शब्द गो महत् स्थूल मुष्टि पृथु वत्सेभ्य इति प्रतिषेधः ॥ तथा च बहुव्रीहौ प्रकृत्येति पूर्वपद प्रकृतिस्वर एव भवति ॥ पूर्वपदं च समासस्वरेणांतोदा
त्तम् ॥ विसर्गस्यानि कस्य सकारस्योपचार इति प्राचां संज्ञा ॥ तन्निवृत्तौ यथा ॥ उपपयः कारः उपपयः कामः इहातः कृकमीति प्राप्तं सत्वमंन
व्ययस्येति पर्युदस्यते ॥ इह मुखस्वर निवृत्तिरेव मुख्यं प्रयोजनम् ॥ लुक्तु नाव्ययीभावादत इति विशेषप्रतिषेधात् सिद्धः उपचारनिवृ
त्तिरपि न प्रयोजनम् ॥ अतः कृकमीत्यत्रानुत्तरपदस्थस्येत्यनुवृत्त्यैव तत्सिद्धेः ॥ परिगणनं किम् ॥ उपाग्न्यधीयान ॥ परांगवद्भावेन षाष्ठमामंत्रि
तस्य चेत्याद्युदात्तत्वं यथा स्यात् ॥ तत्रत्यव्ययानां प्रतिषेध उपसंख्यातः उच्चैरधीयानेत्यादौ मा भूदिति ॥ तथोपाग्निक मित्यादौ अव्ययसर्वनाम्ना
मित्यकच् न ॥ उपकुंभंमन्यः खित्यनव्ययस्येत्यनुवर्तमाने रुर्द्विषेति मुम् प्रतिषेधो न ॥ उपकुंभीभूतः ॥ अस्य च्वावित्यस्योपसंख्यानिकः
प्रतिषेधो न भवति ॥ वृद्धास्त्विदं सूत्रं न कर्त्तव्यम् ॥ लुकउपचारनिवृत्तेश्चान्यथोपपत्तेरुक्तत्वात् ॥ मुखस्वरनिवृत्तिः परमवशिष्यते । तत्र
केचिदाहुः मुखस्वरोत्रेष्यत एव ॥ यद्यपि चावत् प्रयोजनं स्यात् तत्रैवापंब्रूयान्नाव्ययीभावाच्चेति इति भाष्यस्वरसादिति ॥ अन्ये तु अनव्यय
मव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानादेव मुखस्वरनिवृत्तिर्भविष्यतीति स्यादेनत ॥ स्वरादित्वेनैव सिद्धत्वात्तद्धितश्चेत्यादि च तुःसूत्री व्यर्था ॥
तत्र हि तसिलादिस्तद्धित एधाच्पर्यंत इत्यादिनाभ्यर्थाश्चेत्यंतेन आसिमौणादिकं वर्जयित्वा तद्धितश्चासर्वविभक्तिरित्यस्यार्थः संगृह्य
ते कृन्मकारसंध्यक्षरांत इत्यनेन कृन्मेजंत इत्यस्यार्थः संगृह्यते ॥ क्त्वातोसुन्कसुनो व्ययीभावश्चेति सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति
॥ अत्राहुः ॥ पुनर्वचनमनित्यत्वज्ञापनार्थं ॥ तेन प्रागुक्तलुङ् मुखस्वरोपचारा इति परिगणनं लभ्यते ॥ न लोकाव्ययेत्यत्राव्ययप्रतिषेधे

प्र॰कौ॰ तोसुन्कसुनोरप्रतिषेध इति वक्ष्यमाणं च लभ्यत इति। चक्तनस्त्क मास्त्क चतुःसूत्री॥ अव्ययीभावश्चेति तु गणेपि मास्त्क उक्तरीत्यान्वर्थसंज्ञै
९९ थैव सिद्धेः तोसुन्कसुनोरप्रतिषेध इत्येव लाघवात् पठ्यतामिति युक्तः पंथाः॥ शि सर्वनामस्थानम्॥ शि इत्येतत् सर्वनामस्थानसंज्ञं स्यात्॥
वारीणि सर्वनामस्थाने चासंबुद्धाविति दीर्घः॥ यदि तु प्रदेशेष्वेव शौ चेत्यादि उच्येत तर्हि सुटि न स्यात्॥ अथ शिसुटोरित्युच्येत तर्हि नपुंसकसु
टोपि ग्रहणं स्यात्॥ शिग्रहणं तु शसर्थं स्यात्॥ तस्मात् संज्ञा तावत् प्रणेया महासंज्ञाकरणं तु पूर्वाचार्यानुरोधात्॥ सुडनपुंसकस्य॥ सुडिति
प्रत्याहारः॥ नपुंसकभिन्नस्य स्वादिपंचवचनानि उक्तसंज्ञानि स्युः॥ राजा॥ राजानौ॥ राजान इत्यादि। प्राग्वद्दीर्घः। अनपुंसकस्येति किम्॥ साम
नी॥ विभाषा ङिश्योरित्यल्लोपाभावे दीर्घो न भवति॥ अनपुंसकस्येति पर्युदासस्तेनास्य सूत्रस्य स्त्रीपुंसयोरेव प्रवृत्तिरिति नपुंसकेन विधिर्ना
पि प्रतिषेधः॥ ते च वचनानि संज्ञीत्यत्र पूर्वसूत्रेण प्राप्तासंज्ञा भवत्येव प्रसज्यप्रतिषेधे तु सापि निषिध्येत यद्यप्यनंतरस्य विधिर्भवति प्रतिषेधो
वेति समाधातुं शक्यते तथापि असमर्थसमासो वाक्यभेदश्चेति गौरवं स्यादेव॥ यद्वा सुट् स्त्रीपुंसयोरिति वक्तव्ये नपुंसकस्येति सूत्रे यतः
प्रसज्यप्रतिषेध एव संमतः॥ गौरवं च प्रामाणिकं॥ एतेन हि केचिन्नञ्समासा असामर्थ्येपि साधव इति ज्ञाप्यते॥ तेनाश्राद्धभोजी ब्राह्मण
इत्यादि सिद्धं भवति॥ नवेति विभाषा॥ इति शब्दः काकाक्षिन्यायेनोभाभ्यां संबध्यते॥ स च पदार्थविपर्यासकृत्॥ तेनार्थ एवेह संज्ञी संज्ञा च
॥ निषेधविकल्पयोर्विकल्पसंज्ञा स्यात्॥ न च तयोरपदार्थतया नान्वयप्रसंगः॥ एतत्सूत्रारंभसामर्थ्यादेव विधिवाक्येषु विकल्पस्य त्वि
पदस्य लाक्षणिकत्वात्॥ उभयत्र विभाषार्थं चेदं सूत्रं॥ प्राप्तविभाषायामप्राप्तविभाषायां च नास्योपयोगः॥ तथाहि॥ विभाषोपपदेन प्रतीय रा॰म॰
मानेइति प्राप्तविभाषा॥ तत्र स्वरितञित इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषाश्रुत्या पक्षे तन्निवृत्तिमात्रं क्रियते पक्षे भवतीति त्वनुवादः ९९

॥ तथाविभाषोर्णोरित्यप्राप्तविभाषा ॥ और्णुवीत्यत्रपरत्वात् सार्वधातुकमपिदितिनित्यङित्वाभ्युपगमात् ॥ तत्रऊर्णवितेत्यादावभावांशस्य
स्थितत्वाज्ज्ञावांशमात्रपरता ॥ विभाषाश्वेरित्युभयत्रविभाषायांतु यदि विधिमुखेनप्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात् ॥ कित्सु तु यज्ञादि
त्वान्नित्यमेव स्यात् ॥ अथप्रतिषेधमुखेनप्रवृत्तिस्तर्हि कित्स्वेवविकल्पः स्यान्नतुपित्सु ॥ नचपित्सु विधिमुखेन कित्सु निषेधमुखेनेत्युभय
थापि प्रवृत्तिरस्त्विति वाच्यम् ॥ वैरूप्यलक्षणवाक्यभेदापत्तेः संज्ञाकरणे तु सति श्रुतत्वक्रमानुरोधेन नेति निषेधः प्रथमं कित्सु प्रवर्त्तते ततः
कित्किद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे भवतीत्यैकरूप्येण विधिमुखेनैव विकल्पः प्रवर्तते ॥ आकृतौ पदार्थे समुदाये सकृल्ल
क्षणं प्रवर्त्तेन इति दर्शने इदं सूत्रमारभ्यते ॥ यदा तु प्रतिलक्ष्यं विभाषाश्वेरित्येतद्भिद्यते ॥ तदा क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्तेः
संभवान्नेदं सूत्रमारंभणीयम् ॥ तथाच वार्तिकं ॥ अशिष्योवा विदितत्वादिति ॥ वस्तुतस्त्वाकृतिपक्षेपि प्रदेशेष्वेव न वा श्वेरित्यादि घटितत्वेदं
सूत्रं मत्याख्यातुं शक्यं ॥ युक्तं चैतत् ॥ अन्यथान्यार्थमप्यारब्धा संज्ञा विभाषोर्णोरित्यत्र प्रवर्त्तेत ॥ प्रतिषेधाश्च बलीयांसो भवंतीति और्णुवी
त्यत्रापि सार्वधातुकमपिदित्यस्य निषेधस्ततो विकल्पश्च स्यात् ॥ नन्वारभ्यमाणे सूत्रे नवेत्य खंडतया तस्यार्थो निषेध एव संज्ञी किं न स्यादि
ति चेन्न ॥ तथा सति न बहुव्रीहावित्यनेनैव सिद्धौ विभाषा द्विक्समास इत्यस्य वैयर्थ्यापत्तेः ॥ इतीति किम् ॥ घुसंज्ञावत्स्वं रूपमिति वचना
च्छब्दस्य संज्ञा मा भूत् ॥ तथाहि सति विभाषाश्वेरित्यस्य न वा शब्दः श्वयतेरादेश इत्यर्थः स्यात् इतिशब्दे तु सत्यर्थः संज्ञीति लभ्यते ॥ त
थाहि ॥ लोकेत्यर्थप्रधानः शब्दः गौरित्ययमाहेत्यादौ तु शब्दस्वरूपपरः संपद्यते ॥ व्याकरणे तु स्वं रूपमिति परिभाषणात् स्वरूपपरत्वं औत्सु
र्गिकं इति शब्दसमभिव्याहारे त्वर्थपरतेति विशेषः ॥ अर्थस्यैव संज्ञात्वमपि न तु विभाषाशब्दस्येत्युक्तं ॥ तेन हृक्रोरन्यतरस्यामि साह्वयपि वै

श. कौ. रूप्योच्चारो बोध्यः ॥ एतत्प्रसंगेन त्रिविधा अपि विभाषाः प्रायेण भाष्ये विवेचिताः ॥ तत्राप्राप्तविभाषामध्ये ग्रो यङि अचि विभाषेति पठितं ॥
१०० ॥ अत्र वदंति ॥ अप्राप्तविभाषेयमिति सत्यं किंतु त्रिसंशयादित्युक्तम्यप्राप्तेः प्राप्ते उभयत्र वेत्येवंरूपकोटित्रयप्रकारकसंशयविषयी भू-
तानामेव व्युत्पाद्यमानत्वादत्रापि कोटित्रयस्योक्तिसंभवो वक्तव्यः ॥ स च दुर्वचः ॥ तथाहि ॥ निजेगिल्यत इत्यत्र ग्रो यङीति नित्यं लत्वं वि-
भाषापक्षस्तु तत्र प्राप्तिरेव नास्ति गिलतिगिरतीत्यादौ तु विभाषा ॥ ग्रो यङीत्यस्य तु प्राप्तिरेव नास्ति तत्कुतः प्राप्तविभाषापक्षः ॥ अथो-
च्येत ॥ अचि विभाषेत्यत्र यङीत्यनुवर्त्य यङ्निमित्तस्य रेफस्याचि अनंतरे वा लत्वमिति व्याख्यानादस्त्येवोक्तिसंभव इति तन्न ॥ निजेगि-
रय अच् इति स्थिते हि ग्रो यङीति प्राप्नोति ॥ न चास्यामवस्थायां विभाषायाः प्राप्तिः ॥ अच्परत्वाभावात् ॥ अथ ब्रूयाः विभाषारंभसामर्थ्या-
द्यङ्लुकः पूर्वं ग्रो यङीति न भवतीति एवमप्युभयत्रविभाषात्वं दुर्लभमेव । गिरति गिलतीत्यादौ विभाषायाश्चरितार्थत्वेन यङ्लुकः प्रा-
गेव ग्रो यङीत्यस्य प्रवृत्तेरुभयोरसमानकालत्वात् ॥ न च लत्वस्यासिद्धतया ततः प्रागेव लुगिति वाच्यं अंतर्भूतयङपेक्षत्वेनांतरंगं ल-
त्वं प्रति वहिर्भूतान्प्रत्ययापेक्षत्वेन बहिरंगस्य लुको सिद्धत्वात् पूर्वाभावेन पूर्वत्रासिद्धमित्यस्याप्रवृत्तेरिति ॥ अत्रोच्यते ॥ प्राप्तविभा-
षात्वे तावत्समनंतरोक्तरीत्यैवोक्तिसंभवः ॥ उभयत्रविभाषात्वे त्वित्थं ॥ अंतरंगानपीति न्यायेन लत्वात्पूर्वं लुक् ॥ न च लुङ्नि-
मित्तमजेव दुर्लभः ॥ तस्यार्थापेक्षत्वेन बहिरंगतयासिद्धत्वात् पूर्वाभावे पूर्वत्रासिद्धमित्यस्याप्रवृत्तेः ॥ तथा चाचः पूर्वमेव लत्वं स्यादि-
ति वाच्यम् ॥ कृति तुग्विधिग्रहणेन हि वहिरंगपरिभाषाया अनित्यत्वज्ञापनात् ॥ धर्मिग्राहकप्रमाणेन लुक इव तदुपजीव्यानां समा- राम.
सादीनामपि प्राबल्यसिद्धेश्च ॥ ननु कृते चितन्निमित्ते लुकि सति निजेगिर अच् इति स्थिते ग्रो यङीति न प्राप्नोति यङ्परत्वाभावात् प्रत्य- १००

यलक्षणं तु न लुमतेति निषिद्धं ॥ न च त्वं गस्येत्यनेनांगाधिकारे न निर्दिश्यत इति वक्ष्यते ॥ न च स्थानिवद्भावः ॥ लुका लुप्तं न स्थानिवदि-
ति निषेधात् ॥ अज्झलादेशत्वाच्च ॥ तथा च कथमुभयत्र विभाषेति चेन्न ॥ न धातुलोपसूत्रप्रत्याख्यानपक्षे पृथगलोपाश्रयणे न स्थानिव-
द्भावसंभवात् ॥ न च पूर्वत्रासिद्धे न स्थानिवदिति निषेधः ॥ तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति सापवादत्वात् ॥ यद्यप्यचि विभाषे-
त्यस्य पूर्वत्रासिद्धमिति ग्रो यङीति प्रत्यसिद्धत्वाद्धि प्रतिषेधासंभवः ॥ ततश्च सत्यामपि यङीत्यस्य निवृत्तावुभयत्र विभाषात्वं न संभवति
॥ तथाप्यधुनेति वल्लाघवार्थममुनेत्येव वक्तव्ये नमुन इत्युक्ते योगविभागार्थतया न योगे योगो सिद्धः किंतु प्रकरणे प्रकरणमिति चासि-
द्धत्वं न भविष्यतीत्याशयेनोभयत्र विभाषात्वे उक्ते संभवो बोद्धव्यः सिद्धांते तु विभाषाया असिद्धत्वादेव नित्यं लत्वं समुदायलोपपर्यादिनं
तु मते अजपेक्षपर्यातरंगत्वान्नित्यं लत्वमिति व्यवस्थितविभाषेति वा समर्थयितव्यं ॥ ॥ इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य
प्रथमे पादे षष्ठमान्हिकम् ॥ ॥ ॥ श्रीगणेशाय नमः ॥ इग्यणः संप्रसारणं ॥ यणः स्थाने इक् भवतीत्येवं रूपो वाक्यार्थः यण्-
स्थानिक इक् रूपो वर्णश्चेत्युभयमपि संप्रसारणसंज्ञं स्यात् ॥ तत्र ष्यङः संप्रसारणं इत्यादिषु विधिप्रदेशेषु वाक्यार्थस्य ग्रहणं संप्रसारणा-
च्चेत्यादावनुवादप्रदेशेषु वर्णस्येति विवेकः ॥ पूर्वसूत्रादितिशब्दानुवृत्तेर्वाक्यार्थस्य संज्ञित्वं इति लभ्यते ॥ तत्प्रत्याख्यानपक्षे तु वाक्यमे-
व संज्ञि ॥ न च एवं तदेव विधेयं स्यादिति वाच्यम् ॥ वाह ऊठ् संप्रसारणमिति सामानाधिकरण्यबलेन तदुपस्थापितार्थस्यैव विधेयत्वनिर्ण-
यात् ॥ न च एवमपि ष्यङः संप्रसारणमित्यादौ दोषतादवस्थ्यं ॥ सामान्यापेक्षज्ञापकाश्रयणात् ॥ ननु तथापि वाक्यतदर्थयोरन्यतरस्य सं-
ज्ञित्वं अस्तु वर्णस्य तु कथं इति चेत् ॥ तत्रावृत्त्येकशेषाणामन्यतमाश्रयणे नार्थद्वयाभ्युपगमादित्यवेहि। अत्र च विधेयानुवादसमर्पकवि-

भक्त्या सूत्रेनिर्देशएवलिंगं॥ आहुच॥ विभक्तिविशेषनिर्देशस्तुज्ञापक उभयसंज्ञात्वस्येति॥ उभयोः संज्ञेतिषष्ठीतत्पुरुषः॥ भर्तृहरिस्त्वाह॥
संप्रसारणसंज्ञायांलिंगाभ्यांवर्णवाक्ययोः॥ प्रविभागस्तथासूत्र एकस्मिन्नेवजायते॥ तथाद्विर्वचनेचीतितंत्रोपायादिलक्षणः॥ एकशेषेण
निर्देशोभाष्यएवसमर्थित इति। तंत्रंचशब्दतंत्रमर्थतंत्रंवेतिमतभेदेनव्यवस्थाबोद्धव्या॥ अर्थभेदाच्छब्दभेदेआद्यःपक्षः। शब्दैक्येद्विती
यः॥ आद्येपिव्यंजकध्वनिमात्रभेदेव्यंग्यैक्ये आवृत्तिरेवेत्यादिबोध्यं। एवंचतंत्रत्वमेकरूप्येण भवेत्तुल्योपकारतः। उपकारान्यथात्वेतुभवे
दावृत्तिलक्षणमिति मीमांसकमर्यादानुरोधोवैयाकरणैर्नकर्त्तव्यः। तस्याभाष्यादिसकलवैयाकरणग्रंथविरुद्धत्वात् मूलयुक्तिशून्यतया
दुरुपपादत्वाच्चेतिदिक्। स्वमतेतुवाक्यार्थएवसंज्ञी अनुवादेतुतन्निवृत्तोवर्णोलक्ष्यते। संप्रसारणाज्ञातः संप्रसारमिति। अथवावर्णएव
संज्ञी। विधिप्रदेशेषुतुसूत्रशाटकवज्ज्ञाविसंज्ञाश्रयणीयेति। सर्वेप्येतेपक्षाभाष्येस्थिताः॥ स्यादेतत्॥ अदुहितरामित्यत्रलकारस्ययणःस्था
नेउत्तमपुरुषैकवचनमिट्॥ तस्यचसंप्रसारणसंज्ञायांसत्यां हलइतिदीर्घःस्यात्॥ तरपंप्रतिलङःतस्यांगत्वादिति। अत्राहुः॥ संख्यातानुदे
शाद्यकारस्थानिकस्यैवइकारस्यसंज्ञा। नतुलकारस्थानिकस्येति। अत्रेदमवधेयं। वाक्यार्थःसंज्ञीतिपक्षेतस्योद्देश्यविधेयसंसर्गरूपत्वेनयाते
त्रयथासंख्यपरिभाषोपस्थितौयणःस्थानेइक्स्याद्यथासंख्यमित्यवांतरवाक्यार्थः सोयंसंप्रसारणसंज्ञःस्यादितिमहावाक्यार्थः। नचावां
तरवाक्यार्थंगृहीत्वायातिवातिद्रातीत्यादावतिप्रसंगः। तस्यसंज्ञासंबंधमात्रफलत्वात्। अन्यथाष्यङः संप्रसारणमित्यादेर्वैयर्थ्यापत्तेः
त्तेः अतोनोक्तदोषः। अदुहीत्यादेस्तज्जत्वाभावाच्च। उभयसंज्ञात्वपक्षेपि उपस्थितत्वाद्यथासंख्यप्रवृत्तएववर्णःसंज्ञीति॥ अतोअदुहि
तरामित्यत्रनातिप्रसंगः॥ इदंचकर्मकर्त्तरिरूपमितिहरदत्तः॥ उपलक्षणंचैतत्। केवलेकर्तर्यपिसंभवात्॥ वर्णएवसंज्ञीतिपक्षेयथासं

ख्यं दुर्लभं ॥ अनुवादे परिभाषाणामनुपस्थानस्योपपादितत्वात् ॥ न चैवं स्थानेयोगोप्यस्मिन्पक्षे न लभ्येतेति वाच्यम् । षष्ठीस्थानेयोगेत्यत्रानु
वर्त्यमेतत्सूत्रव्याख्येयत्वात् ॥ उक्तं हि इको गुणवृद्धीति सूत्रे ॥ सिद्धं तु षष्ठ्यधिकारे वचनात् इति ॥ इहैव वा सिंहावलोकनन्यायेन स्थाग्रह
णापकर्षोस्तु ॥ यथासंख्यं तु दुर्लभमित्युक्तं ॥ कथं तर्हि अदुहितरामित्यत्र नातिप्रसंग इति चेत् ॥ तन्त्रावृत्त्याद्याश्रयणेन संप्रसारणस्येत्यत्र त
ज्ञावितग्रहणात् ॥ यद्वा ॥ कार्यकालपक्षे यणः स्थाने संप्रसारणमिग्भवतीति वाक्यार्थादनुवादे तेव नास्ति तत्र परिभाषोपस्थितौ सत्यां य
थासंख्यप्रवृत्तएव संज्ञी ॥ स एव संप्र— सारणस्येत्यादौ उपतिष्ठते ॥ अथवा स्थानक्रमेण संबोधो लौकिकन्यायसिद्धत्वादनुवादेपि सुल
भः ॥ यथासंख्यसूत्रपरं न प्रवर्त्ततामिति दिक् ॥ द्युभ्यामित्यत्र हल इति दीर्घो न ॥ दिव उत् इति तपरकरणात् ॥ अत एव द्युलोक इत्यत्र संप्र
सारणस्येति दीर्घो न ॥ ननु एवं भाव्यमानोप्युकारादेशः सवर्णान्गृण्हातीत्यर्थे ज्ञापकतया कथं अस्योपन्यास इति चेत् न ॥ तस्य वाक्यार्थः
संज्ञीति पक्षेणोक्तत्वात् संप्रसारणस्येत्यत्र तज्ञावितग्रहणाद्वा ॥ पक्षांतरे तु ऋत उत् इति ज्ञापकं बोध्यं ॥ ननु एवं अक्षद्युवौ अक्षद्युवः
इत्यादौ ऊठः संप्रसारणसंज्ञायां संप्रसारणाच्चेति पूर्वरूपं स्यादिति चेन्न ॥ संप्रसारणपूर्वत्वे समानाङ्गग्रहणस्य वार्त्तिककृता कृतत्वात् ॥
तत्रत्याख्यानपक्षे तु वारणादांगं बलीय इत्युवङ् भविष्यति ॥ वाक्यार्थः संज्ञीत्यादिपक्षांतरे तु पूर्वरूपप्राप्तिरेव नास्ति ॥ हूतो जीन इत्यादौ
तु हल इति सूत्रसामर्थ्यात् संप्रसारणनिर्वृत्तस्यादेशेपि दीर्घप्रवृत्तिः ॥ वर्णसंज्ञापक्षेपि अल्विधौ स्थानिवद्भावासंभवेन हल इति सूत्रारंभसा
मर्थ्यात् संप्रसारणस्यादेशे कार्यप्रवृत्तेर्वाच्यत्वादिति दिक् ॥ आद्यंतौ टकितौ ॥ टित् कितौ यस्योक्तौ तस्य क्रमादाद्यंतावयवौ स्तः ॥ भविता ॥ या
पयति ॥ पुरस्तादपवादा इति न्यायेन स्थानेयोगत्वस्यायमपवादः ॥ प्रत्ययः परश्चेत्यनेन परत्वाद्बाध्यते ॥ तेन चरेष्टः गापोष्टक् व्रीहिशाल्योर्ढक्

भक्त्या सूत्रे निर्देश एव लिंगं॥ आहुश्च॥ विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्येति॥ उभयोः संज्ञेति षष्ठीतत्पुरुषः॥ भर्तृहरिश्चाह॥
संप्रसारणसंज्ञायां लिंगाभ्यां वर्णवाक्ययोः॥ प्रविभागस्तथा सूत्र एकस्मिन्नेव जायते॥ तथा हि द्विर्वचनेचीति तंत्रोपायादिलक्षणः॥ एकशेषेण
निर्देशो भाष्य एव समर्थित इति। तंत्रं च शब्दतंत्रमर्थतंत्रं वेति मतभेदेन व्यवस्था बोद्धव्या॥ अर्थभेदाच्छब्दभेदे आद्यः पक्षः। शब्दैक्ये द्विती
यः॥ आद्येपि व्यंजकदृतिमात्रभेदे व्यंग्यैक्ये आवृत्तिरेवेत्यादि बोध्यं। एवं च तंत्रत्वमेकरूप्येण भवेत्तुल्योपकारतः। उपकारान्यथात्वे तु भवे
दावृत्तिलक्षणमिति मीमांसकमर्यादानुरोधो वैयाकरणैर्न कर्तव्यः। तस्या भाष्यादिसकलवैयाकरणग्रंथविरुद्धत्वात्। मूलयुक्तिशून्यतया
दुरुपपादत्वाच्चेति दिक्॥ पक्षद्वा वाक्यार्थ एव संज्ञी अनुवादे तु तन्निवृत्तो वर्णो लक्ष्यते। संप्रसारणाज्ज्ञातः संप्रसारमिति। अथवा वर्ण एव
संज्ञी। विधिप्रदेशेषु तु सूत्रशाटकवद्भाविसंज्ञाश्रयणीयेति। सर्वेप्येते पक्षा भाष्ये स्थिताः॥ स्यादेतत्॥ अदुहितरामित्यत्र ऌकारस्य यणः स्था
ने उत्तमपुरुषैकवचनमिट्॥ तस्य च संप्रसारणसंज्ञायां सत्यां हल इति दीर्घः स्यात्॥ तरपं प्रति लङः तस्यांगत्वादिति। अत्राहुः॥ संख्याज्ञानुदे
शाद्यकारस्थानिकस्यैव इकारस्य संज्ञा। न तु लकारस्थानिकस्येति। अत्रेदमवधेयं। वाक्यार्थः संज्ञीति पक्षे तस्योद्देश्यविधेयसंसर्गरूपतया ते
त्र यथासंख्यपरिभाषोपस्थितौ यणः स्थाने इक्स्याद्यथासंख्यमित्यवांतरवाक्यार्थः सोयं संप्रसारणसंज्ञः स्यादिति महावाक्यार्थः। न चावां
तरवाक्यार्थं गृहीत्वा याति वाति द्राती त्यादावतिप्रसंगः। तस्य संज्ञासंबंधमात्रफलत्वात्। अन्यथा ष्यङः संप्रसारणमित्यादेर्वैयर्थ्यापा
त्तेः अतो नोक्तदोषः। अदुहीत्यादेस्तज्जत्वाभावाच्च। उभयसंज्ञात्वपक्षेपि उपस्थितत्वाद्यथासंख्यमत्र तत एव वर्णः संज्ञीति॥ अतो अदुहि
तरामित्यत्र नातिप्रसंगः॥ इदं च कर्मकर्त्तरि रूपमिति हरदत्तः॥ उपलक्षणं चैतत्। केवले कर्तर्यपि संभवात्॥ वर्ण एव संज्ञीति पक्षे यथासं

ख्यंदुर्लभं॥ अनुवादेपरिभाषाणामनुपस्थानस्योपपादितत्वात्॥ नचैवंस्थानेयोगोप्यस्मिन्पक्षेनलभ्येतेतिवाच्यम्॥ षष्ठीस्थानेयोगेत्यत्रानु
वर्त्यमेतत्सूत्रव्याख्येयत्वात्॥ उक्तंहिइकोगुणवृद्धीतिसूत्रे॥ सिद्धंतुषष्ठ्यधिकारेवचनात्इति॥ इहैववासिंहावलोकन्यायेनस्थाग्रह
णापकर्षोस्तु॥ यथासंख्यंतुदुर्लभमित्युक्तं॥ कथंतर्हि अदुहितरामित्यत्रनातिप्रसंगइतिचेत्॥ तत्रादित्याद्याश्रयणेनसंप्रसारणस्येत्यत्रत
ज्ञावितग्रहणात्॥ यद्वा॥ कार्यकालपक्षेयणःस्थानेसंप्रसारणमिग्भवतीतिवाक्यार्थादनुवादतैवनास्तितत्रपरिभाषोपस्थितौसत्यांय
थासंख्यप्रवृत्तएवसंज्ञी॥ सएवसंप्र‾सारणस्येत्यादौउपतिष्ठते॥ अथवास्थानक्रमेणसंबोधोलौकिकन्यायसिद्धत्वादनुवादेपिसुल
भः॥ यथासंख्यसूत्रपरंनप्रवर्त्ततामितिदिक्॥ द्युभ्यामित्यत्रहलइतिदीर्घेण॥ दिवउत्इतितपरकरणात्॥ अतएवद्युलोकइत्यत्रसंप्र
सारणस्येतिदीर्घेण॥ ननुएवंभाव्यमानोप्युकारादेशःसवर्णान्गृह्णातीत्यर्थेज्ञापकतयाकथंअस्योपन्यासइतिचेत्न॥ तस्यवाक्यार्थः
संज्ञीतिपक्षेणोक्तत्वात्॥ संप्रसारणस्येत्यत्रतज्ञावितग्रहणाद्वा॥ पक्षांतरेतुऋतउत्इतिज्ञापकंबोध्यं॥ ननुएवंअक्षद्युवौअक्षद्युवः
इत्यादौऊठःसंप्रसारणसंज्ञायांसंप्रसारणाच्चेतिपूर्वरूपंस्यादितिचेन्न॥ संप्रसारणपूर्वत्वेसमानांगग्रहणस्यवार्तिककृताकृतत्वात्॥
तत्प्रत्याख्यानपक्षेतुवारणादांगंबलीयइत्युवङ् भविष्यति॥ वाक्यार्थःसंज्ञीत्यादिपक्षांतरेतुपूर्वरूपप्राप्तिरेवनास्ति॥ हूतोजीनइत्यादौ
तुहलइतिसूत्रसामर्थ्यात्संप्रसारणनिर्वृत्तस्यादेशेपिदीर्घप्रवृत्तिः॥ वर्णसंज्ञापक्षेपिअल्विधौस्थानिवद्भावासंभवेनहलइतिसूत्रारंभसा
मर्थ्यात्संप्रसारणस्यादेशेकार्यप्रवृत्तेर्वाच्यत्वादितिदिक्॥ आद्यंतौटकितौ॥ टित्कितौयस्योक्तौतस्यक्रमादाद्यंतावयवौस्तः॥ भविता॥ या
पयति॥ पुरस्तादपवादाइतिन्यायेनस्थानेयोगत्वस्यायमपवादः॥ प्रत्ययःपरश्चेत्यनेनपरत्वाद्बाध्यते॥ तेनचरेष्टः गापोष्टक् ब्रीहिशाल्योर्ढक्

इत्यादयः परएवभवंति॥परेणपरिभाषाप्रकरणेनसाहचर्यात्परिभाषेयं॥भाष्येतुसंज्ञापक्षोपिस्थापितः॥तथाहि॥टकितावितिकर्मधा
रयः॥इत्संज्ञकौटकारककारौआद्यंतयोः संज्ञेस्तः॥तथाच॥इट्इतिबहुव्रीहिः॥इट्आदिर्यस्येतिविग्रहः॥तथाचस्थानेंतरतमपरिभा
षयातव्यस्यइतव्यादेशेसिद्धमिष्टं॥एवंपापयतीत्यत्रपातेर्णोपुप् आदेशःपुकृयस्येतिव्यानाद्यु॥नचैवमाद्यंतौटकौ इत्येवास्तुइतिवाच्यं
॥आलजाटचौ ठस्येकइत्यादावपिटकयोराद्यंतसंज्ञात्वप्रसंगात्॥इत्संज्ञकत्वेनतुदेशविशेषोलभ्यते॥तेनइत्संज्ञकस्ययोदेशःतत्रा
वस्थितौटकौसंज्ञे॥नचाटचष्टकारइकादेशस्यककारश्चनथेतिनोक्तदोषः॥नन्वस्मिन्पक्षेलुङ्·लङ्·लृङ्·स्तुइत्यादिना॥भूइत्यादेशःस्या
त्सचोदात्तःप्रसज्येत॥नैषदोषः॥अः इउदात्तश्चयस्येतित्रिपदबहुव्रीह्याश्रयणात्॥विशेषणस्यापिउदात्तस्यसौत्रःपरनिपातः तेनउदा
त्ताकारादिरादेशइतिसिद्धं नचैवमपि आङजादीनामित्यत्रदोषनादवस्थ्यं॥अनुवृत्तेनोदात्तशब्देनसहश्रूयमाणस्यबहुव्रीह्यसंभवात्
इतिवाच्यं॥आडजादीनामितिसूत्रस्यप्रत्याख्यास्यमानत्वात्॥वक्ष्यतिहि॥अजादीनामटासिद्धमित्यादि॥मिदचोंत्यात्परः॥सन्निविष्टं अंत्य
मध्ये अंत्योयोच्तस्मात्परोमित्स्यात्सचपूर्वान्तः॥स्थानेयोगस्यपरश्चेतिपरत्वस्यचापवादः॥वनानि॥यशांसि॥रुणद्धि॥ननुपूर्वयोगव
द्यमपिपुरस्तादपवादन्याये नस्थानेयोगमात्रस्यापवादोस्तु नतुप्रत्ययःपरश्चेत्यस्यापीतिचेत्॥बाध्यसामान्यचिंतामाश्रित्यस्वविषयेप्रा
प्तंसर्वंबाध्यतइतिइहाभ्युपगमात्॥ अन्यथाम्प्रमोमित्करणं अनर्थकंस्यात्॥नचश्रवणार्थएवअमोमकारइतिवाच्यं॥तृणहइतिनिर्देशात्
॥अचइतिजात्यभिप्रायेणैकवचनं॥निर्द्धारणेषष्ठी॥नचअंत्यादित्यनेनसामानाधिकरण्यादचइतिपंचम्येवास्तामितिवाच्यं॥शेमुचादीना 
मित्यादौअंत्यस्याचोऽसंभवेनैतत्परिभाषायाअप्रवृत्तौअलोंत्यपरिभाषाप्रसंगात्॥तथाचमित्करणवैयर्थ्यापत्तेः॥पूर्वसूत्रे आद्यंतावितिसमा 

सनिर्देशोपि इह अंतग्रहणमात्रं अनुवर्त्तते॥ एकदेश एव स्वरितत्वप्रतिज्ञानात्। तेनमित्पूर्वो तः॥ यदि तु अभक्तः स्यात्तदा नाताः पिंडा गमित्या
दौ शेश्छंदसि बहुलमिति शेर्लोपे कृते नलोपो न स्यात्॥ प्रातिपदिकांतत्वाभावात्॥ तथा वहं लिहइत्यत्र वहाभ्रे लिहइति खशि अरुर्द्विषद
जंतस्येति मुमि मोनुस्वारइत्यनुस्वारो न स्यात्॥ अपदांतत्वात्॥ यदि तु आदिग्रहणमनुवर्त्यपरादिः क्रियेत तदा वारिणेइत्यादौ घेर्ङितीति
गुणः स्यात्॥ वहंस्लिहइत्यनुस्वारो न स्यात्॥ अतिशयितः सखा येषां तान्यतिसखीनि ब्राह्मणकुलानीत्यत्र सख्युरसंबुद्धाविति णित्वप्रयु
क्ता वृद्धिः प्राप्नोति॥ सा हि गौणत्वेपीष्यते॥ अस्थ्याद्यनङ्वत्॥ एतच्च इह सूत्रे भाष्यकैयटयोः स्फुटं॥ तस्मात्पूर्वांतपक्ष एव स्थितः॥ अथ कृति
कं॥ अंत्यात्पूर्वो मस्जेरनुषंगसंयोगादिलोपार्थं॥ मग्नः मग्नवान्॥ ओदितश्चेति निष्ठानत्वं तस्यासिद्धत्वात्कुत्वं॥ मस्जिनशोर्झलीति नुमि
सच पदांतादचः परः स्यात्तदा अनिदितामित्यनुषंगलोपो न स्यात्॥ उपधाभूतस्य नकारस्यानुषंग इति प्राचां संज्ञा॥ अथ स्कोरितिसलोपे कृते
नकार उपधात्वाल्लुप्यतामिति चेत्न॥ नलोपं प्रति स्कोरितिलोपस्यासिद्धत्वात्॥ बहूनां समवाये समुदायस्यैव संयोगसंज्ञेति पक्षे सलोपस्या
प्राप्तेश्च॥ तथा च मङ्क्ता मङ्क्तव्यं इत्याद्यपि प्रयोजनं बोध्यम्॥ भर्जिमच्योश्च॥ अंत्यात्पूर्वो मित् इत्यनुवर्तते॥ भृजी भर्जने॥ अस्मादौणादि
के अविकृते ऊमागमः॥ भरूजा॥ मर्चशब्दार्थे चुरादिकः॥ अस्मादच इरित्यौणादिकः इप्रत्ययः ईमागमः॥ निपातनात्सिद्धं भरूजाश
ब्दो हि अंगुल्यादिषु पठ्यते मरीचिशब्दो बाह्वादिषु॥ उणादिषु तु मृकणिभ्यामीचिरिति ईचिप्रत्ययं कृत्वा मरीचिशब्दो व्युत्पादितः॥ ननु
पायांतरं बोध्यं॥ एच इग्घ्रस्वादेशे॥ आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात्॥ हे शब्दमतिक्रांतं कुलं अतिहि कुलं॥ चित्रगुः अतिरि
अतिनु। यद्यत्र वक्तव्यं न दे ओङ् सूत्रेण वोक्तं॥ षष्ठीस्थाने योगा॥ अनेकसंबंधपरतया संभाव्यमाना षष्ठी स्थानप्रयुक्तसंबंधपरेति बोध्यम्॥

अस्तेर्भूः॥अस्तेःसमीपोअनंतरोवेतिसंशयेनतत्स्थानेउच्चारणीयइत्यर्थः॥स्थानंप्रसंगःदर्भाणांस्थानेशरैःप्रस्तरितव्यमितिवत्॥ तथाचैगुरु
च्चारणेप्रसक्तेऽयणुच्चारणीयः॥ इत्याद्यर्थपर्य वसानेसामीप्यादयःसंबंधाअर्थाद्व्यावृत्ताः॥योगःसंबंधः॥सबहुविधोऽस्त्यस्या इतियोगा॥
अर्शआदित्वान्मत्वर्थीयोच्॥सचभूम्नि॥अन्यथाविशेषणवैयर्थ्यापत्तेः॥तेनानेकसंबंधपरतयासंभाव्यमानेत्यर्थोलभ्यते॥अयोगेति
वाच्छेदः॥अनिश्चितयोगविशेषइत्यर्थः॥योगेत्ययोगेतिवाकिं॥ऊदुपधायागोहः॥शासइदङ्हलोरित्यादौगोहःशासइत्यत्रमाभूत्॥स
तिहितत्रापिस्थानेयोगत्वे॥गोहिशासोःस्थानेधातुमात्रस्योपधायाश्चऊदितौस्यातामितिदिक्॥यद्वा॥स्थानेयोगेयस्याइतिबहुव्रीहिः
॥अतएवनिपा——तनात्सप्तम्याअलुक्॥यद्वा॥स्थानेनयोगोस्याइतिविग्रहः॥निपातनादेत्वं॥नचअनयोःपक्षयोर्गोहिःशासइत्या
दौअतिप्रसंगः॥परिभाषाणामनियमेनियंतुप्रवृत्तेः॥युक्तंचैतत्॥आकांक्षापूर्वकत्वात्संबंधस्येहचोपधासन्निधानेनावयवषष्ठीत्वनि
र्णीते आकांक्षाविच्छेदात्॥लोकेपिहिपंथानंपृच्छन्तंप्रति अमुष्मिन्नवकाशेदक्षिणोग्रहीतव्यः॥अमुष्मिन्नुनरइत्यादौउपदिष्टेस्मिन्नेव
मार्गद्वैधात्संशयःतत्रैवतदुपतिष्ठते॥नत्वसंदिग्धेतिर्यक्पथेपीतिदिक्॥भाष्यकारास्त्वाहुः॥अस्तेर्भूरित्यादौअनेकसंबंधप्रसंगेपिर्
स्यान्तरंगत्वात्स्थानिवदादेशइतिज्ञापकाच्चस्थानेयोगनैवव्याख्यास्यते॥तस्मान्नायमेतस्यसूत्रस्यसूत्रार्थः॥किंतुषष्ठ्यंतमु
च्चार्यमाणमेवस्थानेनयुज्यतेनतुप्रतीयमानंइतिसूत्रार्थः॥तदेतदुच्यतेनिर्दिश्यमानस्यादेशाभवंतीति॥तेनपादःपदित्यस्यायमर्थःपा
च्छब्दांतंयदंगंतदवयवस्यपाच्छब्दस्यसर्वस्यपदादेशइति॥अलोंत्यस्यादेःपरस्येतितुयोगौआरंभसामर्थ्याद्दस्यबाधकौ॥अनेकाल्
शित्सर्वस्येत्यनेनतुसहाविरोधादस्यसमुच्चयेनप्रवृत्तिरिति॥एवंस्थितेतंत्राद्याश्रयणेनप्रागुक्तोपिसूत्रार्थःसुवचः॥फलंतुस्फुटप्रति प

त्तिरितिदिक्॥स्थानेंतरतमः॥ प्राप्यमाणानांमध्येसदृशतमआदेशःस्यात्॥सादृश्यंचचतुर्धा॥स्थानतोर्थतोगुणतःप्रमाणतश्चेति॥
स्थानतोयथा॥सुद्ध्युपास्यः॥मध्वरिः॥धात्रंशः लाकृतिः॥ यत्तुयथासंख्यसूत्रेणैवेहान्यथासिद्धिरित्युक्तंभाष्यादौ॥तदभ्युच्चयमात्रं॥
अर्थतःसाम्यविवक्षायांयथासंख्यालाभात्॥इकोहिषट्षष्ठिःयणस्तुसप्तेतिवैषम्यात्॥अथैकशब्दाद्यणशब्दाच्चप्रथमंचतुर्णांचतुर्णांमुप
स्थितेरस्त्येवसाम्यमितिचेत्तर्हिसुध्युपास्येतिदीर्घस्यकथंयणादेशः॥ इकारेणग्रहणादितिचेत्तर्हि तृतीयेनऋकारेणचतुर्थेनलृकारेणपर
स्वरस्यग्रहणाल्लाकृतौरेफप्रसंगः॥धात्रंशेचलकारप्रसंगः॥यवौचसानुनासिकनिरनुनासिकौनव्यतिष्ठेयातामितिदिक्॥ दैत्यारिः श्रीश
इत्याद्यपीहोदाहरणं॥अर्थतोयथा॥वातंड्ययुवतिः॥वतंडशब्दाद्वतंडाच्चेत्यपत्येयञ्॥तस्यलुक्स्त्रियामितिलुक्॥शार्ङ्गरवादित्वान्ङी
न्॥वतंडीचासौयुवतिश्चेतिविग्रहेपोटायुवतीत्यादिनासमासः पुंवत्कर्मधारयेत्यतिदिश्यमानःपुंशब्दोवतंडापत्यवाचिनोवतंडीशब्द
स्यतद्रूपस्सवाचीवातंड्यशब्दोभवति॥गुणतोयथा॥पाकस्त्यागःचजोःकुघिण्यतोरितिचकारस्याल्पप्राणस्याघोषस्यतादृशएवककारः॥
जकारस्यतुघोषस्याल्पप्राणस्यनादवतःस्थानेतादृगेवगकारः॥प्रमाणतोयथा॥ अमुंअमूअमून्॥अदसोसेरित्यनेनह्रस्वस्यह्रस्वोदी
र्घस्यदीर्घउकारः॥ इहस्थानइत्यनुवर्तमानेपुनःस्थानेग्रहणादन्योपिवाक्यार्थःसंमतः॥ताल्वादिस्थानेषुस्थानेयोंतरतमस्तत्प्रयुक्तान्तर्यवा
नितियावत्॥सप्राप्यमाणानांमध्येस्यादिति॥तदुक्तं॥यत्रानेकविधमान्तर्यंतत्रस्थानतआंतर्यंबलीयइति॥तेनचेतास्तोतावित्यादौ
प्रमाणतआंतर्यवानपिअकारोनभवति॥वाक्यभेदेतमप्ग्रहणमेवलिंगं॥एकस्मिन्नेववाक्यार्थेसंमतेहिस्थानेंतरइत्येवब्रूयात्॥
सिद्धांतेतुवाग्घरिः इत्यादौसोष्मणःसोष्माणइतिद्वितीयाःप्रसक्ताः॥नादवतोनादवंतइतितृतीयाःप्रसक्ताःतमप्ग्रहणात्तुचतुर्थोभवति

श॰कौ॰ ॥ तेहिसोष्माणोनादवंतश्च॥ऊष्माऊष्मत्वं वर्णधर्मतत्सहिताः सोष्माणः॥ तथाचबव्हृचानांप्रातिशाख्यं॥ वर्गेवर्गेचप्रथमावघोषौयुग्मौ
१०४ सोष्माणावनुनासिकोंत्यः इति॥शादयऊष्माणःसस्थानेनद्वितीयाहकारेणचतुर्थाइतिशिक्षा॥ इहत्रीणिवाक्यानिऊष्मशब्दश्चधर्मिवचन-
॥ शषसहाऊष्माणइतिप्रथमवाक्यार्थः॥सस्थानेनेति॥ इत्थंभूतलक्षणेतृतीयाहशषसाः॥ क्रमेणखछठथानांद्वितीयानांसस्थानाः॥
यथाहादयउष्माणस्तथैवखादयोपीत्यर्थः॥ फकारस्यतुयद्यपिसस्थानऊष्मानास्तितथापितस्यविशिष्येवऊष्मत्वंबोध्यम्॥ हकारे
णचतुर्थाइति॥ यथांहकारऊष्माएवंतेपीत्यर्थः॥ नन्वेवमिष्टउप्तइत्यादौ आंतर्याद्धमात्रस्ययणःस्थानेअर्द्धमात्रःइक्स्यात्॥ द-
ध्यत्र॥सुध्युपास्यइत्यादौतुमात्रिकद्विमात्रिकयोरिकोस्तथाविधएवयण्स्यादितिचेन्न।अर्द्धमात्रस्येकोमात्रिकद्विमात्रिकव्यंजनस्य
चलोकवेदयोरप्रसिद्धत्वात्॥ योस्तिसएवभविष्यति॥ इहभाष्येअंतरतमइतिसप्तम्यंतपाठोप्युपन्यस्यदूषितः॥तथाहि॥ अंतरतमउ
रण्परइतिसंहितपातावत्सूत्रकृदपाठीत्॥यदकारास्तकव्याख्यातारः॥तत्रसप्तम्यंतमपिशक्यंछेत्तुं॥ षष्ठीतिचानुवर्त्तते॥ अंतरतमेस्था
निनिषष्ठीउपसंहर्त्तव्येतिसूत्रार्थः॥एवंचाकःसवर्णेदीर्घइति अत्रविधेयस्यदीर्घस्यांतरतमेस्थानिनि अकइतिषष्ठ्याउपसंहारात्सिद्धमि
ष्टम्॥तथावांतोयिप्रत्ययइत्यत्रएचइत्यनुवृत्तायाःषष्ठ्यावांतादेशस्यांतरतमयोरेदैतोरुपसंहारात्सिद्धम्॥ अन्यथाएजमात्रस्यवांता
देशः॥अत्रेदंदूषणं॥इकोयणचीतियण्ह्रस्वानामेवस्यान्नतुदीर्घाणां॥अर्द्धमात्रस्यहिमात्रिकःसन्निकृष्टइतिषष्ठ्याउपसंहारात्॥ त
थाइकोगुणवृद्धीअचोञ्णितिइतिषष्ठ्योर्गुणवृद्ध्योः अंतरतमेष्वेवइस्वसुचोपसंहारात्॥ नेतालविताप्रायकोलावकइत्यादावेवस्या रा॰म
त्॥ चेतास्तोताचायकःस्तावकइत्यादौतुनस्यादितिदिक्॥तदेवंसप्तम्यंतपक्षस्यदुष्टत्वात्प्रथमांतपक्षएवयुक्तइतिस्थितं॥स्यादेतत्॥ १०४

एवं सति एच्मात्रस्य वांतादेशः स्यादिति चेत्॥ अत्राहुः। पूर्वसूत्रे तावद्यथासंख्यं प्रवृत्तं॥ अंतरतमपरिभाषा वा॥ अर्थोधिकारश्चेहाश्रीयते॥ यादृशो वांतादेशः पूर्वं दृष्टः ओकारस्थानिकोऽव् औकारस्थानिकश्चाव् तादृशोपि प्रत्यये भवतीति सूत्रार्थः॥ यद्वा॥ वांत इति न करिष्यते॥ न चैवं चेयं नेयं इत्यादावतिप्रसंगः॥ क्षय्यजय्याविति योगो विभज्यते कंठतालव्यस्य चेद्भवति क्षिज्योरेवेति नियमपरतया व्याख्यानात्। क्षिज्योः शक्यार्थ एवेति द्वितीयसूत्रार्थः॥ तेनार्हाद्यर्थे तयोरपि नेति बोध्यम्॥ नन्वेवमपि शार्ङ्गरवादिगणपठितेन नृरयो वृद्धिश्चेति सूत्रेण नरशब्दस्य नारीति रूपं न सिध्येत्॥ तथाहि॥ नरशब्दस्य ङीन्संनियोगेन विधीयमाना वृद्धिरलोंत्यस्येत्यंत्यस्य स्यात्॥ तथा च यस्येति चेति लोपेन तत्स्यानिवृत्तौ वृद्धिवचनं व्यर्थं स्यात्॥ न च नृशब्दार्थं तत् इति वाच्यम्॥ एवं हि सति नुर्वृद्धिश्चेत्येवं ब्रूयात्॥ न च नरशब्देपि परत्वाद्यस्येति लोपे कृते वृद्धिर्भवंती नानर्थिकेति वाच्यं॥ प्रत्ययसन्नियोगशिष्टत्वेन वृद्धेरंतरंगत्वात्॥ ननु वचनसामर्थ्याद्वृद्ध्या लोपो बाध्यतां आहोस्वित् अंतरंगपरिभाषां बाधित्वा परत्वाद्यस्येति लोपे कृते वृद्धिर्भवतु॥ इति संशये परिभाषाबाध एव न्यायः तदुक्तम्॥ अंगगुणविरोधे च तादर्थ्यादिति॥ किंच॥ वाहऊठित्यत्रेवापि तत्त्वेन अनुमेयायाः परिभाषाया बाधे नोपपत्तौ सा सा लुप्तस्य यस्येति लोपस्य बाधोनुचितः। तथा च लोपे कृते वृद्धिरिति सिद्धं नारीति रूपं इति चेत्॥ सत्यं सिद्धं किंतु सप्तम्यंतच्छेदपक्ष एव॥ तत्र हि प्रकृतितोंतरतमनिवृत्तिरिति वृद्ध्यांतरतमेस्थानिनिर्दिष्ट्वा उपसंहारात्॥ अकारस्य वृद्धिर्भवति॥ प्रथमांतच्छेदपक्षे तु आदेशतोंतरतमनिवृत्तिरिति अलोंत्यस्येति वचनाद्रेफस्य स्यात्॥ तस्मात्सिद्धं तेन नारीति रूपं नरशब्दस्य दुःसाध्यं इति पूर्वः पक्षः॥ अत्राहुः॥ नरशब्दपाठस्य प्रत्याख्यानमेव भाष्यकृतोऽभिप्रेतं सप्तम्यंतपक्षनिराकरणभाष्येण तथैव अनुमानात्॥ नैवं नरशब्दाज्जातिलक्षणे ङीपि सति नरीति रूपं स्यादिति वाच्यम्॥ इष्टापत्तेः॥ तथा च प्रयुज्यते किंनरीणां नगरीणामिति॥ यद्वा॥ नरशब्दस्य नियत

श॰ कौ॰ पुंल्लिंगत्वमेवास्तु॥ तथा च क्वाचित्प्रसंगः॥ उक्तप्रयोगस्तु पुंयोगलक्षणे ङीषि भविष्यति॥ यथान्यासेपि तस्य दुर्वारत्वात्॥ अथवा नृनरयोरि
१०५ त्यत्रातइतिवर्त्तते॥ अजाद्यतष्टाबितिसूत्रात्॥ तच्चानुवृत्तिसामर्थ्यात्षष्ठ्या विपरिणतं नरशब्देन सह वैयधिकरण्येन संबध्यते॥ ननु नृशब्दे
न॥ असंभवात्॥ तस्मात्सिद्धं नारीति॥ अत्रेदं वक्तव्यं॥ प्रत्याख्यापतां नाम नरशब्दः॥ नृनरयोरिति पठतः सूत्रकृतो मते तु कथं उक्तिसंभवः॥ न च
नरीत्येवेष्टमिति वाच्यं॥ वृद्धिविधायकसूत्रमध्ये नरशब्दपाठस्य वैफल्यापत्तेः॥ अत इत्यनुवृत्त्या समर्थनमपि क्लिष्टं॥ एकदेशानुवृत्तिर्विभक्तिवि
परिणामाद्याश्रयणात्॥ किंच नृनरयोरिति गणपाठे पठ्यते न त्वष्टाध्याय्यां॥ गणे च अत इति न प्रकृतं॥ तथा शार्ङ्गरवाद्यञ इत्यादिशब्देन सू
णसूत्रमपि हृदयमागमय्य तत्र अत इत्यस्यान्वयो वाच्यः स च क्लिष्टतर इति स्पष्टमेव॥ तस्मादित्थं समाधेयं॥ नर इति रांतं लुप्ताकारानुकरणं त
स्य अः नरः॥ नुश्च नरश्चेति द्वंद्वः॥ चाद्गणे पाठाच्च ङीन्॥ यद्वा स्थानेन्तरतम इत्यत्र तंत्रेण द्वेधा छेदः सूत्रकृतः संमतः भाष्योक्तरीत्या लौकिकन्या
याश्रयणे न सूत्रप्रत्याख्यानपक्षेपि हि प्रकृतितः आदेशतश्चेत्युभयथाप्यंतरतमनिवृत्तिरस्त्येव॥ सूत्रकृतो मते वा चिकित्सा॥ भाष्यकृत त
स्तु न्यायसिद्धेत्यन्यदेतत्॥ तथा च॥ वांतो यि॥ नृनरयोरित्यादि सर्वं सुस्थमेव॥ अत एव चतुर्थे स्थानितः अंतरतमनिवृत्तिमाश्रित्य नारीतिरू
पं साधयन् हरदत्तोपि न विरुध्येत॥ इको यणचीत्यादावतिप्रसंगः॥ परमवशिष्यते॥ स च ल्वादिभ्यः प्वादीनां ह्रस्व इत्यादिज्ञापकेन वा वचनिक्या
न्यायमूलिकया वा स्थानितोंतरतमनिवृत्तिरनित्यतामाश्रित्य परिहर्त्तव्य इति दिक्॥ सूत्रप्रत्याख्यानप्रकारस्तूच्यते॥ सभायामास्यतामित्यु
क्ते हि पंडिताः पंडितैः सह समासते शूराः शूरैः॥ कवयः कविभिः न तु संकरेण॥ किं बहुना गवां संघं प्रति गौ धावति॥ अश्वोश्वानामित्यादिव्यवस्थाति राम
र्यक्ष्वपि दृश्यते॥ तस्मात्प्रथमवाक्यार्थस्य लोकत एव लाभात् तदर्थं सूत्रमारंभणीयम्॥ एवं स्थानतः आंतर्यं बलीय इत्यपि लोकत एव सि १०५

ढं॥ तथाहि॥ भूयः सहचरितयोरश्वयोर्गवोर्वासजातीयानरसंबलनेसत्यपिकृशत्वपांडुत्वादिगुणसदृशानपिहित्वास्थानसाम्यपुरस्कारेणै
वपरस्परापेक्षादृश्यते॥ तदेवंलोकतः सिद्धेकिंवचनेनेति॥ उरण्रपरः। ऋवर्णस्यस्थानेयोऽण्सप्रसंगावस्थायामेवरपरत्याहारपरस्स्यात्॥ ऋका
रेणसावर्ण्यात्त्रिंशतउपस्थानेसतिस्थानेंतरतमपरिभाषयारश्रुतिमतःस्थानेरपरोलश्रुतेस्तुलपरइतिविवेक्तव्यं॥ कृष्णर्द्धिः तवल्कारः ऋ
ऌस्थानेयोऽण् इतिग्रंथस्तुयथासंख्यभ्रमापादकः असंगतश्च॥ शब्दतः साम्येनाभिमतानिर्वाहात्॥ नहिसूत्रेशब्दद्वयमस्ति॥ अर्थतस्तुन
तरांसाम्यं॥ अथात्रनयथासंख्यमभिमतंतर्हिकिंवृत्तिमध्येद्वयोरेवविशिष्योल्लेखनेन॥ आचआचरलौऋऌोःस्थानमितिविग्रहेउश्चउऌश्चऋ
ऌोरितिविग्रहेवाद्वंद्वस्यदुर्लभत्वाच्च॥ सहिविरूपाणामपिसमानार्थानामितिएकशेषेणबाध्यते॥ चित्रगुशब्दस्यचित्रगवीपरतायामिवसाधु
त्वनिर्वाहार्थंलक्षणामाश्रित्यलक्षितलक्षणयाशक्यार्थेपर्यवसानमितिकथंचिन्निर्वाहस्तुग्रंथेश्रद्धालुभिरास्थेयइतिदिक्॥ अत्रपक्षचतुष्ट
यंसंभाव्यते॥ उःस्थानेरपरोऽण्स्यादितिरपरत्वविशिष्टोऽण्विधीयतइतिप्रथमःपक्षः॥ उःस्थानेअणामनणांचप्रसंगेअणेवेतिनियमः॥ से
चंरपरइतिवाक्यभेदेनरपरत्वंविधीयतइतिद्वितीयःपक्षः॥ उःस्थानेयोण्इत्यनूद्यतस्यरपरत्वंविधीयतइतितृतीयः॥ प्रसंगावस्थायामेवर
परत्वंविधीयतेइतिचतुर्थः॥ तत्राद्येपक्षेनाप्राप्तेषुउदात्तादिषुविधीयमानोण्तेषांबाधकःस्यात्॥ तैरनेवकृद्ध्स्यविषयस्याऽ लाभात्॥ एवंत
द्वावचनव्यक्तिः॥ षष्ठीनिर्दिष्टमात्रस्यभवन्नादेशोंतरतमःस्यात्॥ ऋवर्णस्यतुअण्रपरइति॥ ततश्चउदात्तानुदात्तस्वरितानुनासिकेषुदोषः
॥ तथाहि॥ कृतिरित्यत्रञ्नित्यादिर्नित्यमितिप्राप्तंऋकारंबाधित्वाऽण्रपरःस्यात्॥ तथाप्रकृतंप्रहृतंइत्यत्रगतिरनंतरइतिपूर्वपदप्रकृतिस्वरे
कृतेशेषनिघातंउदात्तादनुदात्तस्येतिस्वरितंचबाधेत॥ तथानृःपाहिइत्यत्रनॄनपेइतिज्ञापकात्पूर्वसवर्णदीर्घसंभवेपिअनुनासिकंबाधित्वाऽ

शा·कौ· णपरः स्यात्॥ किंच॥ कर्त्ताकारक इत्यत्र गुणवृद्धी बाधित्वा णभवन्नकार एवेति नियमाभावात् कदाचिदिकार उकारश्च स्यात्॥ अपि च॥ त्यें मीमति
१०६ पदोक्ता इत्वोत्वार पक्षः तद्वद्धातो रुदोष्ठ्य पूर्वस्येति तेषु रपरत्वं न स्यात्॥ द्वितीये तु गुणवृद्ध्योर्न दोषः॥ अणनणोः प्रसक्तावणेवेति नियमेन कर्त्ता कार
क इत्यादि सिद्धेः॥ ननु ह्रस्वे स्थानिनि सवर्णा वृद्धिरनंतरतमा॥ तारक इत्यादौ दीर्घे तु सवर्णापि प्रमाणतोंतरतमेति अविशेषादुभयत्रापि सकल वृद्धि
प्रसंगे नियमोस्तु गुणस्तु कर्त्ता इत्यादौ मात्रिक एव प्राप्तः॥ तरितेत्यादौ द्विमात्रस्य तु द्विमात्र एङेव प्राप्तः॥ तथा च अणनणोः प्रसंगाभावेन नियमाप्र
वृत्तौ दीर्घेष्वेङेव स्यात्॥ ह्रस्वेषु अकारो भवन्नपि रपरो न स्यात्॥ योहि प्रथमवाक्येनाणेवेति नियम्यते॥ तस्यैव द्वितीयेन रपरत्वं विधीयते॥ तथा
च गुणदोषोस्त्येवेति चेत्॥ चजोः कु घिण्यतोरित्यादौ सावकाशा याः स्थानेंतरपरिभाषायाः वृद्धिविधौ चरितार्थया उरण् रपर इत्यनया गुणप्रसं
गे परत्वेन बाध्यत्वात्॥ तस्माद्द्वितीयपक्षे गुणवृद्ध्योर्न कश्चिद्दोष इति स्थितम्॥ उदात्तादिषु दोषस्तु स्यादेव॥ तथा प्रतिपदोक्तेषु इत्वादिषु अपि
॥ तृतीये तु उदात्तादिषु न दोषः॥ तत्र हि विधिभिरंतरतमपरिभाषासंस्कृतैः स्वर्णस्यैव विधानात्॥ किरतीत्यादौ अपि न दोषः॥ गुणवृद्ध्योस्तु दोषए
व॥ तथाहि॥ आंतर्यतो मात्रिकस्य मात्रिके गुणे रपरत्वे च कर्त्तेत्याद्यपि सिद्ध्यति॥ तथापि तरितेत्यादौ एङेव स्यान्न था अविशेषाद्वृद्धित्रयेपि प्रवृ
त्ते आकारस्याणत्वाद्रपरत्वे कृते कारकस्तारक इत्यादि यद्यपि सिद्ध्यति तथापि कायकस्तावक इत्याद्यनिष्टमप्यापद्यते॥ यत्तु पूर्वसूत्रे भाष्यका
रैरिमं पक्षमाश्रित्य समाहितं अनांतर्यमेवैतयोरांतर्यमिति॥ यच्च तत्रैव वार्त्तिककारैरुक्तं संप्रयोगो वा नष्टाश्वदग्धरथवत् इति॥ तदुभयमपि पा
क्षिकं बोध्यम्॥ तथाहि॥ पदार्थत्वजात्यवच्छिन्नस्य कोंतरतम इति परीक्ष्यते॥ अत्व जात्यवच्छिन्नस्यकस्येति तदा अनुरूपमति बधिरादिस्येनैव राम·
धर्मेणैतयोरांतर्यं॥ नहि आंतर्यं चतुर्द्धेति मुनित्रयोक्तिरस्ति प्रस्तुतसोष्मणः सोष्माण इति भाष्यात् वृत्ते श्च अनियम एव लभ्यते॥ एवं नष्टाश्वदग्ध १०६

र्थन्यायेऽपि जात्यवच्छेदेन परीक्षायामेव॥ व्यक्तिपुरस्कारेण परीक्षायां तूक्तरीत्या दुष्टोऽयं पक्षः॥ तथा चात्र सूत्रे वार्त्तिकं। यउः स्थानेऽण् सप्रय-
इति चेद्गुणवृद्ध्योरवर्णाप्रतिपत्तिरिति॥ किंचास्मिन्पक्षे ककारेफपरत्वं क्वाल्लकारपरत्वं इति व्यवस्थापि दुरुपपादा स्यात्॥ स्वतंत्रः कर्त्तेति निर्दे-
शान्न विनिमयो योगोपङ्गचिविभाषा इत्यारंभाच्च न विकल्प इति समर्थनेऽपि प्रतिपत्तिगौरवं स्यादेव॥ रेफस्य पूर्वांतत्वं साधयितुमाद्यं तावत्विसि-
न्नात्समासैकदेशभूतमंतग्रहणमनुवर्त्य तस्य रपर इति अन्यपदार्थविशेषणीभूतेन रेफान्वयश्च वाच्य इति महान्क्लेशः॥ चतुर्थपक्षे तु नैतदुपयु-
ज्यत इति वक्ष्यामः॥ तस्मान्निर्दोषत्वाच्चतुर्थपक्ष एव आश्रितः॥ स चेत्थमुपपादनीयः॥ स्थाने शब्दद्वयमिहानुवर्त्तते तत्रैकमुः स्थाने योऽण् इत्यनु-
वादेऽपि स्थानसंबंधलाभाय॥ द्वितीयं तु प्रसंगावस्थायामेव रपरो भवतीति कालविधानार्थं॥ स्थानेंतरतमसूत्रे स्थानशब्दस्य ताल्वादिपरत्वेऽपि
शब्दाधिकाराश्रयणात् इह प्रसंगपरत्वं बोध्यम्॥ एवं च गुणवृद्ध्योः प्रसंगावस्थायामेवाणो रपराः संपन्ना इति प्रमाणतोंऽतरतमावेङैचो बाधित्वा
स्थानेंऽतरतमोऽणेव भवतीति न कश्चिद्दोषः॥ एवमुदात्तादिविधिष्वपि अंतरतमत्वादृकारो न तु अर् इर् उर् इत्यवधेयं। न चैवं कर्त्तेत्यादावनेका-
ल्त्वात्सर्वादेशप्रसंगः॥ आनुपूर्व्येण सिद्धत्वात्॥ तथा हि॥ ऋस्थानित्वमुपजीव्य प्रवृत्तं रपरत्वं सर्वादेशतां नापादयति॥ उपजीव्यविरोधात्।
तथा च पूर्वसूत्रे वार्त्तिकं॥ सर्वादेशप्रसंगस्त्वनेकाल्त्वात्॥ न वानेकाल्त्वस्य तदाश्रयत्वाद्वर्णादेशस्याविघात इति॥ अण्ग्रहणं किं॥ रीङ्-
रिङादीनां रपरत्वं माभूत्॥ मात्रीपतिक्रियते॥ तथाहि किलोपोऽपि रपरः स्यात् एवं च सूत्रवैयर्थ्यात्तौ सामर्थ्यात् अलोंत्यविधिं बाधित्वा सर्वा-
देशः स्यात्॥ तथा होतापोतारौ इत्यत्रानङोऽपि रपरत्वे संयोगांतलोपे च कृते तस्यासिद्धत्वान्नलोपो न स्यादिति दिक्॥ अथ यो रिङादिष्वण् स
रपरः कुतो नेति चेत्॥ अनादेशत्वात्॥ आदेशत्वं हि समुदाये विश्रांतं॥ न चैवं कृष्णर्द्धिरित्यादौ रपरत्वं न स्यात्पूर्वपरसमुदायस्य स्थानित्वा-

श.कौ. दिति वाच्यम्॥ पूर्वपरयोरिति द्विवचननिर्देशेन सहितयोरव पदयोरेव स्थानित्वावगमात्॥ अतएव द्व्योः स्थानिनो र्भिन्ना दिषु न त्वं द्वाव दे
१०७ शौमाभूतामिति तत्र एकग्रहणं कृतं॥ तस्मादकारस्यापि स्थानित्वं अस्त्येव॥ तदुक्तं॥ योह्यु भयोः स्थाने भवति लभते सौ अन्यतरतोव्यपदेश
मिति॥ तस्मादेकादेशोपि परत्वं भवतीति स्थितम्॥ स्यादेतत्॥ उक्तरीत्या ऋत उदित्युकारादेशस्यापि परत्वं स्यात्॥ तथा च विभक्तिसकार
स्य रुत्वे कृते पूर्वस्य रो रीति लोपे ढ्लोप इति दीर्घेण मातूः पितूरिति प्राप्नोतीति चेत्॥ मैवं॥ रुत्वस्यासिद्धत्वेन रात्सस्येति सकारलोपे रेफ
स्य विसर्गेण रूपसिद्धेः॥ नन्वेवं मातुःकार्यमित्यत्र षत्वं स्यात्॥ इदुदुपधस्य चाप्रत्ययस्येति सूत्रात्॥ न चायं प्रत्ययविसर्जनीय एवेति वाच्यं॥
अकारस्य प्रत्ययावयवत्वेप्यप्रत्ययपतयात तदादेशस्य सकारान्तरामतया त्वात्॥ इति चेत्॥ उच्यते॥ ऋत उदित्येकादेशस्य परादिग्रहणेन ग्र
हणादस्तिनावत्सान्तस्य प्रत्ययसंज्ञा सकारे लुप्ते त्वबशिष्टस्यैव प्रत्ययसंज्ञा॥ एकदेशविकृतस्योपसंख्यानात्॥ स्थानिवदादेश इत्यकारादे
शाग्रहणाद्वा॥ अतएव यङो यकारे लुप्ते अकारस्य प्रत्ययसंज्ञेत्युक्तं॥ तथा चाप्रत्ययस्येति षत्वनिषेधः सिद्धः॥ न चैवं प्रत्ययावयवस्थानि
कत्वेपि प्रत्ययस्थानिकत्वाभावात् षत्वं स्यादेवेति वाच्यं॥ अप्रत्ययस्येत्यनुवादे परिभाषानुपस्थानेन स्थाने योगस्य दुर्लभत्वात्॥ अवय
वावयविभावस्य षष्ठ्यर्थत्वस्य संभवात्॥ नन्वप्रत्ययस्येति पर्युदासः तथा च पूर्वोक्तत्वेनैकादेशग्रहणात्षत्वं स्यादेव॥ किंच॥ प्रसज्यप्रतिषे
धपक्षेपि संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् अप्रत्ययोपि यो विसर्गस्तस्य षत्वं स्यादिति वाक्यार्थः॥ तथा चाग्निः करोती
इत्यादौ स्थानिवद्भावेन विसर्गस्य प्रत्ययत्वान्मा भूत्षत्वं॥ मातुःकार्यं इत्यादौ तु स्यादेवेति चेत्॥ इष्टमेवैतत्॥ कस्कादिषु भ्रातुष्पुत्रशब्द राम
स्य पाठो ज्ञापकः॥ एकादेशशास्त्रेण निर्वृत्तात्सकारस्य षत्वं न स्यादिति॥ यद्वा प्रसज्यप्रषेधे वैयधिकरण्यान्वयावेवज्ञाप्येते॥ यत्तु भाष्ये लुप्य १०७

तंप्रत्ययोरात्सस्येति॥ पच्चकैयटकृतंव्याख्यानं॥ उत्वेकृते अवशिष्टः सकार एव प्रत्ययसंज्ञः॥ सचलुप्त इति तदुभयमपि चिंत्यम्॥ इह
सिद्धंतुप्रसंगेरपरत्वादिति पक्षे पद्यप्यराराादिरूपेणविधानादभक्तत्वादिशंकैव नास्तितथापि संप्रयोगो वेति पूर्वसूत्रोक्तरीत्यान्तृतीयप्र
क्षमाश्रित्य भाष्येपक्षत्रयंचिंतितं॥ तत्राभक्तत्वपक्षे परादित्वपक्षे च वव्रेइत्यादौ उरदत्वेरपरत्वे च कृते हलादिशेषेण रेफो ननिवर्त्तेत॥ अव
सावयवस्यानादेर्हल एव तेन निवर्त्तनात्॥ तस्मादंत्यग्रहणमनुवर्त्य पूर्वोक्तपक्षएव स्थापित इति संक्षेपः॥ अलोंत्यस्य॥ स्थानषष्ठीनिर्दिष्टस्य
पदुच्यते तत्तदंत्यस्याल: स्थाने बोध्यम्॥ त्यदादीनामः॥ सः॥ पः॥ स्थानषष्ठी ति किं॥ आर्द्धधातुकस्येट्॥ तच्वृकारात्पूर्वो माभूत्॥ इदंच
षष्ठीस्थानेयोगेति सूत्रस्यानुवृत्तेर्लभ्यते॥ अलइति किं पदस्येत्यधिकृत्य विधीयमानं वसुस्रंस्विति दत्वं परम्। आनडुह्यामित्यादावंत्यस्य प
दस्य माभूत्॥ एतेन अलइतिजसंतमाश्रित्यालात्मका आदेशा अंत्यस्य स्युरिति व्याचक्षाणाः परास्ताः॥ अंत्यस्य पदस्यापि प्रसंगात्॥ किंचै
वंलाघवार्थमलंत्यस्येत्येवसूत्रयेत॥ अपिच॥ अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपः पारशतस्य संख्यादेरिंति लोपो ढकि लोपश्च सर्वादेशः
स्याम्॥ ततश्च विरजीकरोति इत्यादि न सिध्येत्॥ यत्तु अलइतिजसंतमितिपक्षे अनेकाल्शित्सर्वस्येति सूत्रे अनेकाल्ग्रहणं न कर्त्तव्यमिति
लाघवोपवर्णनं तदपि न॥ षष्ठीतिपक्षेपि ङिच्चेत्यत्र ङिदेवानेकाल् अंत्यस्य स्यात्॥ ननु अङिदपि इतिनियमाश्रयणेनानेकाल्ग्रहणप्रत्या
ख्यानसंभवात्॥ वस्तुतस्तु पक्षद्वयेपि अनेकाल्ग्रहणं कर्त्तव्यमेव॥ अन्यथा अतोभिस ऐसित्यादिपंचमी निर्देशेषु अनेकालोप्यादेशः पर
स्यादेः स्यात्॥ सति अनेकाल्ग्रहणे परत्वात्सर्वादेशः। अतएव तस्मादित्युत्तरस्यादेरिति नसूत्रितम्॥ तथाहि॥ अलोंत्यस्येत्यस्य द्वावप
वादौ॥ आदेः परस्य॥ अनेकाल्शित्सर्वस्येति॥ तत्रप्रथमस्यावकाशः॥ ईदासः॥ बहोर्लोपइति॥ आसीनः भूयात्॥ द्वितीयस्यावकाशः॥

श॰कौ॰ अस्तेर्भूरित्यादिः॥ अतोभिसइत्यादेः परत्वात्सर्वादेशत्वेसिद्धेमामेरित्यादिः॥ नचादेः परस्येत्यत्रालइतिजसंतमनुवर्त्यरामैरित्यादिसा
१०८ धनीयमितिवाच्यम्॥ तथासतिभूयान्भूमेत्याद्यसिध्यापत्तेः॥ तदेवकार्यस्यांत्येत्यनुसंहारोव्याख्यातः॥ ङिच्चेत्याद्यग्रिमसंदर्भानुगुण
त्वात्॥ यद्वा॥षष्ठ्याएवायमनुसंहारः॥ यास्थानेयोगाषष्ठीसांत्यस्यालोबोध्येति॥ अत्रपक्षेङित्वेस्यस्याप्यमर्थः॥ यत्रङित्सादेशोविधीयतेत
त्रयाषष्ठीसाअंत्यस्यालइतिएवमग्रेपि॥ ङिच्च॥ ङित्दनेकाल् अपिअंत्यस्यस्यात्॥दध्ना॥दध्ने॥ अनन्यार्थेङित्वेषु अनङादिषुचरितार्थः
मिदंतातङ्परेणानेकाल्शित्सर्वस्येत्यनेनबाध्यते॥ ननूत्सर्गापवादयोरयुक्तोविप्रतिषेधइतिचेत्॥सत्यं॥ सर्वादेशेपितातङ्गुणवृद्धि
प्रतिषेधरूपंप्रयोजनंसंभाव्यते॥ तावताचकिंचिद्धिलेबेनप्रवृत्तोयमपवादोप्यस्मिन्विषयेउत्सर्गेणसमकक्षतामापन्नइतियुक्तोविप्रति
षेधः॥ यद्वा॥ एरुरित्यस्यानंतरंतिह्योस्तादितिवक्तव्येङित्करणंगुणवृद्धिप्रतिषेधार्थमेवेतिविप्रतिषेधोपपत्तिः॥ अस्तुवाविनापिविप्रति
षेधंसर्वादेशः॥ प्रदर्शितस्यगुणवृद्धिप्रतिषेधार्थत्वस्यसर्वादेशता मंतरेणानुपपत्तेः॥ आदेःपरस्य॥ परस्ययद्विधीयतेतदादेरलो
बोध्यम्॥ ईद्दासः॥ अत्रतस्मादित्युत्तरस्येत्युपतिष्ठते॥ तेनादेरीकारः॥ आसीनः॥अनेकाल्शित्सर्वस्य॥अनेकाल्आदेशःशिच्चस
र्वस्यस्यात्॥ अस्तेर्भूः॥भविता॥ इदमइश्॥ इतः॥ ङिच्चेतिनियमात्सिद्धेनेकाल्ग्रहणंअपवादविप्रतिषेधार्थमित्युक्तं॥ यत्तुवृत्तिकारैर्जे
श्शसोःशिरितिशित्उदाहरणंदत्तं॥ तच्चिंत्यं॥ सर्वादेशतांविनातत्रशित्वस्यैवालाभात्॥सर्वादेशतायाश्चानुपूर्व्यादनेकाल्त्वेनैवणल्
डादेशादिष्विवसिद्धत्वात्॥ तथाहि॥ णल्डाशिप्रभृतयोपदासर्वादेशास्तदाप्रत्ययसंज्ञाः॥ततःप्रत्ययादित्वप्रयुक्तादित्संज्ञा॥ ततोलोपः राम॰
ततएकाल्त्वसत्यपिनसर्वादेशत्वक्षतिः॥ उपजीव्यविरोधापत्तेः॥अतएवहिकतैत्यादौनसर्वादेशतेत्युक्तं॥शकारेणानुबंधेनइश्प्र १०८

भृतीनां अनेकाल्त्वादेवसिद्धे शिद्ग्रहणं नानुबंधकृतमनेकाल्त्वं इति ज्ञापनार्थं ॥ नेनद्दिवउत् अर्वणस्त्रसावित्यादेर्न सर्वादेशता इतिबो
ध्यं ॥ ननु कथं ज्ञापकता ॥ घ्वसोरेद्धावभ्यासलोपश्चेत्येतदर्थतया शिद्ग्रहणस्य चरितार्थत्वात् ॥ तत्र हि लोपश इति छिद्यते ॥ संज्ञायां चरुतं
शित्वं तत्रानुपयुक्तं सत्संज्ञिनि फलति ॥ ङमुटष्टित्ववदिति सिद्धांत इति चेत् ॥ सत्यं । अनेकांता अनुबंधा इति पक्षे नानुबंधकृतमनेका
ल्त्वमित्यस्य प्रयोजनाभावात्तदभिप्रायको लोपशि तिच्छेद इति सिद्धांतः । एकांता इति पक्षे तूक्तरीत्या ज्ञापकमावश्यकं ॥ घ्वसोरित्यत्र
तु लोप इत्येव च्छेदः । लोपोपीति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशः ॥ वार्त्तिकमते तु नानर्थके लोंत्यविधिरित्येव सिद्धं ॥ न चानभ्या
सविकारेष्विति पर्युदासस्यायं विषयः ॥ लोपस्य विकारत्वाभावात् ॥ रूपांतरापत्तिर्हि विकारः ॥ यथा भृज्जामित् ॥ अर्त्तिपिपर्त्योश्चेत्यादिः
॥ अतएव पस्य शा पां लोपे विकारात्पृथगुपात्तः ॥ लोपागमवर्णविकारज्ञो हि वेदं परिपालयिष्यतीति ॥ उक्तं च पृषोदरादीनि इति सूत्रे
कैयटेन ॥ द्वौ चापरौ वर्णविकारनाशाविति ॥ वस्तुतस्तु उपदेशावस्थायामेवांतरंगतया इत्संज्ञा ॥ अतएव उच्चरितप्रध्वंसिनो नुबंधाः स्मर्य
माणाः संत एव कार्यं निर्वाहयंतीति सिद्धांतः ॥ इदं चोत्तरसूत्रे कैयटे स्फुटं ॥ तथा च दिव उत् अर्वणस्तृ इत्यादेरेकाल्त्वात् एकांतपक्षे
पि न सर्वादेशता प्रसज्यते ॥ एवं च नानुबंधकृतमनेकाल्त्वं इति ज्ञापनं व्यर्थं ॥ शिद्ग्रहणं च सुतरां ॥ इदम इश् इदंकिमोरीश्की इति इशीशी स्तुत्य
कारोच्चारणसामर्थ्यात्सर्वादेशतायाः प्राङ् न लोपः ॥ यत्तु कृतेपि सर्वादेशे प्रयोजनाभावात् शकारस्येत्संज्ञा न स्यात् इति हरदत्तेनोक्तं । तन्न । लोपस्ये
व प्रयोजनत्वात् ॥ न चैवं उच्चारणवैयर्थ्यं सर्वादेशत्वसंपादनेन कृतार्थत्वादिति दिक् । तस्मादिह सूत्रभाष्यकृतामभिप्रायश्चिंत्यः । इह चानेकाल्शिदिति
पठित्वा अंत्यस्यादेरिति चानुवर्त्य अनुसंहारद्वयनिषेधसर्वस्येति शक्यमकर्त्तुं ॥ इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकं ॥

श·कौ· ॥श्रीगणेशाय नमः॥ स्थानिवदादेशोऽनल्विधौ॥ आदेशः स्थानिवत्कार्यं लभते प्रवर्त्तयति च॥ तृतीयांताद्वतिना स्थानिना तुल्यं वर्त्तत इति
१०९ वाक्यार्थलाभात्॥ यद्रूपवैकल्यादुपदेशाप्रवृत्तौ सत्याममतिदेशो मृग्यते तच्चेद्रूपं स्थान्यलोऽसाधारणं न भवेत्॥ आवधिषीष्ट॥ अत्र हंते
र्विधीयमानं आत्मनेपदमतिदेशाद्वधेरपि भवति॥ आङो यमहन इत्यत्र हि अल्मात्रमाश्रीयते॥ रामायेत्यादौ सुपि चेति दीर्घे कर्त्तव्ये यद्यपि
यञादौ इत्यलाश्रीयते तथापि न तत्र तद्विरहमत्युक्त्वा सुपि चेत्यस्याप्रवृत्तिः॥ यादेशस्य यञादित्वात्॥ सुप्त्ववैकल्यात्तु उपदेशास्या
प्रवृत्तिः॥ सुप्त्वं चेह यद्यपि ए इत्यस्मिन्नलि वर्त्तते तथापि न तदलोऽसाधारणं॥ भ्यामादौ समुदाये विश्रान्तेः॥ इदं च कार्यकालपक्षाश्र
येणोक्तं॥ यथोद्देशपक्षे तु सुप्संज्ञाया अपि शास्त्रीयत्वात्सैवाऽतिदिश्यते॥ तत उपदेशेनैव दीर्घ इति न किंचित्कष्टं॥ एतेनारुदितामरुदि
तमित्यादाविडागमोऽपि व्याख्यातः॥ तत्रापि सार्वधातुकसंज्ञातिदेशसंभवादिति दिक्॥ अत्र धात्वंगकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः प्र
योजनमिति वृत्तिकृतः॥ उदाहरणदिक् चेयं॥ ननु परिगणनमिति भ्रमितव्यं॥ च्लेः सिजित्यादीनां असंग्रहापत्तेः॥ क्रमेणोदाहरणानि॥
अस्तेर्भूः॥ आर्द्धधातुके विवक्षिते॥ अत एवांगात्पृथक् धातूपादानं॥ धातुत्वात्तु प्रत्ययाः॥ भव्यं॥ केन काभ्यां कैः॥ अंगत्वादिनादेश
दीर्घसंभावाः॥ कृत॥ प्रकृत्य॥ कृत्वा कृत्वस्य पिति कृतीति तुक्॥ अद्यतनं॥ तद्धितत्वात्तदंतत्वप्रयुक्ता प्रातिपदिकसंज्ञा॥ कदस्वः॥ स्था
निवद्भावेनाव्ययत्वादव्ययपूर्वपदप्रकृतिस्वर इत्याहुः॥ तच्चिंत्यं॥ स्थानेऽन्तरतमपरिभाषयागतार्थत्वात्॥ अधोध इति तूदाहरणम्॥
आष्टमिकद्वित्वस्य स्थाने द्विर्वचनरूपत्वात्संभाव्यते॥ किंतु तत्रापि फलं दुर्वचं॥ तस्मादधोधःकाम इत्युदाहार्यं॥ अतः कृकमीति प्राप्त राम
स्य सत्वस्याव्ययत्वात्पर्युदासः॥ यत्तु वृत्तौ प्रस्तुत्येत्यव्ययादेशोदाहरणं॥ तच्चिन्त्यम्। क्त्वामात्रस्यानव्ययत्वात्॥ तदंतविधेः सर्वैकवा १०९

क्यतयासिद्धेतितत्वात्॥ नचजहत्स्वार्थायांवृत्तौ ह्व आनर्थक्यात्सर्वैसर्वपदादेशा इत्यभिप्रायेणेदमितिवाच्यं॥ ह्रस्वस्यपितिकृतीति तु
गभावापत्तेरितिदिक्॥ सुप्॥ रामाय॥ तिङ्॥ अपचतां॥ तिङन्तत्वात्पदत्वं॥ वः नः॥ पदत्वादुत्वादि॥ नन्वेवमधोधइत्यस्यापिपदादेशत्वा
देवगतार्थत्वेनेतिचेत्सत्यं॥ गोबलीवर्दन्यायेनाव्ययग्रहणादितिदिक्॥ इहकाभ्यामित्यादावादेशः कार्यंलभतेकेनकेरित्यादौतुपरस्यभव
तेपतीतिविवेकः॥ ननुवत्करणंमास्तु॥ स्थान्यादेशइत्येतावतापि असंयोगाल्लिटकिदित्यादाविववत्यर्थ लाभात्॥ यदाहुः॥ प्रत्ययःशब्दः
मप्रयुज्यमानोविनापिवतिंवत्यर्थंगमयतीति॥ नचस्थानीआदेशंप्रतिपद्यतइत्येववाक्यार्थः किंनस्यादितिवाच्यं॥ तत्तदादेशविधाय
कैरेवगतार्थत्वात्॥ नचादेशःस्थानिरूपमापद्यते॥ वचनरूपसामान्यात्तुविकल्पइतिवाच्यम्॥ वालिटीत्यारंभात्॥ नचवसिद्धः स्यात्
आदेशःस्थानी[illegible]वचनरूपसामान्यात्सर्वत्रविकल्पापत्तौलिट्येवेतिनियमार्थंनतस्यादितिवाच्यम्॥ एवमपिविभाषालुङ्लृङोरित्या
द्यप्राप्तविभाषासुवाग्रहणवैफल्यापत्तेः॥ अस्तिभूभ्यांरूपद्वयसिद्धावस्तेर्भूरित्यस्यवैयर्थ्यापत्तेश्च। अत्राहुः। वत्करणाभावेस्थानीआ
देशस्यसंज्ञास्यात्॥ प्रायेणह्यस्मिन्पादेसंज्ञासूत्राण्येवारभ्यन्ते॥ ततश्च आङोयमहनइत्यात्मनेपदंवधेरेवस्यान्नतुहन्तेः॥ नचसंज्ञप
मितिहन्तेरपिग्रहणं॥ अशब्दसंज्ञेतिनिषेधात्॥ नचस्थानि[illegible]संज्ञात्वेसिद्धं धर्मिणमित्यादिन्यायो[illegible]बाधः॥ अनेकशक्तेःशब्दस्यसंज्ञानि
विनियोगइतिपक्षेसंज्ञायाएवोद्देशकोटिनिवेशात्॥ नन्वेवमाङोवधियमइत्येवब्रूयात् इतिवाच्यम्॥ वधहिंसायामितिभौवादिक
स्यापिग्रहणापत्तेः॥ नचाङोवधयमइतिपठ्यतां॥ अकारस्यविवक्षितत्वाच्चनभौवादिकेतिप्रसंगइतिवाच्यम्॥ सकलहन्त्यादेशसंग्र
हार्थमाङोयमहनइत्यस्यैववाच्यत्वात्॥ तथाचावधिष्टवधोजघ्नेइत्यत्राप्यात्मनेपदंसिद्धं॥ तथाहि॥ हन्तेर्लिटिलसामान्यापेक्षत्वादन्तरं

शा. कौ. गत्वात्ति वादिषु कृतेषु परत्वनित्यत्वाभ्यां शेषात्कर्तरीति बाधित्वा लिटि धातोरिति द्विः प्रयोगे ऽभ्यासस्य चुत्वे ऽभ्यासात्परस्य घत्वे एकदे
११० शविकारासंभवेन समुदायस्य समुदायादेशत्वाद्गुत्यादेशत्वं ततो वधिना सह तुल्ययोगक्षेमत्वेनेति दिक्॥ अस्त्वा वास्थानिन आदेशसं
ज्ञा॥ तथाप्यनिष्टं तुल्यमेव॥ तथाहि॥ अस्यति वक्तीत्यत्र ख्याति पदेन चक्षिङे वग् ह्येत॥ कृत्रिमत्वात्॥ तथा च समचक्षिष्टेत्यत्र ङ्स्यात
अख्यातेत्यत्र च न स्यात्॥ न चैवं चक्षिङ इत्येव ब्रूयात्॥ अनुबन्धनिर्देशेनापि यङ्लुग्वारणसंभवादिति वाच्यम्॥ एवमपि गाङ् कुटादिसू
त्रे गाङो इङ् गाङो ग्रहणापत्तेः॥ इङित्यवचनसामर्थ्यादुभयगतिः स्यात्॥ गमेरिट्परस्मैपदेष्वित्यत्र तु इणिङोरेव ग्रहणं स्यादिति॥
तस्मात्कर्तव्यमेव वत्करणं॥ नन्वेवं वत्करणाभावाधीनलाघवानुरोधात्संज्ञाप्रकरणादन्यत्रैव स्थानिवद्भावप्रकरणं क्रियतामिति चेन्न॥
तथासति आदेशग्रहणं विना वाक्यापर्याप्तिर्वा हेवहु गौरवापत्तेः॥ सिद्धान्ते तु आदेशग्रहणमतिरिच्यमानं आनुमानिकसंग्रहार्थं भवतीति
तद्बले नैकदेशविकृतस्योपसंख्यानं इति वार्त्तिकं प्रत्याख्यास्यते॥ अपि च॥ काममतिदिश्यतां वेति वक्ष्यमाणमपि वत्करणापन्नमिति
दिक्॥ स्यादेतत्॥ यदि संज्ञाप्रकरणे वत्करणं विना अतिदेशलाभस्तर्हि कित् ङित् इत्यादौ का गतिरिति चेत्॥ उच्यते॥ किदिति न संज्ञा
॥ न क्त्वा सेडिति ज्ञापकात्॥ नहि क्त्वः कित्संज्ञा प्राप्ता या निषिध्येत॥ ननु मृड मृधेति प्राप्ता सा निषिध्यतां॥ वचनद्वयसार्थक्याय च विकल्पो
ऽस्तु इति चेत् न॥ मृडमृदेत्यत्रैव वा ग्रहणस्य संभवात्॥ किं चैवं निष्ठा शीङित्यादि व्यर्थं स्यात्॥ न हि शीङादिभ्यो निष्ठायाः केनचित्सं
ज्ञा प्राप्ता॥ एवं ङिदित्यपि अतिदेशः॥ कित्साहचर्यात्॥ किं च॥ ङिदित्यस्य संज्ञात्वे ग्रहिज्यादिसूत्रे ऽस्यैव ग्रहणं स्यात्॥ कृत्रिमत्वात् राम.
॥ तथा न वशइति सूत्रं व्यर्थं स्यात्॥ वावश्यते इत्यत्र संप्रसारणाप्राप्तेः॥ ॥ किं च॥ क्ङिति चेत्यत्रास्य ग्रहणं स्यात्॥ संज्ञा स्वरूपानुच्चारे ११०

णात्॥ तथा च गाङ्कुटादीत्यत्र कुटादिग्रहणं व्यर्थं स्यात्॥ बहुगणेत्यत्र तु संख्येत्यतिदेशः॥ अन्यथा हि द्युभादिवदेकाक्षराया एव संज्ञायाः कृ
र्त्तव्यतापत्तेः॥ किंकिनो लिङ्वेत्यादि तु न संज्ञाप्रकरणं तेन लिङ्वदिति अतिदेशो निर्बाध इति दिक्॥ अथादेशग्रहणं किमर्थं॥ स्थानिवदित्येतावि
तैव संबंधिशब्दमहिम्ना तल्लाभात्॥ यथा पितृवदधीत इत्युक्ते पुत्र इति गम्यते इति चेत्॥ सत्यं॥ द्विविध आदेशः॥ अस्तेर्भूरित्यादिः प्रत्यक्षः
॥ तेस्तुरित्यादिश्च आनुमानिकः॥ तत्र हि इकारेणेकारान्तः स्थान्यनुमीयते॥ उकारेण चोकारान्त आदेशः॥ तथा च तेस्तुरिति फलितोऽर्थः॥ तत्रा
सति आदेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्य॥ आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः॥ तेन पचतु इत्यादेस्तिङंतत्वात्पदसं-
ज्ञा सिध्यति॥ ननु एरुरित्यादि यथाश्रुतमस्तु॥ एकदेशविकृतस्यानन्यत्वाच्च पदत्वं भविष्यतीति चेन्न॥ अर्थवत्स्यैव स्थान्यादेशभाव वि-
श्रांतेर्वाच्यत्वात् [illegible] संभवात् तथा हि॥ षष्ठीस्थाने योगेत्युक्तं॥ स्थानं च प्रसंगः॥ स चार्थवतः अर्थप्रत्यायनार्थं शब्दप्रयोगात्॥ यद्यपि
ह्लेः सिजादावसंभवो वादं॥ तथापि सति संभवे अर्थप्रयुक्तप्रसंग एव ग्राह्य इति आदेशग्रहणेनैव ज्ञाप्यते॥ उक्तं च॥ सर्वे सर्वपदादेशा दाक्षीपु
त्रस्य पाणिनेः॥ एकदेशविकारे हि नित्यत्वं नोपपद्यते॥ पदमिहार्थवत्॥ पद्यतेऽनेनेति व्युत्पत्तेः॥ यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्तिः
॥ तथापि इह विकार एव नास्तीति तात्पर्यं॥ तथा च वार्त्तिकं॥ [illegible]र्थविपरिणामादिति॥ कार्यं इह ज्ञानं [illegible]पताबलात्॥ तथा च ज्ञाननि[illegible] उत्प[illegible]
विनाशादिकं विषये आरोप्यत इति भावः॥ नन्वेवं बुद्धिकृतपरिणाममात्रस्य स्थान्यादेशभावत्वे अपवादेप्युत्सर्गकृतं स्यात्॥ तथा हि [illegible]
त्यपांतादपि अणन्तत्वप्रयुक्तो ङीप् स्यात्॥ अत्राह वार्त्तिककारः॥ सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनादिति॥ षष्ठीस्थानेयोगेत्यनुवृत्तेरि
ति भावः॥ न चापवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते॥ नाभिप्रेतं चेत्यादौ तु षष्ठ्याः स्थाने प्रथमा मा[illegible]प्या॥ विश्रवणरवणेत्यादौ नित्तु शब्दा

श॰कौ॰ तराणि प्रत्ययविषयाणि बोध्यानि॥ विश्रवःशब्दात्तु प्रत्ययो न भवति। अनभिधानादिति भावः। तथा च विदूराञ्ञ्य इति सूत्रे भाष्यं॥ वालवायो विदूरं च प्र-
१११ कृत्यंतरमेव वा॥ नवैतत्रेति चेद्रूपाज्जित्वरीवदुपाचरेदिति। अस्मिंश्च पक्षे षष्ठीनिर्दिष्टस्य स्थाने आदेशा विधीयंत इति च ह्रिसूत्रस्थभाष्यप्र-
याश्रुतमेव निर्बाधं॥ यत्तु स्थान्यर्थाभिधानसमर्थस्यैवादेश इति एवंपरतया कैयटेन भंक्त्वा व्याख्यातं तद्रस्य पक्षांतराभिप्रायेणेत्यवधेयं॥
अयवा पुनः शित्करणं ज्ञापकं॥ अपवादे उत्सर्गकृतं नेति॥ ङिषपित्त्वनिवृत्त्यर्थं तदिति वाच्यम्॥ ...देव तत्सिद्धेः॥ नित्त्वं ह्याद्युदात्तार्थं
श्नः पित्वे तु पित्त्वादनुदात्तत्वे लसार्वधातुकानुदात्तेन च धातुस्वरेणैव सिद्धे किं नित्त्वेन॥ न चानेकाच्सु विशेषः॥ दिवादौ तदभावात्॥ ...तुर्थ
तेन इत्यस्तीति चेन्न॥ वाशब्दस्य विकल्पार्थत्वात्॥ न च भ्वादिपाठेन सिद्धे स्नविधेर्वैयर्थ्यं॥ भ्वादिपाठस्य रद्ध्नः स्यसनोरित्याद्यंतर्गणकार्ये
उपक्षीणत्वात्। जिन्ववैम्... तौ वा वृत्त्यर्थाना सारा मशालां न्यविस्सतेति भट्टिप्रयोगानुपपत्तिरिति चेन्न॥ तं च वाशब्दस्यैवार्थतया का मथ
मानेव न तु तथा॥ किंतु छलनार्थमागतेत्यर्थात्॥ अत्र कैयटः॥ ताच्छील्यादिविषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यादिति॥ तत्र हि ल
सार्वधातुकाभावादनुदात्ताप्राप्त्या चित इत्यंतोदात्तत्वमेव प्राप्तं इष्टं च॥ तत्राद्युदात्तार्थमेव किं नित्त्वं न स्यादिति तस्याशयः॥ नत्वेतद्युक्तं॥ अ-
न्यत्र विकरणेभ्य इति पर्युदासाच्छ्यन्स्वरस्य दुर्बलत्वात्॥ न च नित्त्वसामर्थ्यात्तद्बाधः॥ लसार्वधातुके चरितार्थत्वात्॥ तत्र स्थानिवद्भावल-
ब्धेन पित्त्वेन गतार्थतेति चेन्न॥ इह नित्त्वेनातिदेशपर्युदासयोरन्यतरस्मिन्नवश्यबाध्ये तिदेशबाधस्यैव न्याय्यत्वात्॥ पूर्वान्बाधंते नोत्तरा
निति न्यायाच्च॥ यत्तु कैश्चिच्छानशं तस्य आद्युदात्तत्वमिष्टमित्येवंपरतया कैयटग्रंथं व्याख्याय विकरणेभ्यो न्यत्रेति पर्युदासस्तु यत्र विक- राम
रणः स्वरभाक् तद्विषयः॥ इह तु विकरणांतमेव स्वरभाक्॥ सौवर्यः सप्तम्यस्तरं न सप्तम्य इति सिद्धांतादित्युक्तं। तदेतन्निर्मूलं। पुसंज्ञासूत्रे १११

स्येमत्वसूत्रस्थभाष्येण विरुद्धं चेत्युपेक्ष्यं ॥ किंच ॥ आतोनुपसर्गे कइति कापवादस्य गापोष्टगिति टकः कित्करणं ज्ञापकं ॥ नापवादेउत्सर्गे
कृतं भवतीति ॥ अनल्विधाविति किं ॥ तेन तस्यान्तस्य तस्मिंश्च विधौ मा भूत् ॥ तत्रालाविधौ यथा ॥ व्यूढोरस्केन ॥ अत्र सोपदादाविति विसर्ज
नीयस्य स्थाने विहितस्य सकारस्य स्थानिवत्त्वाद्विसर्जनीयस्य अट्स्वरूपदेशाद्ड्व्यवाये इति णत्वं प्राप्तं ॥ अलः परस्य विधौ यथा ॥ द्यौः पं
थाः सः ॥ अत्र हल्ङ्यादिलोपो न भवति ॥ अलोविधौ यथा ॥ द्युउत् ॥ द्युकामः ॥ लोपो व्योर्वलीति लोपो न भवति ॥ उत्त्वविधानं तु अहर्विम
लद्यु इत्यादौ चरितार्थं ॥ अल्विधौ यथा ॥ यजेः क्तः इष्टः ॥ कइष्ट इत्यत्र संप्रसारणस्य स्थानिवत्त्वात्को यष्टेत्यादाविव हशि चेत्युत्वं न भवति
॥ स इष्ट इत्यत्र एतत्तदोः सुलोपो न भवति ॥ अनलद्दित्युक्तेपि संबंधसामान्ये षष्ठ्या प्रागुक्तानेकविभक्त्यर्थसंग्रहो यद्यपि संभवति तथापि
विधिशब्दोपादानसामर्थ्यात्प्राधान्येनाप्यल आश्रयणे निषेधार्थं ॥ तेन प्रपठ्येत्यादि सिद्धं ॥ अत्र हि वलादेरिति अप्राधान्येनालाश्रितः न तु प्राधा
न्येन ॥ स्यादेतत् ॥ स्थान्यनुबंधकार्याण्यपि तर्हि निषिध्येरन् ॥ तथा च प्रदीव्येत्यत्र स्थानिवद्भावेन कित्त्वं न लभ्येतेति चेत् ॥ न ॥ अनेकांता
अनुबंधा इति पक्षे अनुबंधानां स्थान्यल्त्वाभावात् ॥ एकांतपक्षेप्यंतरंगेण लोपेनादेशसंबंधात् प्रागेवानुबंधानामपहारात् ॥ नल्यपीति
लिंगाच्च ॥ यत्तु सेर्ह्यपिच्चेति ज्ञापकमुच्यते ॥ तत्रासिकं ॥ अपिद्वचनसामर्थ्यात्स्थानेन्तरतमपरिभाषया प्राप्तं अनुदात्तत्वं न भवतीत्यस्या
पि सुवचत्वात् ॥ यद्यपि सामान्यातिदेशे विशेषानतिदेश इति सिद्धांतः ॥ उपस्थितसामान्यप्रवृत्तधर्मैस्तद्व्याप्तिसव्यापकसामान्यधर्मैश्च
विध्याकांक्षापूरणे सति अनुपस्थितस्य विशेषस्य ग्रहणे प्रमाणाभावात् ॥ अत एव ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यं इत्युक्ते माठरादिविशे
षकार्यं नातिदिश्यते ॥ अत एव चाशंसायां भूतवच्चेत्यत्र भूतसामान्ये विहितयोर्लुङ्निष्ठयोरेवातिदेशो न तु भूतविशेषे विहितयोर्लङ्लिटो र्

पीतिसिद्धांतः॥ तथापीह सूत्रे नल्यपीति लिंगाद्विशेषोऽप्यतिदिश्यते॥ किति परतो विहितमित्त्वं निषेद्धुं हि नल्यपीत्यारभ्यते॥ किं त्वेवं त्क्वादिशेषधर्मः॥ सेट्कृतदभावात्॥ तेन प्रदीव्येत्यादि सिद्धं॥ तस्मान्नल्यपीत्येव सूत्रं विशेषातिदेशे अनुबंधकार्यातिदेशे चेत्युभयत्रापि ज्ञापकमिति स्थितम्॥ यत्तु प्राञ्चः॥ अनल्विधाविति निषेधो विशेषातिदेशज्ञापक इति॥ तच्चिंत्यं॥ व्यूढोरस्केन कइष्ट इत्यादौ विसर्गत्वस्य[illegible]स्वस्य च व्याप्यकीभूतयोरत्त्वहशत्वयोर्निषेधेन चरितार्थत्वात्॥ यदपि त्वादेशे कृत्वप्रत्ययत्वाद्यतिदेशमभ्युपेत्य कइष्ट इत्यादौ हशत्वादिशेषातिदेशेन प्राप्नोतीति मिश्रैरुक्तं॥ तत्र विसर्गत्वयणत्वयोरत्त्वहशत्वे कथं विशेषधर्माविति विपश्चित एव विसंकुर्वंतु॥ यद्यपि तत्स्थानापन्नस्तद्धर्मं लभते इति न्यायसिद्धं अत एव व्रीहिस्थानापन्नेषु नीवारेषु वचनं विनैव व्रीहिधर्मा अवघातादयः क्रियंते॥ तथापि तेषां प्रवृत्तापूर्वसाधनत्वप्रयुक्तत्वात् प्रयुक्तं नीवारादौ अनुष्ठानं॥ आङो यमहन इति हंतेरात्मनेपदं तु न हिंसाद्यर्थाभिधानप्रयुक्तं येन वधौ भवेत्॥ किंतु स्वरूपमिति वचनात् स्वरूपविशेषप्रयुक्तं॥ अत एवा॰ तृणेढीत्यादौ न भवति॥ तस्माद्युक्त एवातिदेशारंभः॥ स्यादेतत्॥ मा भून्न्यायेन गतार्थता॥ ज्ञापकात्तु भविष्यति॥ तथाहि॥ युष्मदस्मदोरनादेशे इति सूत्रे अनादेशग्रहणं ज्ञापयति॥ आदेशः स्थानिवत्स्यादिति॥ अदो जग्धिर्ल्यप्ति किति इति सूत्रे तिकितीत्येव सिद्धे ल्यब्ग्रहणमनल्विधाविती ममशं ज्ञापयति॥ अप्राधान्येनाप्यलाश्रयणे निषेध इत्यंशं च॥ तथा च किं सूत्रेणेति॥ उच्यते॥ उत्तरार्थं तावत् स्थानिवदादेश इति कर्त्तव्यमेव॥ तस्यैव योगविभागमात्रेणोपपन्नौ सत्यां आर्थापत्तिकं वचनं न कल्प्यं॥ एवं स्थिते अनल्विधावित्ययमप्यंशः स्पष्टप्रतिपत्त्यर्थं क्रियते॥ उत्तरसूत्रे द्वितीयविधिग्रहणस्यानुवृत्त्यर्थं च॥ तस्य योजनं तु तत्रैव वक्ष्यते॥ एतदेव च सकलमभिसंधायोक्तं भगवता॥ आरभ्यमाणेऽप्यस्मिन् सूत्रे इति॥ स्यादेतत्॥ अस्तु सूत्रारंभः॥

तथापि कार्यातिदेश एवायमिति कुतः॥ प्रकारान्तराणामपि संभवात्॥ तथाहि॥ अतिदेशः॥ षोढा॥ निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपा
तिदेशभेदात्॥ तत्र निमित्तमशक्यमतिदेष्टुम्॥ ब्राह्मण्यवत्॥ न हि ब्राह्मणस्याग्रभोजनादौ निमित्तभूतं ब्राह्मण्यं वचनशतेनापि क्षत्रियेऽतिदेष्टुं श
क्यते॥ पूर्ववत्सन इत्यत्रापि प्रकृतिगतं निमित्तं ङित्त्वादि न सन्नन्तेऽतिदिश्यते॥ किंतु प्रकृतिगतमेव तत्सनाव्यवधानेऽसत्यपि आत्मनेपदं प्रवर्तयि
तीत्येतावन्मात्रमतिदिश्यते॥ एतावतैव च निमित्तातिदेशोऽयमिति व्यवहारः॥ न चायं कार्यातिदेश एवास्त्विति वाच्यम्॥ चिकंसते प्रचिकंसते इत्या
दौ इष्टप्रसंगात्॥ निमित्तातिदेशपक्षे तु अनुपसर्गात् प्रपूर्वस्य क्रमेरेवेह सनाव्यवहितोऽप्यात्मनेपदं प्रवर्तितवानिति स्नुक्रमोरनात्मनेपदनि
मित्ते इति नियमादिण् न भवति॥ निमित्तं हि तत्र फलोपहितमेव गृह्यते न तु स्वरूपयोग्यमात्रमिति वक्ष्यामः॥ सिद्धं त्वात्मनेपदेन समानपदस्थ
स्येट्प्रतिषेधात् इति वार्त्तिककृद्रीत्या तु इहापि कार्यातिदेशता सुवचा॥ न्याय्या चेयमिति तत्रैव वक्ष्यते॥ व्यपदेशातिदेशस्तु आद्यन्तवदेकस्मिन्निति॥ ए
कस्मिन्नपि आदिरन्त इति च व्यपदेशोऽतिदिष्टे तत्तत्सूत्रैरेव कार्याणीति भावः॥ तथा च भाष्यम्॥ आद्यन्तवद्व्यपदेशो निमित्तं पूर्ववत्सन इति॥ ए
तच्च निर्मूलमिति तस्मिन्नेव सूत्रे हरदत्तः॥ तस्यायं भावः॥ कार्यातिदेश एव तत्र युक्तः॥ सर्वातिदेशानां कार्यार्थतया कार्यस्यैव प्राधान्यात्॥ अत ए
व कार्यातिदेशाभ्युपगमे यत्र बाधकावतारः तत्रैव प्रकारान्तराश्रयणं॥ न चाद्यन्तवत्सूत्रे तदस्ति प्रत्युत व्यपदेशातिदेशपक्ष एव बाधकं॥ तथाहि॥
कुरुते कुर्वे इत्यादावन्त्यव्यपदेश आदिव्यपदेशश्चास्तु॥ तथाप्यन्त्यो जादिर्यस्येत्येवंरूपस्य बहुव्रीह्यर्थस्याभावाट्टिसंज्ञाया अभावे टेरेत्वं न स्यात्
अकुर्वाते इत्यादौ दृष्टस्य टेरेत्वारम्भस्य कार्यस्यातिदेशे तु न कश्चिद्दोष इति॥ तादात्म्यातिदेशस्तु भिन्नयोरभेदातिदेशः॥ सुबामन्त्रिते पराङ्गवत्स्व
रे इति यथा॥ तेन यत्ते दिवो दुहितर्मर्तभोजनमित्यादावामन्त्रितस्य चेति आष्टमिकसूत्रेण पदात्परस्यामन्त्रितस्य निघाते प्राप्तो दिवो दुहितरित्ति

शा०की समुदाये प्रवर्त्तते॥ शास्त्रातिदेशस्तु कर्मवत्कर्मणेत्यत्र पाक्षिकों वक्ष्यते॥ कार्यातिदेशो गोतो णिदित्यादिः॥ रूपातिदेशस्तु द्विर्वचनेचि तृज्वत्क्रोष्टुरि
१११ त्यादिः॥ तदिह कार्यातिदेश एवेत्यत्र किं विनिगमकमिति चेत्॥ उच्यते॥ कार्यस्य प्राधान्यात्तदतिदेश एवायं॥ अतिदेशांतरे बाधकसत्वाच्च। तथाहि॥
निमित्तव्यपदेशातिदेशौ तावत्पाक्षिकावित्युक्तं॥ शास्त्रातिदेशोप्येवं। तादात्म्यातिदेशस्तु द्वयोः सहावस्थितयोस्स्यात्॥ सुबामंत्रिते पराङ्गवत्स्वरे॥ इह
तु स्थान्यादेशेन अपहृतः इति न द्वसंभवः॥ रूपातिदेशे तु अर्द्देशविधानं व्यर्थं स्यात्॥ न च वचनद्वयप्रामाण्याद्विकल्पः॥ विभाषा [illegible]री
ति विकल्पारंभात्॥ तस्मात्कार्यातिदेश एवायमिति स्थितं॥ यत्तु न्यासकारेणोक्तं॥ व्यपदेशातिदेशस्संज्ञानस्पे पर्यवसन्नः॥ स च वत्करणसामर्थ्या
द्वेन भविष्यतीति। तत्रेदं वक्तव्यं॥ अस्तीह संज्ञापक्षा द्वैषम्यं॥ तथाहि॥ आङो यमहन इत्यादौ वधेर्वग्रहणं स्यान्नतु हंतेः॥ तेनकेनकस्मादित्यादौ
अंगकार्यादीनि न स्युरिति संज्ञापक्षे दोषद्वयं॥ न चेद्व्यपदेशातिदेशोस्ति॥ स्वंरूपमिति वचनाद्धि हंतेर्हंतिरेव संज्ञा॥ तद्व्यपदेशस्य वधावप्यति
देशात्तु भाभ्यामात्मनेपदं लभ्यते। नतु हंतेरेव॥ एवं स्थानिनिष्ठानां धात्वंगादिव्यपदेशानां आदेशे तिदेशात् धात्वंगादिकार्याण्यपि सुलभान्येव॥ त
स्मात्प्राधान्यात्कार्यातिदेशोयमित्येव तत्त्वं॥ अत्र वार्तिककाराः॥ तस्य दोष इत्युपक्रम्य तयादेश उभयप्रतिषेधः॥ ङ्याब्ग्रहणे दीर्घः आदिभु
वो रीट् प्रतिषेध इत्यादि पेठुः॥ तत्रोभयशब्दे यथा नातिप्रसंगस्तथा सर्वादिगणव्याख्यावसरे एवोपपादितं॥ ङ्याब्ग्रहणे पिङी ई आ आबिति
दीर्घप्रश्लेषादतिखट्वे नातिखट्वे इत्यादौ नातिप्रसंगः॥ न चैवमप्यतिखट्वाये त्यत्र दोषतादवस्थ्यं॥ उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्वा
त्॥ नन्वेवं प्रश्लेषवर्णनवैयर्थ्यं॥ अतिखट्व इत्यादावंगाधिकारविरहेणावपवादृबंतात्परत्वमाश्रित्य हल्ङ्यादिलोपापत्तेः॥ नहि तत्र विहि रा॥
तविशेषणाश्रयणं युक्तं॥ यः सः इत्यादाव तिव्याप्तेर्[illegible]

स्मत्याख्यानाय वर्ण्यत इत्यन्यदेतत्॥ युक्तं चैतत्॥ वार्तिकमते अतिखट्वायेत्यादावंगाधिकारबलेन कथंचिन्निर्वाहेपि जरसे नसे पृते इत्याद
वतिप्रसंगस्य दुर्वारत्वात्। भुवामिच्छन्सुतीरित्यादौ सुलोपापत्तेश्चेति दिक्॥ अस्तु वा आकारांतरमपि प्रश्लिष्य तत्सामर्थ्यान्मध्ये ह्रस्वत्वमाप्
न्नस्य परिहार इति दिक्॥ आहि भुवो रिति वार्त्तिकं तु इत्थं भाष्यकाराः प्रत्याचख्युः॥ आस्थे त्यत्र आहेः स्थानिवद्भावेनाप्यासोपि भुव ईप्न भवति
॥ आह स्थ इति ज्ञापकात्॥ तेन हि झलादौ परे थत्वं विधीयते॥ न च कृतेपीटि भूतपूर्वगत्या झलादित्वात्थकारोस्तु इति वाच्यं॥ एवं हि सति आथ
मेव विदध्यात् लाघवात्॥ तिबादीनां पंचानामपि झलादित्वापाणलादीनामपि भूतपूर्वगत्या झलादित्वात्॥ तस्मादाहस्थ इति ज्ञापकादाहेरिड्वि
धौ स्थानिवद्भावो नेति स्थितं॥ अस्ते र्भूरिति विहितस्य भुवोपि स्थानिवत्वनिषेधो न वक्तव्यः॥ अस्तिसिचो पृक्त इति हि सकारकनिर्देशेन सकारांत
द्वेवास्तेः परस्येड्विधानात् इति॥ स्यादेतत्॥ असस् इति सकारनिर्देशो धातुत्वाभावात् श्तिबेवानुपपन्नः॥ पदमध्यप्रविष्टेन संस्कारेण सिचो विशेष
णासंभवे सिजाश्रयस्य ईटः प्रसंगश्च॥ न चास्तेः सांतत्वेन विशेषणसामर्थ्यात्सिच् प्रयुक्तोपीण्नेति वाच्यम्॥ तथापि स्वतंत्रस्य भवतेरतिप्रसंग
स्य दुर्वारत्वात्॥ तथा चार्थभेदाभावेपि स्वतंत्रास्वतंत्राभ्यां भूभ्यां अभूवीत् अभूदिति रूपद्वयापत्तिः॥ यत्तु एतद्दोषोपन्यासपूर्वकं माधवाचार्यैरु
क्तं॥ सिचोत्पाचकत्वाद्धुविषयत्वेनाभ्यर्हितत्वाच्च पूर्वनिपाते कर्तव्येऽस्तिसिच इति वचनात्तत्रादिमं विद्यमानसिच इत्यप्यर्थो लभ्यते॥ अत
एवं शितप्प्रयोगोपि सार्थकः॥ अन्यथा सिजस्भ्यामित्येव ब्रूयात्॥ न चैवमसतावस्यतो चातिप्रसंगः। विकरणव्यवधानेन ताभ्यां परस्यापृक्तसा
र्वधातुकस्यासंभवादिति॥ न चिंत्यं॥ एवमपि श्तिप्रत्ययासमाधानेन हि सकारको निर्देश इति भाष्यस्यानिर्वाहात्॥ अतेन सिच्च अस् च सिचस्॥ स
माहारद्वंद्वे लुप्तपंचमीकं पदं। अयस्मयादित्वेन भत्वान्न कुत्वजश्त्वे॥ अस्ति च तत्सिजस् चेति कर्मधारयः॥ नेन लुप्तास्तिसिचो भूभावेनापहृताद

प्रा॰ को॰ स्तेश्चपरस्यनेतिकल्पनापिप्रयुक्ता॥उक्तरीत्यारूपसिद्धावपिभाष्यानिर्वाहात्॥तस्मादिहभगवतोभिप्रायांतरमेववक्तव्यमिति॥अत्रोच्यते॥
११४ अस्तिसिचस्स्इतिछेदः॥सांतादस्तेःनतुरुनभूभावात्॥सांतात्सिचःश्रूयमाणादितियावत्॥तथाचसिचइत्यस्यानंतरंसकारःप्रश्लिष्यतेनु
तुश्तिपःप्राक्॥येनमाधवोक्तास्तिपृभृत्ययानुपपत्तिरूपोदोषःस्यात्॥अतएवसिचोपृक्तइतिहिसकारकोनिर्देशइत्युक्तंभाष्ये॥अन्यथाह्यस्तीति
निर्देशइत्येवब्रूयात्॥नन्वेवमस्तिसिचोपृक्तइतिसंहिताकथंनिर्वहतीतिचेत्॥इत्थं॥संयोगांतस्यलोपइतिद्वितीयःसकारोलुप्यते॥ननुलुप्तवि
भक्तिकंसइतिपदं॥नचैतत्संयोगांतं॥तथाचसंयोगांतंयत्पदंतस्यविधीयमानोलोपःकथमिहस्यादितिचेत् न॥संयोगांतस्यपदांतस्यलोपः
स्यादितिव्याख्यानात्॥संयोगेतिहिलुप्तषष्ठीकंपृथक्पदं॥संयोगस्यपदस्येत्युभयंचांतस्यविशेषणं॥एषएवचसूत्रकृतोप्याशयः॥यदिहिअ
यंबहुव्रीहिःपदंचान्यपदार्थइतिवृत्तिकारकृतंव्याख्यानंसंमतंस्यात्तर्हिअंतग्रहणंनकुर्यात्॥संयोगेनपदविशेषणादेवतदंतलाभात्॥अपिच
सरूपसूत्रेपृथक्सर्वेभ्योविभक्तावेकशेषइतिपक्षेरक्षसस्इतिप्रसज्येतेत्याशंक्यसंयोगांतलोपात्सिद्धं इतिभाष्यग्रंथःप्रकृतव्याख्यानए
वानुकूलः॥प्रत्युतत्रकैयटोवक्ष्यति॥वस्तुतस्तुसंयोगांतस्यलोपाद्धल्ङ्यादिलोपादिति॥तत्तुमूलस्वरसविरुद्धं॥अत्रव्याचक्षतइत्युपक्रमा
दपरितोषग्रस्तंच॥अतएवहलंत्यसूत्रेअन्योन्याश्रयोद्धारार्थअंत्यलकारस्येत्संज्ञापाणलोलित्वस्वरार्थक्रियमाणंज्ञापकमितिप्रक्रम्यननु
लकारःश्रवणार्थएवेत्याशंक्यअपृक्तहलितिहल्ग्रहणंणल्व्यावृत्तयेक्रियमाणंणलोपृक्ततांज्ञापयतीतिवक्ष्यति॥तस्यत्वयमाशयः॥भ्रे
त्तेत्यादौडादेशोहल्ग्रहणस्यव्यावर्त्योनसंभवति॥सुतिसीतिप्रत्ययैःप्रकृतेराक्षेपेणहलंतायाःप्रकृतेःपरेषांस्वादीनांलोपः॥नचडादेशं राम॰
प्रतितासंताप्रकृतिरिति॥एवंचेहापिवृक्षस्इत्यस्यप्रकृतित्वाभावात्कथंहल्ङ्यादिलोपः॥आस्तिसिचोपृक्तइतिहिसकारकोनिर्देशइति ११४

प्रकृतग्रंथोपि उक्तव्याख्यायामनुकूल एव॥ नन्वस्तूक्तरीत्या संयोगांतलोपः तथापि तस्यासिद्धत्वाद्रोरुत्वं दुर्लभमिति चेन्न॥ संयोगांतलोपो रो
रुत्वे इति वार्त्तिकेनासिद्धत्वनिषेधात्॥ हरिवो मेदिनं त्वा इत्यादिवत्॥ सिचो पृक्त इति प्रकृतनिर्देश एव च वार्त्तिकोक्तार्थे ज्ञापको बोध्यः अथवा भ
स्तवृत्तिकारोक्त एव संयोगांतस्य लोप इति सूत्रस्यार्थः॥ अंतग्रहणं प्रत्येकं संयोगसंज्ञेति पक्षे संयोगावंतौ यस्येति हि त्वावगतये स्त॥ संयोगसं
ज्ञासूत्रे भाष्यकैयटयोस्तथैवाभिधानात्॥ प्रकृते तु मास्तु संयोगांतलोपः॥ किंतु ह्योः सकारयोः रुत्वे कृते अतो रोरित्यनेन एक एव उकारो भविष्य
तिविधेयविशेषणस्य एकत्वस्य पश्वेकत्ववद्विवक्षितत्वात्॥ रोरिति जातिपरनिर्देशेनातः परत्वस्य पूर्वत्वस्य च संभवात्॥ जातिपरत्वे प्रकृतनिनि
र्देश एव प्रमाणमस्तु॥ न च परत्वाद्धशि चेति प्रथमस्यैव रोरुः स्यात् इति वाच्यं॥ रुत्वस्यासिद्धतया हशः परत्वाभावात्॥ न चाश्रयात्सिद्धत्वमि
ति वाच्यम्॥ स्थान्यंशे तथात्वेपि निमित्तीभूतहशंशे तदसंभवात्॥ एष एव च हि सकारकनिर्देशवद्तो भाष्यकारस्याशयः॥ ननु संयोगांतलोप
इति॥ अत एव नुट् विदेति सूत्रे भुषः क इत्यादि बहुयोगविच्छिन्नस्य नकारस्य कथमनुवृत्तिरित्याशंक्यान्यतरस्यां नध्याख्येति संहितापाठेन न
कारांतरप्रश्लेष इत्युक्तं भाष्ये हलो यमां यमि लोप इति हितस्याशयः॥ पूर्वोक्तरीत्या तु संयोगांतलोपे नैव सिद्धौ संहितापाठपर्यंतं नोपन्यस्येत्॥
संहितायामपि हि हलो यमामिति लोपस्य बहिरंगत्वत्रिपादीस्थत्वाभ्यामसिद्धत्वात्संयोगांतलोपे नैव भाव्यं॥ संयोगांतलोपे गुणः प्रतिषेधो न वा
झलो लोपाद्बहिरंगलक्षणत्वाद्वेति वार्त्तिकोक्तपक्षत्रये प्रथमचरमयोस्तस्य दुर्वारत्वात्॥ तस्मात्समुदाये प्रत्येकं वा संयोगसंज्ञेति पक्षद्वयानुरोधे
न इह समाधानद्वयं व्यवस्थितं इति भाष्यार्थः॥ पूर्वोक्तरीत्या सिच इति समाहारमाश्रित्य तदुपरि सद् इति छेद इति पक्षे तु अस्तिग्रहणं प्रत्या
ख्यानपरं तथापीदं भाष्यं योजयितुं शक्यमिति दिक्॥ एतेन संयोगांतस्य लोप इति सूत्रे अंतग्रहणं शक्यमकर्त्तुं इति पदमंजरीमत्युक्ता॥ प

शा॰कौ॰ स्तद्रूपेपिप्रयोजनस्योक्तत्वात्॥विद्यमानेयत्सिचस्‌इतिपक्षेवायोज्या॥यत्तुसिचःपरत्वादीटिप्राप्तेऽस्तिहिभुवोरीट्प्रतिषेधइतिवार्त्तिकबला
११५ त्निषेधइतिकैश्चिदुक्तं॥तन्न॥तस्यदोषइत्युपक्रमात्स्थानिवद्भावप्रतिषेधपरेणोक्तवार्त्तिकेनास्तेःपरत्वमुपजीव्यप्रवृत्तस्येटोनिवृत्तावपि
सिचप्रसुक्तस्यानिवार्यत्वात्॥अस्थादगादित्यादौउक्तदोषतादवस्थ्याच्च॥तस्मात्प्रागुक्तेष्वेवान्यतमःपंथाःशरणमित्यलंबहुना॥वध्यादे
शस्थानिवत्त्वप्रतिषेधइड्विधिश्चेतिवार्त्तिकांतरं॥अस्यार्थः॥हंतेर्ण्वुलिकृतेबहुलंतण्यन्नवधकगात्रविचक्षणाजिराद्यर्थमितिवार्त्तिकेनसंज्ञात्वंदे
सोर्वधादेशः सचहलंतइतिमत्वावृद्धिरापाद्यते॥हनस्तोचिण्णलोरितितकारश्च॥तयोःकर्त्तव्ययोःस्थानिवद्भावःप्रतिषेध्यः॥तथाआवधिषी
ष्टेत्यादौस्थानिवद्भावेनांगतयाएकाचइतीण्निषेधःप्राप्तः॥तस्मिन्नपिकर्त्तव्येस्थानिवद्भावेनांगतानेतिवाच्यम्॥तदेतदिड्विधिश्चेत्यनेनार्थादु
क्तं॥एतदपिभाष्येप्रत्याख्यातं॥तथाहि॥वधादेशस्तावददंतः॥अन्यथाऽवधीदित्यत्रातोहलादेरितिवृद्धिप्रसंगात्॥एतच्चोत्तरसूत्रेभाष्येस्प
ष्टं॥वधकइतितुनायंण्वुल्॥किंतुहनोवधश्चेत्यौणादिकसूत्रेणक्वुन्प्रत्ययः॥तथाचेहवृद्धितत्वयोःप्रसंगएवनास्ति॥आवधिषीष्टेत्यादौइ
ण्निषेधोपिनभवति॥वध्यादेशेआद्युदात्तनिपातनसामर्थ्यात्॥नचैवंसतिशिष्टेनतेनयदावधिषीष्टेत्यादौप्रत्ययस्वरोबाध्येतेतिवाच्यं॥आ
र्द्धधातुकीयानामादेशानांप्रत्ययविवक्षामात्रेणप्रवृत्त्याप्रत्ययस्वरस्यैवसतिशिष्टत्वादिति॥स्यादेतत्॥इड्विधिश्चेत्यंशेपूर्वपक्षएवशिथिलः
॥तथाहि॥उपदेशेऽनुदात्तादिण्निषिध्यते॥नचवधिस्तथा॥स्थानिवद्भावेनायंतथेतिचेन्न॥अल्विधौस्थानिवद्भावविरहात्॥सत्यं॥नेहस्था
निवद्भावंब्रूमः॥किंतुहंत्युपदेशएववधेरुपदेशः॥कृञुपदेशइवकर्त्ताकर्त्तुमित्यादौकरित्यादीनां॥स्थानिवद्भावस्तुअंगसंज्ञार्थमृग्यतइ राम
त्युक्तमेव॥नन्वेवमपिपरिहारग्रंथोऽसंगतएव॥यदिहिप्रागेवप्रत्ययोत्पत्तेर्वधादेशाभ्युपगमस्तर्हिवधभावात्सीयुटिचिण्वद्भावोविप्रति ११५

षेधेनेतिस्यसिच्सूत्रीयं वार्तिकं विरुध्यते॥ अंतरंगबहिरंगयोर्विप्रतिषेधायोगात्॥ तथाच कर्मणि स्मिसुटि वधिषीष्टेत्येकमेवरूपं स्यात्॥ इष्य
ते तु घानिषीष्टेति द्वितीयमपि॥ अत्रोच्यते॥ वार्तिकमते आर्द्धधातुके इत्यस्य विषयसप्तमीत्वेपि लिङ्लुङीत्यादीनां परसप्तमीत्वाभ्युपगमेन॰
विप्रतिषेधः संभवत्येव॥ अतएव हाद्युदात्तनिपातनासंभवादिड्विधिश्चेत्युपसंख्यातं॥ भाष्यकाराणां त्वयमाशयः॥ आर्द्धधातुके इत्यिवल्लिङि
इत्यादिरपि विषयसप्तमी एव॥ तथाचाद्युदात्तनिपातनेनैवोपपत्तौ इड्विधिश्चेति न कर्त्तव्यमेव॥ घानिषीष्टेति कथं सिध्येदिति परमवशिष्यते॥
तत्रेदमुत्तरं॥ प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भाव इति॥ एतच्च स्यसिच्सूत्रे कैयटेन स्पष्टमुक्तं॥ तस्माद्वार्तिकमते विप्रतिषेधाच्चिण्वद्भावः॥ भा
ष्यमते तु प्रतिपदोक्तत्वादिति विवेकः॥ एतेनैकाच उपदेश इति सूत्रे प्यार्द्धधातुकीयाः सामान्येन भवंति इत्यादि भाष्यग्रंथा व्याख्याताः॥ यत्तु त
त्रैव कैयटेनोक्तं विप्रतिषेधे उपपत्तिर्भविष्यतीति॥ तत्तु प्रागुक्तोपपत्तिरेवास्मत्तेऽन्येत्येवंपरं॥ स्यादेतत्॥ प्रतिपदविधित्वमिह किं विवक्षितं॥ अनवका
शत्वं वा साक्षादुपादानमात्रं वा॥ नाद्यः॥ स्यसिच्सूत्रे हन्ग्रहणस्य प्रघानिष्यत इत्यादौ लब्धावकाशत्वात्॥ तंत्रत्यस्य सीयुड्ग्रहणस्य तु का॰
रिषीष्टेत्यादौ कृतार्थत्वात्॥ नचाजंतादीनां चतुर्णां स्यादिचतुष्कसंबंधे अस्वरितत्वाच्च यथासंख्याभावे हंतेः सीयुटीति योंशस्तस्यानर्थक्यमेव॥
अंतरंगत्वाद्धिवधभावे कृते तस्य स्थानिवत्त्वेन हंतिग्रहणात्सीयुटि चिण्वदिटि कृते णयल्लोपाविपडिति पूर्वविप्रतिषेधेनाल्लोपे सति वधिषीष्टेत्येव
रूपं स्यादिति वाच्यं॥ अंतरंगेण वधिनापहारे न्याय्ये सति असंभवादेव हंतेः सीयुटा समं संबंधायोगात्॥ संभवे व्यभिचारे च स्याद्धि शेषणमर्थ
वत् इति न्यायात्॥ अतएव भस्यादिसूत्रे आतःस्थाने इत्येतत्स्वशब्दस्यैव विशेषणं न तु भस्यादीनामिति वक्ष्यते॥ तथा नित्यं क्रीडाजीविकयो
रित्यत्र क्रीडायां तृचोः संभवादकेनैव तदन्वय इति वक्ष्यते॥ नांत्यः॥ वधादेशेपि हनो वध लिङीति साक्षादुपादानस्याविशिष्टत्वात्॥ अंतरं

गत्वस्याधिकत्वाच्चेति चेत्॥ अत्रोच्यते॥ चिण्वदिट् चेति चकारस्यानुक्तसमुच्चयार्थत्वेन व्याख्यानाद्धन्तेरपि परस्य सीयुटश्चिण्वद्भावो विधीय
ते॥ तस्य चानर्थकत्वमेव प्रतिपदविधित्वं॥ अनुक्तसमुच्चयार्थत्वं चास्य भाष्यकार एव वक्ष्यति॥ यं भगवान्कृतवांस्तु तदर्थमिति॥ अत एव वहि
आभात्सूत्रप्रत्याख्यानपक्षे कृतेपीटि णिलोपः सिद्ध्यति॥ सूत्रारंभे परं इट् चासिद्धस्तेन मे लुप्यते णिरिति वक्ष्यमाणं बोध्यम्॥ यद्वा लिङ्ङाशिति
सामान्यं सीयुटीति विशेषः॥ हन्तेरिति त्वभयत्राविशिष्टं॥ तथा चापवादत्वमेव चिण्वदिट इति नास्त्यसंभवः॥ येन हन्तेः सीयुडादीनां विघातः॥
तथ्या च वैकेयूटोक्तं प्रतिपदविधित्वमपि सम्यगेव॥ युक्तं चैतत्॥ यदि त्वसंभवः तर्हि चेनापि असंभविनो विधानायोगेन प्रागुक्तपक्षस्य दुर्बलत्वात्
॥ अथवा वक्ष्यमाणनिष्कर्षरीत्यांतरंगं बलीय इत्यस्यासिद्धं बहिरंगमित्यनेन प्रत्याख्यानात्तस्य च कृति तु ग्रहणेनानित्यत्वाल्लुस्यानुरोधेऽमे
हस्त्यागाद्युक्तो विप्रतिषेधः॥ अथवा लिङीति परसप्तम्येवास्तु॥ परत्वाच्च चिण्वदिट्॥ आद्युदात्तनिपातनं तु मास्तु॥ न चैवं वधिषीष्टेत्यत्रेण् नि
षेधापत्तिः कर्त्तेत्यादाविवेति वाच्यं॥ वधेर्हि द्वावुपदेशौ॥ हन्त्युपदेशो वध्युपदेशश्चेति एकाच इति सूत्रे भाष्य एव स्पष्टं॥ तथा च वध्युपदेशोऽने
कच्त्वादिण् निषेधो न भविष्यति॥ एकेति विशेषणसामर्थ्याद्धि अनेकाच्कोपदेशो व्यावर्त्यते॥ नन्वच इत्युक्तेऽजंतस्यैव स्यात्॥ मैवं॥ पचादी
नामनुदात्तत्वस्यैवापत्तेः॥ अत एकत्वविवक्षया अच इत्यस्य एकोच् तद्वत इत्यर्थे लब्धे एकग्रहणसामर्थ्यादुक्तार्थलाभः॥ न च यत्रैका
ज्ग्रहणमिति परिभाषाप्रवृत्तये एकग्रहणमित्युक्तं॥ शब्दविशेषं अनादृत्य एकाच इत्यर्थमेवाश्रित्य परिभाषाप्रवृत्तेः सुवचत्वात्॥ न चैव
मिहैव विशेषणसामर्थ्ये श्तिपा शपेत्यादिपरिभाषाज्ञापकत्वं न स्यादिति वाच्यं॥ शीङः सार्वधातुके गुणः दीङो युडचीत्यादिसानुबंधनि
र्देशानामेव तज्ज्ञापकत्वसंभवात्॥ तदेवं सर्वथापि वधेः परस्येडस्त्येवेति स्थितं॥ अत एवानिड्कारिकासु व्याघ्रभूतिना अदंतपर्युदासः कृ

तः ॥ अदंतमूर्दंतमृतांचरुङ्क् वृत्राविस्यादिना ॥ पत्तुकौमुद्यां भावकर्मलकारव्युत्पादनावसरे घानिषीष्टेत्युदाहृत्य पक्षे वधादेश इत्युक्तं तत्तूक्त
रीत्या भाष्यमते वार्त्तिकमते वा उभयथापि निर्बाधमेव ॥ एवं स्थिते पक्षे वधादेश इति प्रतीकमुपादाय इदं तु सिद्धांतकृद्भाष्यादौ वधादेशानभ्यु
पगमादिति वदन् प्रमादकारः प्रत्युत स्वस्यैव कलंकमाविरकरोत् ॥ यदपि तेन स्वकीयभ्रमबीजभूतं वार्त्तिकमुदाहृतं हनिणिङ्गादेशप्रतिषेधस्य
तिनैतद्धि ङि प्राप्तस्य निषेधपरं किंतु स्यादिष्वपि विण्वदित्यतिदेशेन प्राप्तस्य ॥ अत एवांगाधिकारात् अंगस्यैवातिदेशो नतु हनिणिङ्गादेशा
नां ॥ अनंगत्वादिति अंगाधिकारबलेनैव भाष्ये तद्वार्त्तिकं प्रत्याख्यातं ॥ यद्यप्येतत्सिद्धांतग्रंथेष्वविवादमेव तथाप्यधस्येवाधलग्नस्येति न्या
येन प्रसादग्रंथं दृष्ट्वा बाला मा भ्राम्येयुरित्येतदर्थमस्माभिः स्फुटीकृतं ॥ प्रकृतमनुसरामः ॥ आकारांतान्नुक्षुकृप्रतिषेधः ॥ लोडादेशे शाभा
वजभावधित्वहिलोपेत्वप्रतिषेधः ॥ त्रपादेशे स्त्रनप्रतिषेधः ॥ आम्विधौ च ॥ स्वरे च वस्वादेशे ॥ एतान्यपि पंच वार्त्तिकानि प्रत्याख्यातानि ॥ त
थाहि ॥ विलापयति भापयति इत्यत्र नुक्षुकौ न भविष्यतः ॥ लीई भीई इति ईकारप्रश्लेषात् ॥ ह्रस्वप्रश्लेषाद्वा ॥ तथा ॥ शिष्टात् हतात् भिंतात्
कुरुतात् स्तात् ॥ इत्यत्र परत्वात्तातङि कृते ॥ शाहौ हं वेर्जः ॥ हुझल्भ्यो हेर्धिः ॥ उतश्च प्रत्ययादसंयोगपूर्वात् ॥ ध्वसोरेद्धावित्येते विधयो य
द्यपि प्राप्नुवंति तातङः स्थानिवद्भावेन हि ग्रहणेन ग्रहणात् ॥ तथापि सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न्यायान्न भवंति ॥ एवं
पुष्णीतादित्यत्र हलः श्नः शानज्झौ इति न भवति ॥ उभयोर्नित्ययोः परत्वात्तातङ्प्रवृत्तेः ॥ तथा सिसृणामित्यत्र परत्वान्निसृभावे न बाधितत्वे
स्त्रयदिति त्रपादेशोपि बाधित एव ॥ एवं च तसृ स्तिष्ठंतीत्यत्र परेण च तसृभावेन च तुरनडुहोरित्याम् बाध्यते ॥ तथा ॥ अशासंत्त्वा विदुषीसस्मि
न्नहन्नित्यत्र विदेः शतुर्वसुरिति वस्वादेशस्य शतृग्रहणेन ग्रहणाच्छतुरनुमो नद्यजादी इति सूत्रेणांतोदात्तत्वं तातपरत्वं उपजीव्यमात्तं

नद्याउदात्तत्वंयस्यैवंविदुषोग्निहोत्रंजुह्वतिइत्यत्रविदुषइत्यत्रषष्ठ्याउदात्तत्वंचनभवति॥अनुमइतिनिषेधात्॥तथाहि॥अविद्यमानउम्य-
स्येतिबहुव्रीहिः॥उमितिचसनाशंसेत्युकारात्प्रभृतिआनुमोमकारात्प्रत्याहारः॥तनादिकृञ्भ्यइत्युकारात्प्रभृतिवा॥तत्रचवसुःसंप्रसारणंवां-
तर्भूतं॥नन्वेवंद्वितीयपक्षेलुनता॥अन्वभवंप्रथमाजानतीगात्इत्यादावपिनिषेधापत्तिः॥तनादिकृञ्भ्यइत्युपक्रमेप्याप्रत्ययस्यापितत्रांतर्भावा-
दितिचेत्॥न॥शतरिपरेश्नाप्रवृत्तावपिशतुरनुमकत्वानपायात्॥नुमागमग्रहणपक्षेपिहिशतुरेवतद्ग्राहित्वंविशेषणंनतुश्नंतस्य॥सुन्वतामुंचते
इत्यादावपिनिषेधापत्तेः॥इदंतुवार्त्तिकंसिद्धान्तेपिस्थितं॥गोःपूर्वणित्वात्वस्वरेषुप्रतिषेधइति॥चित्रग्वग्रमित्यत्रहिसर्वत्रविभाषागोरितिपूर्वरूपं
प्राप्तं॥नोनःपादमितिपाठस्यइकोगुणवृद्धीइतिसूत्रेषाष्ठभाष्येचस्थितत्वेनतद्रीत्यासर्वत्रेतिसूत्रस्यापिपूर्वविधायकत्वौचित्यात्॥कैयटस्त्वा-
कलसूत्रेह्रस्वश्चेतिचकारेणप्रकृत्येत्यनुकृष्यतइतिदर्शनात्प्रकृत्यांतःपादमितिपाठमनुसृत्यवार्त्तिकस्थंपूर्वपदंतस्यासिपूर्वकप्रकृतिभावोप-
लक्षणमितिसूचितवान्॥नचसर्वत्रविभाषेत्यत्रएङःइत्यनुवर्त्याल्विधित्वान्निषेधःसुवचः॥हेचित्रगोअग्रमित्यत्रएवमप्यतिप्रसंगात्॥व-
त्वभस्यान्यत्रआश्रयणं।स्वतएवएङंतत्वात्॥चित्रगुरित्यत्रगोतोणिदितिणित्वंप्राप्तं॥चित्रगुंचित्रगूनित्यत्रतुआगोतोम्शसोरितिषाष्ठवा-
र्त्तिकरीत्याआत्वंप्राप्तं॥अत्रणित्वात्वग्रहणंतुशक्यमकर्त्तुं॥गोतइतितपरकरणसामर्थ्यादेवणित्वात्वाप्रवृत्तेः॥औतोम्इतिपाठस्यैवस्थाप-
यिष्यमाणत्वाच्च।अचिनवमित्यादावतिप्रसंगस्यशसासाहचर्येणापिवारणसंभवात्॥स्वर॥बहुगुमान्।इहह्रस्वनुड्भ्यांमतुविस्तुदात्तं-
तायानगोश्वन्नितिनिषेधःप्राप्तः॥तस्माज्झोःपूर्वस्वरयोरितिपठनीयमितिस्थितं॥एवंचनगोश्वन्नितिसूत्रेवृत्तौयत्पठ्यतेबहुगुनाबहुगुभ्यामि-
त्यादावंतो[illegible]त्तरपदादन्यतरस्यामितिप्राप्तःप्रतिषिध्यतेइति॥तच्चिंत्यं॥भाष्यवार्त्तिकविरुद्धत्वात्॥अचःपरस्मिन्पूर्वविधौ॥परनिमि-

तौ ऊर्व आद्य्याः स्थानिवत्स्यात्स्थानिभूताद्चः पूर्वत्वेन योदृष्टस्तस्य तस्माद्वानिमित्तभूतादि धौ कर्तव्ये ॥ वव्रश्च ॥ इहउरदित्वस्यस्थानिव-
द्भावेन न संप्रसारणइतिनिषेधाहूकारस्य न संप्रसारणं ॥ नचपूर्वसूत्रेण गतार्थता ॥ अल्विधित्वात् ॥ नचपरनिमित्तत्वमसिद्धमिति वाच्यं ॥ अंगासि
द्धमत्यर्थनिमित्तकत्वात् ॥ नचप्रागभ्यासविकारेभ्योंगाधिकार इतिवाच्यं ॥ आसप्तमाध्यायसमाप्तेरिति पक्षस्य सिद्धांतयिष्यमाणत्वात् ॥ पूर्वस्माद्वि
धौ यथा ॥ तन्वंति ॥ तन्वते ॥ इह यणादेशस्यस्थानिवद्भावान्नेट् ॥ तत्रहितन्इत्यंतं निमित्तं ॥ तच्च उकारात्पूर्वमिति ॥ अचईतिकिं ॥ विश्नः ॥ प्रश्नः ॥
द्यूत्वा ॥ स्यूत्वा ॥ अभिगत्य ॥ तथाहि ॥ विश्नः प्रश्नइत्यत्रछकारस्य शकारः परनिमित्तकः तस्यस्थानिवद्भावाच्छेचेतितुक् प्राप्तः ॥ अचइतिवचना
न्न भवति ॥ स्यादेतत् ॥ इहांतरंगत्वात् पूर्वमेवतुका भाव्यं ॥ नचवार्णादांगंबलीयइतिशकारः स्यादितिवाच्यं ॥ यत्रह्येकमेवनिमित्ती कृत्ययुग
पदांगवार्णयोः प्राप्तिस्तत्रवार्णादांगंबलीयः ॥ यथाकरोतेर्लिटिणलिकृअइतिस्थिते गोरित्यत्रसावकाशामचोञ्णितीति वृद्धिं बाधित्वांतरंगत्वा
त्प्राप्तं यणं वृद्धिरेव बाधते ॥ प्रश्नइत्यत्रतु शस्यनङ्निमित्तं ॥ तुकस्तुछः ॥ भिन्नकालाचानयोः प्राप्तिः ॥ ननु यत्रैकस्मिन्विषये युगपच्चप्राप्तिस्तत्रैवे
यंपरीभाषेत्यत्र किंप्रमाणमितिचेत् ॥ धर्मिग्राहकमेवेतिगृहाण ॥ तथाहि ॥ अभ्यासस्यासवर्णेइतिसूत्रे असवर्णग्रहणमस्याः परिभाषायाः ज्ञाप
कं ॥ एतच्चषष्ठेप्रथमान्हिकांते भाष्येस्थितं ॥ तद्धिईषतुःऊषतुरित्यादिवारणाय नोपयुज्यते ॥ अंतरंगेणसवर्णदीर्घेणतत्रेयङ्उवङोर्बाध्यत्वात् ॥ तौ
हि अंगसंज्ञामभ्याससंज्ञांचापेक्षमाणौ बहिरंगौ ॥ नचैवमप्यपवादत्वात्तावेवस्यातांइतिवाच्यं ॥ येननाप्राप्तिन्यायेन तयोर्यणं प्रत्येवापवादत्वात्
॥ नन्वियेयेत्यादौ प्रवृत्तस्यापिगुणस्यइयायेत्यत्र प्रवृत्तायाश्चवृद्धेश्च द्विर्वचनेचीतिरूपातिदेशेनापहारे द्वित्वे चकृतेसवर्णदीर्घस्यापि प्राप्त्यासोपियेन
नाप्राप्तिन्यायेनइयङुवङ्भ्यांबाध्येतेतिचेत् ॥ तर्हिकृतेप्यसवर्णग्रहणेनिर्विषयतापत्तिः ॥ असवर्णग्रहणसामर्थ्यात्पुनर्गुणवृद्धी सवर्णदीर्घबा

धित्वास्यातामितिचेत्॥ न॥ इयर्तीत्यादौ चरितार्थत्वात्॥ नन्वेवं सति असवर्णग्रहणं विनापि येन नाप्राप्तिन्यायेन इयर्तीति यणो बाधने सिद्धे तत्र कुर्या
दिति चेत्॥ तर्हि सामर्थ्यादियेषेत्यादौ गुणादिप्रवृत्तिरिति फलितोर्थः॥ तथा च पुनरपि असवर्णग्रहणं व्यर्थमेव॥ अर्त्तेश्चेति सूत्रयित्वा ण्यो रिति
चानुवर्त्त्य अर्त्तेरिकारस्य लाघवादियङिति विधेये अभ्यासस्येत्युक्तिसामर्थ्ये नापि इयेषेत्यादेः सुसाधत्वात्॥ नन्वर्त्तेरिति स्थिते पानिर्देशे अरियर्त्तीति
यङ्लुकि यङ् न स्यादिति चेत्॥ न ह्नुरित्येवोच्यतां॥ इणो यणिति साहचर्याच्च धातुग्रहणं भविष्यति॥ अंगेन उर्विशेषणाद्धा॥ तेन अत्तौर मति कौतैरत्य
र्तृभिरित्यादौ नातिप्रसंगः॥ नन्वेवमपि इयेषेत्यत्रेव ईषतुरित्यत्रापि इयङ् स्यादिति चेत्॥ न॥ अंतरंगेण दीर्घेण बाध इत्युक्तत्वात्॥ न चैवमि
येषेत्यत्रापि तुल्यमिति वाच्यं॥ तत्र गुणसंभावनायां विनाशोन्मुखेन निमित्तेन दीर्घाप्रवर्त्तनात्॥ वक्ष्यते हि सम र्थानां प्रथमादिति सूत्रे सुमर्थग्र
हणमकृतव्यूहाः पाणिनीया इति परिभाषां ज्ञापयतीति॥ अत एव सौत्थिति वैक्षमाणिरित्यत्र भाविन्या आदिवृद्ध्या अंतरंगस्यापि सवर्णदीर्घस्य नि
मित्तविघातादप्रवृत्तिर्माभूदिति सौत्थितिर्वैयीक्षमाणिरित्यनिष्टरूपं वारयितुं समर्थग्रहणं। परिनिष्ठितत्वं च तत्र समर्थशब्दस्यार्थः॥ कृतमपि
निवर्त्तयंतीति वा ज्ञाप्यतां॥ फलं तु तुल्यमेव॥ गौरवं परमधिकं इति दिक्॥ ततश्च इयेषेत्यादौ गुणे कृते सवर्णदीर्घप्राप्तौ यणि प्राप्ते तस्यैवेयङ् पवा
दः॥ ईषतुरित्यादौ अंतरंगत्वात् सवर्णदीर्घेण बाध्यत इति असवर्णग्रहणं अनर्थकं सत् ज्ञापकमेवोक्तपरिभाषायाः॥ ननु गुणेन कथं निमित्तवि
घातः अचः परस्मिन्निति स्थानिवत्त्वेन सवर्णदीर्घप्राप्तेस्तदवस्थत्वादिति चेन्न। दीर्घस्य पूर्वपरविधित्वेन तत्र तस्मिन्कर्त्तव्ये स्थानिवत्त्वाभावात्॥
पूर्वस्यैवायं विधौ सः॥ न तु पूर्वपरयोरिति विधिग्रहणव्यावर्त्त्य निरूपणावसरे उपपादयिष्यमाणत्वात्॥ सवर्णे यो विधिः सोपि सवर्णस्य विधिरिति
तत्र कर्त्तव्ये पूर्वत्रासिद्धेति निषेधाच्च॥ एतेनासवर्णग्रहणे कृते स्थानिवद्भावेनेयेषेत्यत्रेयङ् न स्यात्॥ न चासवर्णग्रहणसामर्थ्याच्छ्रोतासवर्णमा

श्रिश्रियङुवङ्भवततां प्रतीतीति पत्ववदिति वाच्यं ॥ तथा सति परिभाषाज्ञापनासंभवात् ॥ इयतीत्येकप्रयोजनाय हि उश्चेति वक्तव्ये ऽभ्यासस्येति वचन
सामर्थ्यादेवं ताविय ङुवङौ णल्लीव अनुसिद्दीर्घमपि अविशेषाद्बाधेयातामिति तद्व्यावृत्त्यै वासवर्णग्रहणस्य चरितार्थत्वादिति प्रत्युक्तं ॥ सवर्णपरेन
भवतीति प्रसज्यप्रतिषेधाश्रयणात् ॥ तत्र चोक्तरीत्यास्थानि— वद्भावे प्रतिषिद्धे इयषेत्यादौ यण एव प्राप्त्या तदपवादत्वेन निर्णीतयोरियङुवङोरं
तरंगेण दीर्घेण ईषतुरित्यादौ बाधसंभवात् ॥ सा च ज्ञाप्यमाना समानाश्रये युगपत्प्राप्तौ चेत्येवं रूपविशेषविषयैव लक्ष्यानुरोधेनेति प्राचां भावः ॥
अत एव स्योन इति सिवेरौणादिकेन प्रत्ययेव लोपापवादे ऊठि च कृते सिऊन इति स्थितेंतरंगत्वाद्यण् न त्वांगो घुपधागुणः ॥ व्याश्रयत्वात् ॥
न चोठं बाधित्वा परत्वाद्गुणः शंक्यः ॥ लघुभूतामिग्लक्षणामुपधामंगं चापेक्षमाणस्य गुणस्य बह्वपेक्षत्वेन बहिरंगत्वात् । एतन्न्यायेन विधिरि
ति सूत्रे कैयटे स्पष्टं ॥ वृत्तिकारोप्येवं ॥ प्रकृतमनुसरामः ॥ उक्तरीत्या तु किकृते शादेशः ॥ तथा च विश्नप्रश्नयोस्तकृ श्रूयेतैवेति तन्निवृत्तौ य
त्नांतरमास्थेयं ॥ अचइत्यस्य प्रत्युदाहरणांतरं चेति चेत् ॥ सत्यं ॥ अस्त्येव यत्नांतरं ॥ च्छ्वोरिति सतुक्कनिर्देशस्य षाष्ठभाष्यादौ स्थितत्वात् ॥ सं
देतत् ॥ अकृतव्यूहाः पाणिनीयाः कृतं वा निवर्तयंतीति परिभाषाभ्यां विश्न प्रश्नयोः सिद्धौ किं सतुक्कनिर्देशेन ॥ न चोक्तपरिभाषयोरनित्यत्वज्ञाप
नं तत्फलं ॥ तेन चाखवाप्रिनेतिसिद्धं ॥ अन्यथा यस्य हल इति भाविनं लोपमालोच्य प्रागेवात्वं न क्रियते ॥ कृतं वा निवर्त्येत न त्व कास्ति तेकोन्नि भव
क्तानित्यादौ चाकच् न श्रूयेतेति वाच्यं ॥ अदोजग्धिरिति सूत्रे ल्यब्ग्रहणस्य प्रत्ययोत्तरपदयोरिति सूत्रे उत्तरपदग्रहणस्य च क्रमेण ल्यब्वुलुको
रंतरंगबाधकताज्ञापनार्थत्वेन यासिद्धांतग्रंथेषु प्रसिद्धस्यैवोक्तपरिभाषाद्वयानित्यत्वज्ञापकत्वसंभवात् ॥ अथ निर्युक्तिकः सिद्धांतप्रवादेन स्वरे
यः ल्यबुत्तरपदयोरप्राप्तविध्यर्थत्वादकृतव्यूहपरिभाषावशात् अप्राप्तेः स्पष्टत्वादिति चेत् ॥ तर्हि माभूतां — ल्यबुत्तरपदग्रहावपि । अकृत

प.शे. व्यूहपरिभाषया अनित्यत्वे प्रकृतिभत्वापत्तिवचनस एव ज्ञापकत्वसंभवात्॥ मास्तु वा तदपि॥ केचित्तु सोचिलोपे इत्यादिनिर्देश[illegible]त्
११९ ॥ तथाहि॥ कइसउइति इदुतोः पदांतरप्रयुक्ते यणादेशे कृते आद्गुणस्य निमित्तविघातात् कृतव्यूहा इति न्यायेन गुणो न स्यात्॥ नचासिद्धं बहि
रंगे अंतरंगंबलीयइति परिभाषाभ्यां निरस्तारः॥ रसइ इइदमित्यादौ कृतेपि दीर्घनिमित्ताविघातेन तत्र पचावेदं इत्यादौ च सावकाशयोर्हि अपि प
रिभाषयोर्येन नाप्राप्तिन्यायेनाकृतव्यूहपरिभाषाबाध्यत्वात्॥ अन्यथोपेयुषो जग्मुष इत्याद्यपि न सिध्येत्॥ एवं विभ्न इत्यत्र गुणनिषेधं कुर्वता पाणिनिना च
ङ्कोङित्वमेवाकृतव्यूहपरिभाषां ज्ञापयेत्॥ समर्थानामिति च मास्तु॥ अत एव समर्थः पदविधिरिति सूत्रे कर्त्तव्यं च क्रियते समर्थानां प्रथमादिति भा
ष्ये संगच्छते। तस्मात्सत्यापत्तिसमर्थत्वत्यबुत्तरपदग्रहाः॥ सतुक्कत्वं च पंचापि न कार्याणीत्यवस्थितं॥ अत्रोच्यते। वार्णादांगं बलीय इति परिभा
षाया अनित्यत्वं ज्ञापयितुं सतुक्कग्रहः। तथाहि॥ समानाश्रये इति प्राचां ग्रंथानुसृत्य प्रागुक्तं न तु क्षोदक्षमं॥ व्याश्रयेष्वपि बहुधा तत्स्वीकारात्॥ न
चात्वैकयटेनासिद्धवत्सूत्रेश्नुनइत्यत्र वार्णादांगबलीयस्त्वात् पूर्वैकादेशं बाधित्वा श्नलोप उक्तः॥ नच तत्रोभयोरकारांशे समानाश्रयत्वं अस्त्येवेति वा
च्यं॥ विभ्नः स्योन इत्यत्रापि ढकारे कारांशसाम्येन व्याश्रयत्वोपन्यासविरोधात्॥ किंच। अंगस्य। आच्छीनद्योः॥ शीङो रुट्॥ अचः परस्मिन्॥ येनविधि
॥ उपेयिवाननाश्वान्॥ आङ्जादीनां॥ अजादेर्द्वितीयस्य॥ अदस औ सुलोपश्च॥ सार्वधातुकमपित्॥ उपसर्गाद्ध्रस्व ऊहतेः॥ स्नुक्रमोरनात्मनेपद
इत्यादि सूत्रेषु कैयटहरदत्तादिसकलग्रंथाः समानाश्रयतां क्वचिदादृत्य क्वचिदनादृत्य प्रवृत्ता इति स्पष्टमेव सिद्धांतपरिशीलनशालिनां॥ षाष्ठं भाष्ये
प्रथमाह्निकांते वार्णादांगमिति परिभाषायाः प्रयोजनान्यपि व्याश्रयसाधारणान्येव॥ तस्माद्बहिरंगपरिभाषाकृतव्यूहपरिभाषयोरिव वार्णादांगमि राम
त्यस्या अपि अनित्यत्वमेव शरणं॥ तच्च सतुक्कग्रहेण ज्ञाप्यते॥ नच परस्मिन्पूर्वविधावपि स्थानिवद्भावेन तुकं वारयितुं सः॥ अन्यार्थतया वश्य ११९

कर्तर्येनाच इत्यनेन गतार्थत्वात् ॥ एवं चान्यार्थे क्रियमाणं सनुक्ग्रहणं अकृतव्यूहा इत्यस्याप्यनित्यतां कामं ज्ञापयतु ॥ प्रकृतसूत्रे विभ्र इति प्रत्युदा
हरणं तु यथाश्रुतरीत्या ॥ एवं स्थिते नञो ङित्त्वस्य गुणनिषेधे चरितार्थत्वात् अकृतव्यूहपरिभाषायां ज्ञापकांतरमास्थेयं ॥ तच्च प्रत्ययवचनं उत्तरपदग्र
हणं सम्मर्थग्रहणं वा ॥ तेभ्यो लघुत्वात्कल्यब्ग्रहणमेवेति तु निष्कर्षः ॥ आचारक्विबंतार्थं प्रत्ययग्रहणं नवममादिबाधनार्थं अप्राप्तावध्यर्धचोत्तरपदग्र
हणमिति हि स्थास्यमिमपर्यंतानुवृत्तिरेव ज्ञापिकेति हरदत्तोक्तेः सा तु अंतरंगस्यापवादबाध्यत्वाद्युक्तेति समर्थमेव स्यते ॥ एवं च पामादयंतर्गणसूत्रे विष्व
गित्युत्तरपदलोपश्चाकृतसंधेरित्यत्राकृतसंधिग्रहणमप्यनावश्यकं ॥ वीक्षमाणादिभ्यः कृतसंधिभ्य एव तद्धिता इति स्पष्टीकरणार्थं वास्तु ॥ एवं स्त्रि
याः पुंवदिति सूत्रे न त्वेषा परिभाषा सर्वत्राश्रीयते इति कैयटः समीचीन एव ॥ आभात्सूत्रस्थकैयटस्तु निमित्तापायपरिभाषाभाष्यासंमतेत्येवं रूप
आपाततः । क्लोः शूठ्सूत्रे न हीदं वचनं नापि न्याय इत्येवं रूपो हरदत्तग्रंथोऽप्यापातत एव ॥ समर्थानामिति सूत्रे परिभाषापरिष्कारस्य स्वयमेव कृतत्वात्
॥ अथ वा उक्तपरिभाषयोर्मध्ये कृतव्यूहपरिभाषैव लाघवादादर्तव्या न तु कृतमपीति ॥ गौरवादित्येवं परतया कथंचित् ग्रंथो नेयः ॥ फलं तु निर्विवादं
॥ ज्ञापकांतराणामपि सुलभत्वात् ॥ तद्यथा ॥ च्वाविति सूत्रं दीर्घं विदधदिह ज्ञापकं ॥ अंतरंगे हि यणि कृते प्रतीचइत्यादौ कथं दीर्घस्य विषयलाभः । लौ
किकन्यायो षीहस्तु वचः ॥ लोके हि निमित्तमुभयविधमपि दृष्टं ॥ कार्यस्य स्थितौ नियामकं तदनियामकं च ॥ आद्यं यथा न्यायनये पेक्षा बुद्धि[illegible]
शेन द्वित्वनाशाभ्युपगमात् ॥ तथा वेदांतनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं उपाधेः स्फटिकलौहित्यादिस्थितिनियामकत्वं च प्रसिद्धमेव ॥
द्वितीयं तु दंडादि ॥ तन्नाशेऽपि घटनाशादर्शनात् ॥ एवं स्थितेऽस्या अनुरोधेनेहापि द्वैविध्यं कथं न भवेत् ॥ तथा च प्रत्ययलक्षणांतरेण निमित्तं विकल्प्यते
नाभाव नित्य इत्यस्य क्वचिदाश्रयणं क्वचिन्नेत्येवं रूपे सिद्धांते लौकिकद्वैविध्यव्यवहार उपष्टंभकत्वेनोदाहृतः कैयटादिभिः ॥ वालिसुग्रीवयोर्युध्यमा

नयोर्भं॥ एवं तावालिनि हतेपिन सुग्रीवस्य वालितः प्राबल्यं व्यवहरंति॥ भगवत्सहायैः पांडवैर्जये लब्धेपि पांडवानां प्राबल्यं व्यवहरंतिचेतीतिदिक्॥ स्यादेत
त्॥ यदि छ्वोरितिसतुक्कनिर्देशस्तर्हिराल्लोपेतस्यैवानुवृत्तिः स्यात्॥ तथा च हूः हुरौ हुर इत्यत्र लोपो न स्यात्॥ वितुक्कत्वात्॥ न चानुवृत्तिसामर्थ्यात्तुकं विनै
व तत्र गृह्यतां॥ गाधो हिंसायां इत्यत्रात इत्यनुवृत्तेपि अवर्ण इवेति वाच्यम्॥ वकारमात्रान्वयस्यापि सुवचत्वात्॥ यत्तु सतुक्कवितुक्कौ द्वावपीह निर्दिश्येते
ते इति॥ तन्न॥ समाहारद्वंद्वे एकवचनापत्तेः इतरेतरयोगे बहुवचनापत्तेः॥ छकारयोः समासं कृत्वा वकारेणेतरेतरयोगद्वंद्वं करिष्याम इति चेत्॥ तर्हि समाहा
रे इव प्रसंगात्॥ यथासंख्यासंभवापत्तेश्च॥ अत्रोच्यते॥ छकारवकारयोः समाहारद्वंद्वे कृते छकारांतरस्य द्वंद्वांतरमस्तु॥ आदेशेपि शद्वयप्रश्लेषः॥ तथा
चांतरतम्याद्यथासंख्यन्यायाच्चेष्टं सिद्धं॥ अस्तु वा सतुक्कस्यैव निर्देशः॥ राल्लोपे तु सामर्थ्यात्केवलस्यान्वयः॥ न ध्याख्येति नत्वनिषेधाल्लिंगाच्च॥ मूर्त्ते
इत्यत्र हि छलोपं विना नत्वप्राप्तिरेव न संभवति॥ एवं मूर्त्तौ घनः इव मूर्त्तिस्पर्शयोः श्य इत्यादिनिर्देशा अपि संगच्छंते इति दिक्॥ अस्मिन्पक्षे अच इत्य
स्य प्रत्युदाहरणं तु द्यूत्वा स्यूत्वेति॥ अत्र हि ऊठः स्थानिवत्त्वाद्यण् न स्यात्॥ ननु स्वाश्रयमच्त्वं भविष्यति॥ अतिदेशानां स्वाश्रयकार्यानिवर्तकत्वा
दिति चेत्॥ न॥ विधिग्रहणप्रयोजनकथनावसरे इह सूत्रे स्वाश्रयनिवृत्तेः सिद्धांतयिष्यमाणत्वात्॥ नन्वेवमपि योऽत्र यण्विधावाश्रीयते अच् नासा
वादेशः॥ यस्त्वादेशः ऊडिति समुदायः नासौ यण्विधौ निमित्तमिति चेत्॥ न॥ अनुबंधानामनेकांततया एकांतत्वे प्युच्चरितप्रध्वंसितया उकार
स्यैवादेशत्वात्॥ वनिनिर्देशादभावोपि अतिदिश्यते इति वक्ष्यमाणत्वाच्च॥ एवमभिगत्येत्यपि प्रत्युदाहरणं॥ अत्र ह्यनुनासिकलोपः परनिमित्त
कः तस्य स्थानिवद्भावाद्ध्रस्वस्य पिति कृतीति तुङ् न प्राप्नोति॥ अच इति किमर्थं॥ युवजानिः॥ अत्र जायाया निङः स्थानिवद्भावाद्यलोपो न प्रा
प्नोति स्वाश्रयनिवृत्तिरभावातिदेशश्च वक्ष्यत इत्युक्तमेव॥ किंच॥ व्याघ्रस्येव पादावस्य व्याघ्रपात् पादस्य लोपोऽहस्त्यादिभ्यः इत्यपरनिमित्तको

लोपः ततो गर्गादित्वाद्यञ् ॥ वैयाघ्रपद्यः ॥ लोपस्य स्थानिवद्भावात्पादः पदिति पद्भावो न स्यात् ॥ वचनसामर्थ्याद्भविष्यतीति चेत् पादे
नेत्यादौ अतिप्रसंगः ॥ किंच ॥ पादःशतस्येति लोपवचनसामर्थ्यात्स्थानिवद्भावाप्रवृत्तौ सत्यां हि पदिकेत्यादौ पद्भाववचनं चरितार्थ
मिति कृतस्य सामर्थ्यं ॥ परस्मिन्निति किं ते तु वैयाघ्रपद्य इत्यादौ पद्भावस्य चरितार्थतया पादे नेत्यादौ एकादेशस्य स्थानिवद्भावात्पद्भावो ने
ति स्थितं ॥ नन्वेकादेशो नाचः किंत्वचोः तत्कथं स्थानिवत्त्वमिति चेत् न ॥ वर्णनिर्देशे जातिग्रहणात् ॥ अत एव श्वापसी ॥ गौमतो ॥ चातुरौ ॥
आनडुहीत्यादि सिध्यति ॥ श्रेयसोपत्यमित्यण् ॥ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामित्याकारादेशः ॥ ततश्चतुर्भ्यो ण्यणंतेभ्य
औमत्वपे एकादेशस्यादिवत्वात् मास्तोनुमामौ न भवतः ॥ तथा उदवाहे ॥ उदकं वहतीति कर्मण्यण् ॥ संज्ञायामुदभावः ॥ ततो ङीप् एकादेश-
स्यादिवत्वाद्भत्वे सति प्राप्तो वाह ऊठ् न भवति ॥ ॥ पूर्वविधाविति किं ॥ नैधेयः ॥ निपूर्वाद्धाञ उपसर्गे घोः किः ॥ आतो लोपः ॥ द्व्यचः ॥ इतश्चानि
ञः ॥ इति ढक् ॥ आकारलोपस्य स्थानिवत्त्वे तु सति त्र्यच्कत्वव्यपदेशेन द्व्यच्कत्वं विरुद्धत्वाद्बाध्येत ॥ न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते ॥ नन्वे
वमपि विधिग्रहणं मास्तु ॥ पूर्वस्येति षष्ठ्या कार्ये कर्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेत् ॥ न ॥ पूर्वस्य विधिः ॥ पूर्वस्माद्विधिरिति समास
द्वयलाभार्थं विधिग्रहणात् ॥ पंचमीसमासे उदाहरणं तु तन्वंतीत्युक्तमेव ॥ स्यादेतत् ॥ यदि पंचमीसमासोपीष्टस्तर्हि बिगणय्येत्यादि न सि-
ध्यति ॥ ल्यपि लघुपूर्वादित्ययादेशे कर्तव्ये अल्लोपस्य स्थानिवद्भावात् ॥ न चारंभसामर्थ्यं ॥ अनुगमय्येत्यादौ मित्सु चरितार्थत्वात् ॥
अत्रोच्यते ॥ पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यं ॥ निष्ठायां सेटीति ज्ञापकात् ॥ तथा हि ॥ तत्र सेटीति पदं न तावद्व्यावर्त्यं ॥ णिजंतात्तद
संभवात् ॥ ननु संज्ञपितः पशुरित्यत्र यस्य विभाषेति इण्निषेधः संभवत्येव ॥ सनीवंतेति विकल्पितेट्कत्वादिति चेत् ॥ न ॥ यस्य विभाषेत्यत्रै-

कान्वइत्यनुवृत्तेः॥ अन्यथादरिद्रितइती एनस्यात् तस्मात्कालावधारणार्थं सेड्ग्रहणं॥ इटि कृते णिल्लोपो न तु तत्तः प्रागिति॥ अन्यथा कांस्यिमित्सा
दौ णिलोपे कृते एकाच उपदेश इतीण्निषेधः स्यादिति सेटीति वदतो भावः॥ पूर्वस्माद्धि धौ स्थानिवत्त्वे तु न प्राप्त एव निषेधः॥ णिचाव्यवधानात्॥ त-
स्मात्सेड्ग्रहणमनित्यमांज्ञापयतीति स्थितम्॥ तथा चाष्टमे अन्त इति सूत्रे हरदत्तः॥ अनित्यः पूर्वस्माद्धि धौ स्थानिवद्भावः॥ निष्ठायां सेटीति सेड्
ग्रहणात्॥ एतच्च स्थानिवद्भावप्रकरण एव व्याख्यातमिति॥ यद्यपीह प्रकरणे स्वयं न व्याख्यातं तथापि न्यासकारादिभिर्व्याख्यातमिति तद्ग्रं
थस्यार्थः लेखकप्रमादाद्ग्रंथभ्रंशो वा कल्प्यः॥ एतेन ओः पुयणीति सूत्रे यदत्र वक्तव्यं तद्द्विर्वचने चीत्यत्रैवोक्तमिति अपि हरदत्तग्रंथो व्याख्यातः
॥ तथा च वक्ष्यैकाच् सूत्रे कैय्यटः॥ पूर्वस्मादपि विधावित्येतदनित्यमिति॥ माधवाचार्यास्तु॥ परिव्रढय्य गत इत्यत्रासिद्धतामुद्भाव्य व्याश्र
यत्वात्तां परित्यज्य पूर्वस्मादपीति स्थानिवत्त्वमाशंक्य प्रवेभिदय्य प्रस्तनय्येत्यादिभाष्योदाहरणबलेन समादधुः॥ यद्वा॥ ल्यपि लघुपूर्वादि
त्यनेन सामर्थ्यादन्यपदार्थस्य वर्णस्यापेक्षायां वर्णग्रहणे जातिग्रहणाद्व्यवधानेपि न दोष इति॥ केचित्तु पंचमीसमासइह मास्तु॥ प्रयोजना
भावात्॥ तथाहि॥ बेभिदिता॥ माथितिकः॥ अपीपचन् इति प्रयोजनत्रयं भाष्ये उक्तं॥ तत्र बेभिदितेति तावत् अन्यथासिद्धं॥ एकाच उपदेश
इत्यत्र विहितविशेषणाश्रयणात्॥ माथितिके पि मथितं पण्यमस्येति विग्रहे न तदस्य पण्यमिति ठकि तस्येकादेशेप स्येति चेत्यल्लोपे कृते इ-
सुसुक्तांतादिति कादेशो न भविष्यति॥ अनल्विधाविति निषेधेन स्थानिवद्भावासंभवात्॥ ठस्येक इत्यत्र स्थान्यादेशयोरकारस्य उच्चारणा
र्थतया वर्णमात्रस्थानित्वात्॥ अस्तु वा स्थान्यादेशयोरकारस्य विवक्षा॥ न चैवमनल्विधित्वात्का देशप्रसंगः॥ सन्निपातपरिभाषया समाधा
नात्॥ न चापीपचन्नित्युदाहरणं॥ इह हि अंते रकारस्य चङकारस्य चातो गुण इति पररूपत्वे तस्य परं प्रत्यादिवद्भावात् ञ्णिग्रहणे न ग्रहणे

सतिसिजभ्यस्तेतिजुस् प्राप्तः णिलोपस्यैकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यं॥ वेत्तेर्हि लङ्ग्वानंतरो झिः संभवतीति तत्साहच
र्यादभ्यस्तादपि लङ एव झेर्जुस् विधानात्॥ न चैवं सिचा साहचर्याल्लुङोऽपि ग्रहणमस्त्विति वाच्यं॥ विप्रतिषेधे परमिति परसाहचर्यस्य बलीय
स्त्वादिति॥ अत एव भवतेर्यङ्लुङि ता लुङि अबोभूवन्निति माधवः॥ पंचमीसमासप्रयोजनतया अपीपचन्नित्युदाहरतो भगवतस्तु नेह स
हचर्यं नियामकतया संमतं॥ क्त्वोर्थग्रहणाद्विज्ञापकात् साहचर्येण सर्वत्राश्रीयत इत्युक्तं दीधीवेवीटामिति सूत्रे॥ तस्माद्यङ्लुकि भुवो
लुङि जुसेवोचितः॥ आत इति नियमस्य सिचः परत्वमाश्रित्य यो जुस् प्राप्तः तन्मात्रपरतया माधवेनैवोक्तत्वात् अभ्यस्ताश्रयस्य जुसो दुर्वा
रत्वात्॥ यदि तु लाघवादात इति नियमः सामान्यापेक्षस्तदा जुसभावे दभ्यस्तादित्यत्॥ तथा चाबोभूवुरबोभूवदिति पक्षभेदेन रूपं लभ्यते।
नित्यत्वेन वुको गुणबाधकत्वात्॥ माधवोदाहृतमबोभूवन्निति तु चिंत्यमेव॥ अंत्यादेशस्य दुर्लभत्वात्॥ अपीपचन्नित्येतत्सिद्धये च पंच
मीसमास आश्रयणीयः॥ विगणय्येत्यादौ अतिप्रसंगस्य तु पूर्वोक्ता एवोद्धाराः स्मर्तव्याः इति युक्तः पंथाः॥ ननु पंचमीसमासो मास्तु इतिव
दनोमते तन्वंतीत्यत्र इस्यादिति कुतो नोद्भावितमिति चेत्॥ न॥ बहिरंगस्य यणोऽसिद्धत्वात्॥ न च नाजानंतर्य इति निषेधः॥ अनंतरे कार्ये
विधेये यत्राचि आनंतर्यं इति कैयटेनाभ्युपगमात्॥ कथं तर्हि पंचमीसमासोदाहरणं प्राग्दत्तमिति चेत्॥ हरदत्तमतेनेत्यवेहि॥ स हि यण्यंतरं
गे बहिरंगे वा अचोरानंतर्यमिति व्याख्यत्॥ नन्वेवं न पदांतसूत्रे इध्यत्रेति वृत्तिमुपादाय स्थानिवद्भावप्रतिषेधसामर्थ्याद्बहिरंग परिभाषे
न प्रवर्तत इति मिश्रोक्तिर्विरुध्यते॥ बहिरंगे यणि अचोराश्रयेण नाजानंतर्य इति निषेधादेव परिभाषाया अप्रवृत्तेः॥ किंच॥ संयोगांतस्य
लोप इति सूत्रे असिद्धं बहिरंगमिति परिभाषामाश्रित्य क्रियमाणं यणः प्रतिषेध इति वार्त्तिकस्य प्रत्याख्यानमपि विरुध्येत॥ अपि [illegible]

श०कौ तिसूत्रे उरण् रपर इति परेण चेत्कर्त्र्यर्थमित्यत्र रेफद्वयं श्रूयेतेत्युक्तं तदपि विरुध्येत॥ रोरीति लोपसंभवात्॥ असिद्धपरिभाषायाश्चोक्तरीत्या नि-
१२९ षेधात्॥ किंच॥ नधातुलोपसूत्रे प्रेद्धमित्यत्र भाष्येण संयोगांतस्येत्यत्र यण इत्यस्य प्रत्याख्यानभाष्येणापि विरोधः॥ किंच॥ एतरेङ्लोत्र
पचावेद्मित्यादौ अतिप्रसंगमाशंक्य बहिरंगतया स्वकृतं समाधानमपि भज्येतेति दिक्॥ तस्माद्धरदत्तकृता व्याख्या पूर्वापरस्वग्रंथैर्भा-
ष्येण च विरुद्धेति चेत्॥ सत्यं॥ अत एवेमां व्याख्यां नधातुलोपसूत्रस्थामनुपादेयामवोचाम॥ केण इत्यादिज्ञापकान्नाजानंतर्य इत्यस्यानि-
त्यतामाश्रित्य वा कथंचित्समर्थनीयं॥ स्यादेतत्॥ कैयटमतेपि अचोरिति द्वित्वं विवक्षितं न वा॥ आद्ये मूलभूतज्ञापकविरोधः॥ नहि को-
सिचत्कोस्येत्यादावनंतरेषत्वविधावचोराश्रयणं॥ द्वितीये तु मूलभूतं ज्ञापकं संभवेत्॥ पदीण् ग्रहणे पूर्वेण स्यात्॥ तत्तु परेणैवेति स्थितं॥
अथ परेणेण् ग्रहणे हलोपि केसि स्थितं भवतु नाम॥ अजानंतर्ये तु न गतमित्याशयः॥ तर्ह्यस्य कथंचिज्ज्ञापकनिर्वाहः॥ अयज इंद्रं वरुण इंद्रं
इत्यादौ परत्वात्सवर्णदीर्घस्य कृदुर्वीर एव॥ नह्यत्रासिद्धं बहिरंगमिति प्राप्नोति॥ नाजानंतर्य इति निषेधात्॥ नन्वंतरंगं बलवदिति परिभाषांत-
रेणेदं सिध्यति॥ तथा च विप्रतिषेधसूत्रे अंतरंगं चेत्युपक्रम्य इण्ङशीनामाद्गुणः सवर्णदीर्घादिति प्रयोजनं पठितमिति चेत्॥ सत्यं पठितं॥
किंतु बहूनमप्रयोजनानि पठित्वा असिद्धपरिभाषयैव गतार्थत्वान्नेयं कर्त्तव्येत्युपसंहृतं॥ एतेन प्रकृतसूत्रे पट्व्यामृद्व्युदाहरणदूषण-
प्रस्तावे सिद्धपरिभाषां भाष्यकारैरुदाहृतामंतरंगं बलीय इत्येतदुपलक्षणतया व्याचक्षाणोपि कैयटः प्रत्युक्तः॥ विप्रतिषेधसूत्रस्थभा-
ष्यविरोधात्॥ तस्मादिह सिद्धांततत्त्वं अन्यदेव वक्तव्यं इति॥ उच्यते॥ अंतरंगपरिभाषाया निरपवादत्वादसिद्धपरिभाषायास्तु नाजानंत-
र्य इति सापवादत्वादुभयोरावश्यकता॥ विप्रतिषेधसूत्रस्थं भाष्यं तु अभ्युच्चयपरमेवेति भागवृत्तिकाराः॥ कैयटलघुविवरणाद्योप्येवं राम
१२२

॥ वृद्धिविवरणकारास्तु ॥ नाजानंतर्य इति परिभाषाम्मास्तु ॥ तज्ज्ञापकतया यत्संमतं तेनासिद्धपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इत्याहुः ॥ अ
स्मिंश्च पक्षे विप्रतिषेधसूत्रस्थं नाजानंतर्य इति भाष्यमपि अनित्यत्वपरतया भंक्त्वा नेयं ॥ अन्यथा हि तत्रैवांतरंगं बलीय इत्यस्य प्रत्याख्यानं
विरुध्येत ॥ अत एव वृत्रघ्नौ नलोपः सुप्स्वरेत्यत्र वृत्रहभ्यामित्यत्र नलोपस्यासिद्धत्वात् ॥ ह्रस्वस्येति तुक् नेत्युपक्रम्य संनिपातबहिरंगपरि-
भाषाभ्यां गतार्थतामाशंक्य परिभाषाद्वयस्याप्यनित्यतां ज्ञापयितुं तुग्ग्रहणमित्युक्तं ॥ अत एव तत्र मिश्रैरप्युक्तं ॥ बहिरंगपरिभाषाया
अनित्यत्वात् यासेत्यत्र बहिरंगमपि त्यदाद्यत्वमंतरंगे टापि नासिद्धमिति ॥ तथाच प्रतिदीव्न इत्यादिसिद्ध्येप्यसिद्धपरिभाषाया अनि
त्यत्वं स्वीकृतं ॥ अत एव चार्यहूरित्यत्र यलोपे कार्ये ऊठ् नासिद्ध इति दिक् ॥ एतदपवादश्चाकृत व्यूहा इत्यादिः ॥ उत्सर्गापवादयोर्द्वयो
रप्यनित्यत्वे स्थिते लक्ष्यानुरोधेनैव व्यवस्था हेतुरिति सर्वं सुस्थं ॥ स्यादेतत् ॥ पूर्वस्येति संबंधसामान्ये षष्ठी ॥ संबंधश्च द्विविधः ॥ कार्यित्वे
न निमित्तत्वेन वा ॥ एवं च विधिग्रहणं विनैव समासद्वयस्य फलं लभ्यं विधिग्रहणे सत्यपि हि पूर्वस्य निमित्तत्वेनाश्रितादिति व्याख्येयमे
व ॥ अन्यथा हे गौरि त्यत्र गकारात्परस्य विधौ वृद्धेः स्थानिवद्भावादेङ्ह्रस्वादिति संबुद्धिलोपः स्यात् ॥ सत्यं ॥ विधिग्रहणं योगविभागार्थं ॥ तेन पूर्व-
स्य विधौ स्थानिवदेवेति नियमात्स्वाश्रयं न्याव र्त्यते ॥ यद्वा ॥ मास्तु योगविभागः ॥ विधिग्रहणसामर्थ्याद्विधिमात्रे स्थानिवद्भावो भविष्यति ॥
शास्त्रीयेऽशास्त्रीये च ॥ तेन पटयतीत्यादौ वृध्यभावो शास्त्रीयोपि सिध्यति ॥ नन्वेवमपि पूर्वसूत्रादेव विधिग्रहणमनुवर्तयिष्यते ॥ सत्यं ॥ पुन
र्विधिग्रहणात् द्वितीयो नियमः क्रियते ॥ पूर्वस्यैव विधौ स्थानिवन्न तु पूर्वपरयोर्विधाविति ॥ तेन इयतुरिति सिध्यति ॥ अन्यथा हि इणो यु सि
द्विर्वचने चीति यणादेशस्य स्थानिरूपातिदेशाद्द्वित्वे कृते द्वित्वकाले यणोपहारात् पुनः प्रवृत्तिवेलायां व्याश्रयत्वेन वार्णादांगं बलीय इत्यस-

स्मिन्नप्रवृत्तेवर्णमात्राश्रयत्वेनांतरंगत्वात्सवर्णदीर्घस्यात्॥ नचाकृतव्यूहाइतियणिति वाच्यम्॥ निमित्तविघातनाभावात्॥ कृतेपियणिस्थानिवत्वे
नसवर्णदीर्घप्राप्तेः॥ ततश्चसवर्णदीर्घेकृतेंनादिवच्चेत्यनेनाभ्यासग्रहणेनग्रहात् अभ्यासह्रस्वत्वेदीर्घइणः किनीतिदीर्घत्वेकृतेदीर्घविधानसा मः
ध्यादिणोयणभावेईअ तुरितिस्यात्॥ सिद्धांतेतुपूर्वपरयोर्विधौस्थानिवत्वाभावान्निमित्तविघातेनाकृतव्यूहपरिभाषयेणोयणिसिद्धं रूपं॥ अच॥
स्थानिवदितिवतिबलेनाभावोप्यतिदिश्यते॥ उत्तरसूत्रेद्विर्वचनादिग्रहणाल्लिंगात्॥ विधिग्रहणंतुपूर्वस्यैव नतुपूर्वपरयोरितिएतदर्थमित्तिदिक्॥
इहस्थान्यादेशनिमित्तानांत्रयाणांसन्निधानाविशेषेपिस्थान्यपेक्षमेवपूर्वत्वंगृह्यतेननुआदेशापेक्षंनिमित्तापेक्षंवा॥ वैयाकरणइत्यत्रआया
देशापत्तेः॥ तदुक्तं॥ अचः पूर्वत्वविज्ञानादैचोः सिद्धमिति॥ नन्वेवंसमाद्येत्यत्रजग्ध्यादेशप्रसंगः॥ ण्यल्लोपाविति पूर्वविप्रतिषेधेनणिलोपेकृते
ततः प्रत्ययलक्षणेनवृद्धौसत्यामिकदेशविकृतस्यानन्यतयाऽदिग्रहणेनग्रहणात्॥ एवंघात्यादित्यत्रवधादेशप्रसंगइतिचेत्॥ न॥ आदिघ
त्योरपिस्थानिद्वाराऽनादिष्टादचः पूर्वत्वात्॥ ननुस्थानिनः पूर्वत्वेपिआदेशस्यकिमायातं॥ नह्यनादिष्टादचः पूर्वत्वंनामशास्त्रीयंकार्यं॥ यत्
स्थानिवदादेशइतिपूर्वसूत्रेणातिदिश्येतेतिचेत्॥ न॥ अनादिष्टादचः पूर्वत्वमुपजीव्य अचः परस्मिन्नितिशास्त्रेप्रवर्तमाने तव्येस्थानिवदादेश
इत्यस्यप्रवृत्तिसंभवात्॥ तथाचाचः परस्मिन्नितिअतिदेशएवशास्त्रीयंकार्यंतच्चपूर्वसूत्रेणातिदिश्यतइतिफलितोर्थः॥ अतएवनपदांत
सूत्रेसवर्णग्रहणंकृतं॥ अन्यथाम्भसोरल्लोपेकृतेपश्वाङ्ग्वन्ननुस्वारोनानादिष्टादचः पूर्वइतितस्यविधौस्थानिवद्भावविरहात्सवर्णग्रहणंव्यर्थ
मेवस्यात्॥ नन्वेवंसन्त्रियकंडूतिरितिनसिध्यति॥ तथाहि॥ कंडूयतेःक्तिचि अल्लोपयलोपयोःकृतयोरल्लोपस्यस्थानिवत्वेनोवङिकृतेऊकार राम
स्यानादिष्टादचः पूर्वस्यस्थानेजातस्योवङः स्थानिवदादेशइतिस्थानिवद्भावेनानादिष्टादचः पूर्वत्वादचः परस्मिन्नितिस्थानिवत्वेनाकारेण १२३

व्यवायादूडभावेनस्थानिवत्वादेव लोपोव्योर्वलीतिवलोपाभावेनहलिचेतिदीर्घेकृतेकंडूवृतिरितिप्राप्नोति॥ यत्तुयः स्थानिद्वारापूर्वउवङ्नत
स्योट्कस्थेतर्हिवकारस्यपस्यचोठ्वकारस्यनसंस्थानिद्वारापूर्वइति॥ तन्न॥ तेस्तकरितिवत्कंडूइत्यस्यकंडुवृइतिआदेशात्॥ तस्यचकंडु
ऊइत्यादेशेकर्त्तव्येस्थानिवद्भावावश्यंभावात्॥ उक्तंहि॥ सर्वेसर्वपदादेशाइति॥ अन्यथानिरोद्यद्यात्यादिस्यादावपिस्थानिवद्भावा
मूलशैथिल्यापत्तेरिति॥ अत्रोच्यते॥ अनादिष्टादचःपूर्वतायाःस्थानिद्वारकत्वमनित्यं॥ नपदांतसूत्रे कंडूतिरितिभाष्योदाहरणाज्ज्ञाप
कात्॥ अतोनुपसर्गेकइतिसूत्रेकविधौसर्वत्रप्रसारणि भ्योडइतिवार्त्तिकस्यतत्प्रघट्टकभाष्यस्यचपर्यालोचनयाप्येवमेवलभ्यते॥ तथाचत
त्रभाष्यं॥ योनादिष्टादचः पूर्वस्तत्कार्येस्थानिवत्वंहीति॥ स्थानिद्वारकेतुपूर्वत्वेगृह्यमाणेसंपूर्णःप्रघट्टकएवासंगतःस्यादितितत्रैवस्फुटी
करिष्यते॥ तत्रकैयटस्त्वापाततः॥ एतेनतितउमाचष्टेतितापयतीति हरदत्तग्रंथोपिव्याख्यातः॥ तत्रहिणौटिलोपेकृतेतस्यस्थानिवत्वादचो
ञ्णितीतिवृध्यभावेपिअतउपधायाइतिवृद्धौआकारेकृतेतस्यस्थानिद्वाराउकारात्पूर्वत्वेनपुग्विधावकारलोपस्यस्थानिवत्वात्पुङ्नप्रा
प्नोति॥ नचयस्यपुक्आकारांतस्यनासौपूर्वःयश्चपूर्वआकारोनतस्यपुगितिवाच्यम्॥ एकदेशविकृतस्यानन्यतयासर्वेसर्वपदादेशाइत्यु
क्तरीत्याचाकारांतस्यापिपूर्वत्वानपायात्॥ तस्मात्स्थानिद्वारकंपूर्वत्वमनित्यमित्येवहरदत्तस्यशरणं॥ अत्रकेचित्॥ तितापयतीत्यत्रा
प्येव॥ तथाहि॥ तितउणिच्इतिस्थितेटिलोपश्चप्राप्नोत्यतउपधायाइतिवृद्धिश्च॥ उभयोर्नित्ययोःपरत्वाद्वृद्धिः॥ ततष्टिलोपेकृतेस्व...वान
दिष्टादचःपूर्वमादंतंनतुस्थानिद्वारेतिपुङ्नप्राप्नोति॥ तस्माद्रूपिपिणिचोगुणेकृतेएचिवृद्ध्यावायादेशेतितापयतीतिभवति॥ नचतितउणिच्इ
तिस्थितेअंतरंगत्वादाद्गुणेशव्यायादेशेतितापयतीतिस्यादितिवाच्यं॥ शापेहिगुणेसतिवृद्धिरेचीतिवाधेनाद्गुणस्यनिमित्तविघातस्योत्सत्तेः

 माननयाकृतव्यूहपरिभाषयापूर्वमंतरंगस्यापिआद्गुणस्याप्रवृत्तेः॥अकृतव्यूहपरिभाषाह्यंतरंगपरिभाषाया अपवाद इत्युक्तं॥नन्वत्रापिगुणे
 स्याचःपरस्मिन्नितिस्थानिवत्वाद्गुणस्यननिमित्तविघातइतिवाच्यं॥पूर्वस्यैवविधौस्थानिवद्भावोनतुपूर्वपरयोर्विधावित्युक्तत्वात्॥त
स्मात्तितायतीत्येवसाधु॥नतुतितयतितितापयतीतिवा॥चङिःतुतिताणिच्चङ्‌तिप्इतिस्थितेननोतेर्ईउःसन्वच्चेतिव्युत्पत्तिपक्षेऽभ्या
सस्येत्त्विहित्वनिषेधेटिलोपस्यचङ्परनिर्ह्रासेस्थानिवत्वनिषेधात्ह्रस्वाभावेणिलोपेतस्यस्थानिवत्त्वाद्सिद्धत्वाद्वा॥तोलोपाभावेदी
र्घविधिंप्रतिस्थानिवत्वनिषेधात्सवर्णदीर्घे॥तितादितिभवतिनत्त्वतितापदिति॥अत्रेदंवक्तव्यं॥परत्वाद्वृद्धिरित्यसंगतंनित्यत्वेनटिलो
पात्॥नचवृद्धिर्नित्याअचःपरस्मिन्नितिकार्यातिदेशेनवृद्धिप्राप्तावपिलक्षणांतरेणप्राप्नुवन्ननित्यइत्यभिप्रायेनानित्यत्वात्॥एवंचहरदत्तोक्तिः
सुष्ठेव॥किंतुअनित्यत्वेपिस्थानिद्वारकंपूर्वत्वमिहनेष्यतेइत्यस्मिन्नर्थेप्रमाणंचिंत्यं॥तदेवंस्थानिद्वारकंवास्वतोवाउभयथाप्यचःपूर्वत्व
मिहगृह्यतेइतिस्थितं॥विधीयतेइतिविधिरितिकर्मणिकिप्रत्ययः॥पूर्वस्येतिशेषषष्ठी॥अनुवादेपरिभाषानुपस्थानात्॥पुगाद्यागमेपिविधे
येस्थानिवद्भावः॥अचइत्यत्रतुआदेशइतिसमभिव्याहारात्योग्यताबलात्स्थानिसंबंधलाभः॥षष्ठीस्थानेयोगेत्यस्मःपूर्वसूत्रेऽनुवर्ति
ततस्यस्थानेग्रहणस्येहाप्यनुवृत्तेर्वेतिप्रसिद्धःपंथाः॥न्यासकारस्तुनिमित्तापेक्षमादेशापेक्षंवापूर्वत्वमित्यपिपक्षौभाष्येउपन्यस्तत्वात्त्वीच
कार॥वैयाकरणादौतुबहिरंगयोरैचोरसिद्धत्वान्नदोषइत्याह।इदंचनाजानंतर्यपरिभाषापावहिरंगपरिभाषायाएववाअनित्यतेतिप्रागुक्त
मुपष्टंभ्यसमर्थनीयं॥अस्मिन्पक्षेविधिरितिभावेकिःषष्ठीतुअनभिहितत्वात्कर्मणीत्यपिसुस्थमेव॥किंतुनिमित्तापेक्षयापूर्वत्वेत्यदाद्यत्वस्य 
स्थानिवत्वात्त्वभ्याममित्यादौदीर्घोनस्यात्॥ईघ्नीतीत्वस्यस्थानिवत्वादिगंतलक्षणोगुणोनस्यात्।देयमिति॥तथागुणवृद्ध्योःस्थानिवत्त्वा 

ह्लवनं लाघवकृत्स्यवावौ न स्यातां ॥ ह्रूपोरेकस्य देयमृणे किरतौ व ने इत्यादिनिर्देशोपष्टंभेनानित्यताश्रयणं तु क्लिष्टमिति दिक् ॥ पूर्वत्वं च ना
व्यधानगर्भे किंतु व्यवहितसाधारणं ॥ तस्मिन्निति निर्दिष्ट इति सूत्रे निर्दिष्टग्रहणाल्लिंगात् ॥ चङ्परनिर्ह्रासे निषेधारंभाच्च ॥ तेन पटयतिः
अवधीदित्यादौ स्थानिवद्भावः सिध्यति वधादेशोत्यदंतः ॥ स्यादेनत् ॥ पटयतीत्यत्रांतर्वर्त्तिनीं विभक्तिमाश्रित्य परत्वाज्जश्त्वं प्राप्नोति ॥ न च
स्थानिवद्भावः ॥ जश्त्वविधौ तत्प्रतिषेधात् ॥ सत्यं ॥ कर्मसमर्पकात्प्रातिपदिकादेव णिजुत्पत्तिर्न तु सुबंतादिति वक्ष्यमाणत्वात् ॥ सुबंतात् णि
जिति पक्षेपि इष्टवदित्यतिदिष्टया भसंज्ञया पदसंज्ञाया बाधात् ॥ पट्वीमित्यस्यैव हि भसंज्ञा प्रवर्त्तेति कथं तत्र पदसंज्ञाप्रसक्तिः ॥ तत्र चाप्रवृत्ता
कथं तरामेकदेशविकृते लभ्येत ॥ स्रग्विणमाचष्टे स्रजयतीत्यादौ हि प्रातिपदिकाण्णिजुत्पत्तिरिति पक्षे प्येषैव गतिरिति वक्ष्यामः ॥ अवधी
दित्युदाहरणं तु भाष्यमते आर्द्धधातुकीयाः सामान्येन भवंतीति पूर्वसूत्रे एवोपपादितत्वेनार्द्धधातुकोपदेशे यदकारांतं तस्य लोप इति लोपसंभ
वात् ॥ वार्त्तिकमते तु लिङीति परसप्तमी त्युक्तं ॥ तथा च अतः यदित्यादावविवातो लोपो न प्राप्नोति ॥ अत एव कैयटे लंतस्य वधमादेश इष्टिस्तन्मतं ॥ इदि
त्त्वं न भवति ॥ वध्यादेशे इद्वित्त्वप्रतिषेध इति पूर्वसूत्रस्थवार्त्तिकात् ॥ एवमश्वकोबहुखट्वक इत्यादौ केण आपोन्यतरस्यामिति ह्रस्वस्य
स्थानिवद्भावात् ह्रस्वांतेंत्यात्पूर्वमिति खकाराकारस्योदात्तो न भवति ॥ किंतु ॥ कपि पूर्वमित्युत्तरपदांतोदात्तत्वमेव भवति ॥ अन्वितीकः बहुन्वि
तीकः इत्यादौ तु न्वितेः क्तपीति दीर्घस्य स्थानिवद्भावान्न्विशब्देकारस्य उदात्तता भवति ॥ न चोभयत्रापि स्वरविधौ न स्थानिवदिति निषेधः शंक्यः
॥ लोपाजादेशमात्रविषयः स इति वक्ष्यमाणत्वात् ॥ एवं पट्व्यामृद्व्येति बहुभिर्वृत्तिकारैरुदाहृतं तत्त्वात मूर्द्धाभिषिक्तमिति भाष्ये व्यवहृतं स
म्युदाहरणं साध्वेव ॥ अकृतव्यूहन्यायेन प्रथमं पूर्वयणादेशायोगात् ॥ नैवं कर्त्र्या ह्र्चैत्यादावुदात्तयण इति विभक्तेरुदात्तत्वं न स्यादिति ॥

वाच्यम्॥स्वरविधौ व्यंजनस्याविद्यमानवद्भावेन पूर्वं यणमेवाश्रित्य तत्समाधानात्॥न च पूर्वस्मादपि विधौ स्थानिवद्भावाद्यणमेव नै-
निवाच्यं॥रेफस्यादिष्टादचः पूर्वत्वात् स्थानिद्वारकस्य पूर्वत्वस्यानित्यत्वात्॥निष्ठायां सेटीति क्लिष्ट ग्रहणेन पूर्वस्माद्विधौ स्थानिवद्भावस्य नि-
त्यत्वाच्च॥तस्मान्मूर्द्धाभिषिक्तमुदाहरणमिति पक्षो नातीव दुःष्यति॥अत एव ह्याश्रीः प्रमाणाश्रामेव प्रकृतौ स्थानिवत्त्वमिति पक्षे अकुर्व्यो शा
मलुन्याशां व्यत्यजन्याशां व्याशामित्यत्र क्रमेण येचेत्युलोपईहल्यघोरितीत्त्वं येविभाषा रायो हलीत्यात्त्वं च प्राप्नोतीति भाष्यवार्त्तिकयोरुक्तं
॥यत्तु अंतरंगं बलवदिति वा असिद्धवदत्राभाषां वा आश्रित्य पद्व्यमृद्ध्येत्युदाहरणनिराकरणपरं भाष्यं तत्तु अकृतव्यूहवचसोः नित्यताभिप्रायेण
कथंचिन्नेयमितिदिक्॥नपदांतद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु॥पदांतादिषु विधीयमानेषु पूर्वेण प्राप्तः स्थानिवद्भावो न
स्यात्॥पदान्ते॥कानिसंति॥कौस्तः॥इह यणावादेशयोः कर्त्तव्ययोः श्नसोरल्लोपो न स्थानिवत्॥न चानादिष्टादचः पूर्वत्वविरहादेव न स्थानिवदि
ति वाच्यं॥वाक्यादपोद्धृत्य पदानि संस्क्रियंत इति पक्षे नादिष्टादचः पूर्वत्वस्य सत्वात्॥न हि पदांतरनिरपेक्षमेव पदमिह शास्त्रे संस्कार्यमिति नियम
॥युष्मदुपपद इत्याद्यनुशासनस्यासंगतिप्रसंगात्॥एतच्चांगसंज्ञासूत्रे कैयटेन ध्वनितं॥केवलपदसंस्कारपक्षे अदद्री॰ इत्यादौ अवङ्इति लो
पो न स्थानिवदित्युदाहार्यं॥विधिशब्दश्चेह न कर्मसाधनः॥तथात्वे हि कर्मधारयो वा स्यात् शेषषष्ठ्यंतेन सह तत्पुरुषो वा॥नाद्यः॥विधिशब्द
स्य क्रियाशब्दतया पूर्वनिपातप्रसंगात्॥नांत्यः पदांतस्य कस्मिंश्चित्कर्त्तव्ये न स्थानिवदिति पर्यवसानेन वृक्षवइत्यत्र वलोपापत्तेः॥द्वंद्वनिर्दिष्टे
षु द्विर्वचनादिषु अनन्वयापत्तेश्च॥तस्माद्भावसाधन एव॥अंतरंगत्वाच्च॥अत एव कर्मषष्ठ्यंतेन समासः॥श्रुकीतटीत्यादौ पदसंज्ञायां कर्त्त
व्यायां यलोपो न स्थानिवदेव॥नहि स्वादिष्विति सूत्रेण पदस्यांतो विधीयते येन निषेधः स्यात्॥किंतु संज्ञामात्रं॥तत्रापि यथोद्देशपक्षः॥

स्त्वादिकार्य्यकालत्वे पूर्वत्रासिद्धं चेति निषेधापत्तेः ॥ एकदेशविकृतस्यानन्यत्वाद्धेतस्त्वानित्यत्वरुः प्राप्तः ॥ बहिरंगस्यासिद्धत्वान्नेति वक्ष्यते ॥
भाष्ये तु पदसंज्ञायाः पदांततां स्वीकृत्य पदे अंत इति भसंज्ञापि पदकार्यमिति च द्वेधा समाहितं ॥ तत्रांत्ये षडिके वचनसामर्थ्यादिति बोध्यम् । आ
द्विकषडिकोऽनुपंच मेव वक्ष्येते ॥ द्विर्वचने ॥ सुध्युपास्य ः ॥ स्थानिवद्भावनिषेधसामर्थ्यादेव बहिरंगपरिभाषापि इह न प्रवर्त्तते ॥ नाज्ञानेनर्य इत्ति निषे
धाद्य ॥ वरे इति निपातनादलुक्‌ हं हूस्व । वरे योजादेशः स न स्थानिवत् ॥ यायावरः ॥ यातेर्नित्यं कौटिल्ये इति यङ् यङ्लपङः इति वरच् ॥ तन्निमित्त ः
को अतो लोपस्तस्य च आ तो लोप इटि चेत्यालोपे कर्त्तव्ये न स्थानिवत् ॥ नन्विह परनिमित्तकमेव नास्ति ॥ आर्द्धधातुक इति वि[illegible]सम्य भ्युपगमात्
॥ अत एव हि अचोयदिति सूत्रे ऽज्ग्रहणं कृतं ॥ अन्यथा हलंतात्ण्यतो विशेष विहिततया परिशेषाद्यत एव यद्भविष्यति किं तेन । विषयसप्तम्यां तु दि
त्संधित्स्यं इत्यादावजंतभूतपूर्वादपि यत्सिद्ध्ये अज्ग्रहणमिति यतो नाव इत्याद्युदात्तस्सिध्यति ॥ सत्यं ॥ वरे ग्रहणे न परसप्तमी पक्षोऽप्य तो
॥ तथा चानुदात्तेन श्च हलादेरिति सूत्रे आदिग्रहणं कृतं ॥ हलंतादिति मा विज्ञायी ति ॥ अस्ति च हलंते विशेषणस्य व्यावर्त्यं ॥ जुगुप्सनोमीमां
सं न इति ॥ विषयसप्तमीत्वे त्विहापि अतो लोपे हलंतत्वाद्युचोभाव्यमेवेति हलंतविशेषणवैयर्थ्यात्तत्सामर्थ्यादेवादिपरिग्रहसिद्धौ हल्ल इत्येव ब्रूया
त् ॥ एवं च यातेर्यङं नास्ति चि अतो लोपे य लोपविधिं प्रति स्थानिवत्त्वनिषेधाद्य लोपे च यायातीति स्थिते यङ्कारलोपस्य स्थानिवत्त्वात् आतो लो
प इटि चेत्याकारलोपे पुनर्यलोपे यातिरिति भविष्यति ॥ न च पुनराकारयकारयोर्लोपे सति त्किच् प्रत्ययमात्रं श्रूयेतेति वाच्यं ॥ आल्लोपस्य स्थानिवत्त्वा
त् ॥ अचिण्वेलुड्न्यायेनासिद्धत्वाद्वा ॥ य लोपे उदाहरणान्तरमपि ॥ तद्यथा ॥ कंडूयतेः क्तिच् ॥ कंडूतिः ॥ क्तिन्नि ति तु काशिकायाः प्रमादः ॥ म क्त
[illegible] नेह आवादिलकल्पनं बहुलग्रहणे वा शरणीकरणाद्धै ॥ भाष्यकारेणैव कंडूयेस्सेवं भवितव्यमिति

५। कौ· हृताएतस्यापशब्दतोक्तेः॥तस्माद्यंक्तिजेवततोल्लोपयलोपौ अल्लोपस्य स्थानिवत्वादुवङ्॥ततश्छ्वोःशूडित्यूठ्॥नचोठ्य[illegible]ं।आदि द्दा
१२६ दचः पूर्वत्वात्॥ अनएकऊठः पुनरुवङ्न भवति॥ सर्वेसर्वपदादेशाइत्याश्रित्यस्थानिह्रारकंपूर्वत्त्वं[illegible]पीह वक्तुंशक्यते भाष्यमतेलोप्लुवः पोपूवइ
त्या दौ यथा॥ तथापि स्थानिह्रारकंपूर्वत्वत्कान्वित्कमेवेतिपूर्वसूत्रेएवोक्तं॥ तथातिष्ठतेर्यङ्ःतात्[illegible] अल्लोपयलोपयोस्ते ष्ठीतीति स्थितेअल्लोपस्य
स्थानिवत्त्वादियङ्यलोपः॥तेष्टितिः॥ तथापेपीयतेःक्तिचि अल्लोपयलोपयोरेरनेकाचइतियणियलोपेकृतेप्तिरिभवति॥ शोतनूकरणे॥ यङ्न्ताक्ति
चि अल्लोपयलोपाल्लोपेषुपूर्वत्रासिद्धे देतिस्थानिवत्त्वनिषेधश्छ्शांषइतिषत्वेकृतेशाष्टिरितिभवति॥एवंचेचीयतेश्चेक्तिरितिदिक्॥तदेयंवरेय
लोपेतिनेकंनिमित्तं किंतुहेइतिस्थितं॥ केचित्तुवरईइतिईकारंप्रश्लिष्यईकारेपरतोविधौनस्थानिवदितिव्याचरव्युः॥तेनामलक्याः फलमामल
कं॥नित्यंवृद्धशरादिभ्यः इतिमयट्॥फलेलुक्॥ततोलुक् तद्धितलुकीतिङीषोलुक्॥सचयस्येतिलोपेनस्थानिवत्॥पूर्वोक्तव्यारव्यानेतुलु
कालुप्तंनस्थानिवदितिवचनंकरिष्यते॥तत्रचलुममितिननपुंसकेभावेक्तः लुङ्नस्थानिवदितिफलितोर्थः।स्वरे।चिकीर्षकः॥सनोअतो
लोपोलीतीतिककारेकारस्योदात्तत्वेकर्त्तव्येनस्थानिवत्॥नचलितीत्यस्यारंभसामर्थ्यं।कारकेइत्यादौसावकाशत्त्वात्॥भाष्येतुआकर्षि
कइत्युदाहृतं॥तदापाततः॥ष्ठलोलित्वसामर्थ्यात्।स्थानिवद्भावकृतव्यवधानेसत्त्यपि लित्स्वरस्यसुवचत्वात्॥घ्नंतीत्यादौकुत्त्ववत्॥ स
वर्णानुस्वारयोः शिंषन्ति। अमसोरल्लोपोत्रनस्थानिवत्॥अनुस्वारस्यानादिशादचः पूर्वत्वंतुस्थानिह्रारेत्युक्तं॥यद्यपिसवर्णग्रहणमात्रेणानु
स्वारोप्याक्षेप्तुंशक्यतेतथापिविशेषापेक्षंज्ञापकंइत्यपिसंभाव्येत॥तथाचयत्रनपरसवर्णप्रसंगः शिंषन्तीत्यादौतत्रस्थानिवद्भावोनिषेद्धुमनु· राम·
स्वारग्रहणं॥ अचःपरस्मिन्नितिसूत्रेउक्तरीत्याअभ्यासस्यासवर्णइत्यादिषुसवर्णइतिनिषेधस्यलब्धावकाशतयाशिंढीत्यादेरपि असि ११९

च्चापनेश्चेतिदिक्॥दीर्घे॥ प्रतिदी त्रा॥ इहहलिचेति दीर्घः ल्लोपोन स्थानिवत्॥यत्तुकाशिकायामुक्तं॥उपधायांचेतिदीर्घइतिनत्सामादिकं॥तथा
चउपधायांचेत्यत्रोक्तं॥प्रतिदीम्नेत्यत्रहलिचेतिदीर्घइति॥यद्वा॥आचारक्विबतात्क्विस्वेतिक्किपिसमाधेयं॥नन्वेवमनुनासिकस्यक्वि झलोरिति
दीर्घःस्यात्॥ सत्यं॥ अकृतव्यूहपरिभाषया भाविनमल्लोपमालोच्यांतरंगोपिदीर्घोनकरिष्यते॥जग्मुषइत्यत्र इडागम नकारादेशाविवेतिबोध्य
म्॥ नन्वस्थानिवत्वाभावेप्यसिद्धंबहिरंगइत्यल्लोपस्यासिद्धत्वाद्दीर्घोनस्यादितिचेत्॥ न॥ कृतितुग्विधिग्रहणेनबहिरंगपरिभाषाया अनित्यत्व
स्यज्ञापितत्वात्॥ यथोद्देशपक्षेषाष्ठीं परिभाषांप्रतिदीर्घस्यासिद्धतयांतरंगाभावेनपरिभाषाया अप्रवृत्तेश्च॥जक्षि॥ सग्धिश्चमे॥ बब्धांतेहरी॥
नप्त्राह॥अदनंग्धिः॥अदेः क्तिनिवहुलं छंदसीतिघस्लादेशः॥ घसिभसोर्हलि चेत्युपधालोपः॥ झलोझलीतिसकारलोपः॥धिसकारेसिचो
लोपइत्यस्य भाष्यकृता अनाश्रयणात्॥ वार्तिकमते त्वादेर्सो वर्णलोपः॥ झषस्तथोरितिधत्वं॥नन्वतस्मिन्कर्त्तव्ये पूर्वस्मादपीतिस्थानिव
द्भावः॥पंचमीसमासस्यानित्यतायाः पूर्वसूत्रएवोपपादितत्वात्॥ घस्य झलांजशितिजश्त्वेकर्त्तव्यउपधालोपोनस्थानिवत्॥ समानाग्धिः
सग्धिः॥सहस्यसः संज्ञायामितिसूत्रात्स इति अनुवर्त्तमाने समानस्यछंदस्यमूर्द्धप्रभृत्युदर्केषु इतिसूत्रेणसमानस्यसभावः ब्धामितिभ
सेर्लोट्॥ तसस्तां॥श्नपः श्लुः॥अंतरंगत्वाद्द्वित्वमभ्यासकार्यं॥ततोघसिभसोरित्युपधालोपादिप्राग्वत्॥चरि॥जक्षतुः॥जक्षुः॥घसेर्लि
ट् अनुस् उसन्व॥गमहनेत्युपधालोपः॥खरिचेतिचर्त्वमितिनस्थानिवत्॥अत्र वार्त्तिकं॥स्वरदीर्घयलोपेषुलोपाजादेशोनस्थानिवदिति॥
तेनान्यःस्थानिवदेव॥पंचभिररत्निभिः क्रीताः पंचारत्नयः वेदेतुपंचारत्न्यः॥जसादिषुछंदसि वावचनं प्राङ्णौचङ्युपधाया इतिगुणाभावे
[illegible]त्यादिन्यपूर्वेपदप्रकृतिस्वरइत्यादुः॥ यद्यपि असिद्धंबहिरंगमित्यनेनापीदंसिध्यति तथापि अकृत

प. कौ. हृना एतस्याप शब्दतोक्तेः॥ तस्मादयंक्तिजेवततोल्लोपयलोपो अल्लोपस्य स्थानिवत्वादुवङ्॥ ननु स्तोः भूडित्यूठ्॥ न चोऽत्र विस्थानिवत्त्वं। आदि ष्टा
१२६ दचः पूर्वत्वात्॥ अतएव ऊठः पुनरुवङ् न भवति॥ सर्वे सर्वपदादेशा इत्याश्रितस्य स्थानिद्वारकं पूर्वत्त्वं यद्यपीह वक्तुं शक्यते भाष्यमते लोस्तुवः षोपूज्ञइ
त्यादौ यथा॥ तथापि स्थानिद्वारकं पूर्वत्वत्त्वाश्रितमेवेति पूर्वसूत्रे एवोक्तं॥ तथातिष्ठतेर्यङंतात् क्विप् अल्लोपयलोपयोस्तेष्ठीतीति स्थितेऽल्लोपस्य
स्थानिवत्त्वादियङ्यलोपः॥ तेष्टितिः॥ तथा पेपीयतेः क्विप् अल्लोपयलोपयोरेरनेकाच इति यणि यलोपे कृतेऽम्भिरि भवति॥ शोतनूकरणे॥ यङंतात् क्वि
क्वि अल्लोपयलोपाल्लोपेषु पूर्वत्रासिद्धे चेति स्थानिवत्त्वनिषेधश्चुशांष इति षत्वे कृते शाशिरिति भवति॥ एवं चेचीयतेश्चेक्ति॥ इति दिक्॥ तदेवं वरेय
लोपेतिनैकं निमित्तं किंतु द्वे इति स्थितं॥ केचित्तु वरई इति ईकारं प्रश्लिष्य ईकारे परतो विधौ न स्थानिवदिति व्याचख्युः॥ तेनामलक्याः फलमामल
कं॥ नित्यं वृद्धशरादिभ्यः इति मयट्॥ फले लुक्॥ ततो लुक् तद्धितलुकीति ङीषो लुक्॥ स च यस्येति लोपे न स्थानिवत्॥ पूर्वोक्तव्याख्याने तु लु
कालुमंन स्थानिवदिति वचनं करिष्यते॥ तत्र च लुमतिति न नपुंसके भावे क्तः लुङ् न स्थानिवदिति फलितोर्थः॥ स्वरे॥ चिकीर्षकः॥ सनो अतो
लोपे लीतीति ककारे कारस्योदात्तत्वे कर्तव्ये न स्थानिवत्॥ न च लितीत्यस्यारंभसामर्थ्यं। कारके इत्यादौ सावकाशत्वात्॥ भाष्ये तु आकर्षि
क इत्युदाहृतं॥ तदापाततः॥ षलो लित्वसामर्थ्यात् स्थानिवद्भावकृतव्यवधानेसत्यपि लित्स्वरस्य सुवचत्वात्॥ मंतीत्यादौ कुत्सवत्॥ स
वर्णानुस्वारयो शिशण्ढि। श्नसो रल्लोपोत्र न स्थानिवत्॥ अनुस्वारस्यानादिष्टादचः पूर्वत्वं तु स्थानिद्वारेत्युक्तं॥ यद्यपि सवर्णग्रहणमात्रेणानु
स्वारोप्यासेद्धुं शक्यते तथापि विशेषापेक्षं ज्ञापकं इत्यपि संभाव्येत॥ तथा च यत्र न परसवर्णप्रसंगः शिंषंतीत्यादौ तत्र स्थानिवद्भावनिषेद्धुमनुं पदम.
स्वारग्रहणं॥ अचः परस्मिन्निति सूत्रे उक्तरीत्या अभ्यासस्यासवर्णे इत्यादिषु सवर्ण इति निषेधस्य लब्धावकाशतया शिंढीत्यादेरपि असि १६९

व्यापन्नेभ्यश्चेतिदिक्॥दीर्घे॥प्रतिदीव्ना॥ इहहलिचेतिदीर्घः ल्लोपो न स्थानिवत्॥यत्तु काशिकायामुक्तं॥उपधायांचेतिदीर्घइतितत्सामादिकं॥तथा
च उपधायांचेत्यत्रोक्तं॥प्रतिदीम्न इत्यत्र हलिचेति दीर्घइति॥यद्वा॥ आचारक्विबंतात्क्विब्वेति क्विपि समाधेयं॥नन्वेवमनुनासिकस्य क्वि झलोरिति
दीर्घः स्यात्॥ सत्यं॥ अकृतव्यूहपरिभाषया भाविनमल्लोपमालोच्यांतरंगोपि दीर्घो न करिष्यते॥जग्मुष इत्यत्र इडागम नकारादेशाविवेतिबोध्य
म्॥ ननु स्थानिवत्त्वाभावेप्यसिद्धं बहिरंगइत्यल्लोपस्यासिद्धत्वाद्दीर्घो न स्यादितिचेत्॥ न॥ कृतितुग्विधिग्रहणेन बहिरंगपरिभाषाया अनित्यत्व
स्य ज्ञापितत्वात्॥ यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति दीर्घस्यासिद्धतयांतरंगाभावेन परिभाषाया अप्रवृत्तेश्च॥जशि॥ सग्धिश्च सप्सो॥ बब्धां तेहरी॥
तयोरिति॥अदनंग्धिः॥ अदेः क्तिनि वहुलं छंदसीति घस्लादेशः॥ घसिभसोर्हलि चेत्युपधालोपः॥ झलो झलीति सकारलोपः॥धिसकारे सिचो
लोप इत्यस्य भाष्यकृता अनाश्रयणात्॥ वार्त्तिकमते त्वाद्यस्य ग्रासो वर्णलोपः॥ झषस्तथोरिति धत्वं॥ न च तस्मिन् कर्त्तव्ये पूर्वस्मादपीति स्थानिव
द्भावः॥पंचमीसमासस्यानित्यतायाः पूर्वसूत्र एवोपपादितत्वात्॥ घस्य झलां जशीति जश्त्वे कर्त्तव्य उपधालोपो न स्थानिवत्॥ समानाग्धिः
सग्धिः॥संहस्य सः संज्ञायां इत्यिस्मात्सइति अनुवर्त्तमाने समानस्य छंदस्यमूर्द्धप्रभृत्युदर्केषु इति सूत्रेण समानस्य सभावः॥व ब्धामिति भ
सेर्लोट्॥ तसस्ताम्॥ शपः श्लुः॥ अंतरंगत्वाद्द्वित्वमभ्यासकार्यं॥ ततो घसिभसोरित्युपधालोपादि पूर्ववत्॥चरि॥ जक्षतुः॥जक्षुः॥ घसेर्लि
ट् अतुस् उस् च॥गमहनेत्युपधालोपः॥खरि चेति चर्त्त्वं प्रति न स्थानिवत्॥अत्र वार्त्तिकं॥स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति॥
तेनान्यः स्थानिवदेव॥ पंचभिररत्निभिः क्रीताः पचारत्नयः वेदेतु पंचारत्न्यः॥जसादिषु छंदसि वा वचनं प्राङ्णौ चङ्युपधाया इति गुणाभावे
[illegible] इत्यादि न्यपूर्वपदप्रकृतिस्वर इत्याहुः॥ यद्यपि असिद्धंवहिरंगमित्यनेनापीदं सिध्यति तथापि अकृत

न्यूहपरिभाषा मात्रिस्यबोज्यं॥ अचिनीको अरवहू कद्रूस्यत्रहू स्वांतं स्यात्पूर्वमित्यस्यक्रमेणप्रवृत्त्यप्रवृत्तीफलमितितुपूर्वसूत्रेणकोर्नं॥ नचत
त्रबहिरंगपरिभाषायाः प्रसंगोस्ति॥ किर्योर्गिर्यौः स्युत्तांत्पक्षेहलि चेतिदीर्घः प्राप्तः॥ यणः स्थानिवद्भावान्न भवति॥ अचइरित्यधिकारे क्रुजेः
क्विन्च कृगृमृदृकुटिभिदिच्छिदि भ्यश्चेति इः सचकित्। स्वृत्तुहरदत्तेन न्यासकृताच कृग्रोरिच्चेत्युपन्यस्तं ततक्वचि दुणादिरन्तो अन्वेषणी
यं॥ वाभ्यां इहयलोपोन॥ अस्मिन्वार्त्तिकेस्वरग्रहणमत्र मावश्यकं॥ किर्योर्गिर्यौरितितुउप भायांचेतिसूत्रे वृत्तिकारोक्तरीत्याउणादी
नामव्युत्पत्तिपक्षालंबेनापिसिद्धं॥ वाभ्योरितितुबहिरंगस्यासिद्धतयासिद्धं॥ क्विलुगुपधात्वचङ् परनिर्ह्रासकुत्वेषूपसंख्यानं॥ पूर्वत्रासि
द्धेच॥ तस्यदोषः संयोगादि लोपलत्वणत्वेषु॥ अस्यार्थः॥ क्वौविधिं प्रतिनस्थानिवत्॥ लवमाचक्षाणो लौः॥ अत्रणिचि यष्टिलोपोयश्च
क्वौणिलोपस्तदुभयं च्छ्वोः शूडितिवकारस्यक्विनिमित्तेऊठिकर्त्तव्येनस्थानिवत् एत्येधत्यूट्स्विति वृद्धिः॥ तथापिपठिषिब्राह्मणकुलानीतिदी
र्घीविवीटामितिसूत्रेयदुदाहृतंतदपिक्वौविधिंप्रतीतिव्याख्यानेएवसंगच्छते॥ क्वौलुप्तंप्रतिनस्थानिवदिति व्याख्यायांतुलोःपिपठिषीत्युभयम
पिनसिद्ध्येत्॥ णिचिटिलोपस्यस्थानिवद्भावेऊठोसंभवात्॥ पिपठिषतेरप्रत्ययेअतोलोपेनपुंसकबहुवचनेशौझल्लक्षणेनुमिकर्त्तव्येअतोलोप
स्यस्थानिवत्त्वनिषेधेननुम्प्रसंगाच्च॥ एतच्चदीधीवेवीटामितिसूत्रेकंड्वादिसूत्रेचमिश्रग्रंथेस्फुटं॥ कैयटोपिदीधीवेवीटामित्यत्रक्वौविधिंप्र
तीत्ययंव्यवस्थितोनतुक्वौलुप्तंनस्थानिवदितीत्याह॥ अत्रव्यवस्थितइतिवदताक्वौलुप्तंनस्थानिवदितिपक्षोपिक्वचिदाश्रीयतएवनियमःप
रंनास्तीतिसूचितं। लुप्तमितिनपुंसकेभावेक्तः॥ एवंचसरव्युर्यैम्यान्परःत्वंअहंइतिसिद्धं। तथाहि। स्व्यत्यात्परस्येतिसूत्रेभाष्यं। सखीयतेःसख्युःलुनीयतेर्लूनुमि
ति। नत्रसखीयतेःक्विपिअल्लोपेयलोपेअल्लोपस्यस्थानिवद्भावात्परत्वात्क्विलोपंबाधित्वाइकोयणचीतियणस्यात्। ततोयलोपेसखोलूनइतिस्यात्॥ अवस्य

कौस्तुभेनस्थानिवत्इतिनत्रयणंपरिजह्रारकैयटः॥तथाउगिद्चामितिसूत्रेअधातुभूतपूर्वस्यापिनुमर्थेअधातुग्रहणंइत्युक्त्वागोमत्यतेरप्रत्यये
गोमानित्युदाहृतंभाष्ये॥तत्राप्यल्लोपस्यस्थानिवत्त्वात्सर्वनामस्थानपरत्वंनास्तीतिनुम् नस्यात्॥नचाधातुग्रहणसामर्थ्यात्स्थानिवद्भावबाध
तव्यवायेसत्यपिनुमस्यादितिवाच्यं॥आचारक्विवंतात्क्विवेतिक्विपिचरितार्थत्वात्॥तस्मात्कौस्तुभेनत्स्यैवशरणं॥न्चुगोमत्यतेर्गोमततेर्वाउभ
यथापिगोमानितिनसिध्यति॥अत्वसंतस्येतिदीर्घविधौअधातोरितिविशेषणात्॥सत्यं॥तत्रधातुग्रहणमसंतस्यैवविशेषणंनत्वत्वंतस्यापी
तिवक्ष्यमाणत्वान्नदोषः॥तथायेनविधिस्तदंतस्येतिसूत्रेकेवलोपिपाच्छब्दोस्ति॥पादयतेःपात्॥पदइतिभाष्यं॥अत्रापिस्थानिवद्भावाद्व्यवधा
नेनपद्भावोनस्यात्॥कौस्तुभंनेतिसिध्यति॥अतएवपादस्यपादहस्त्यादिभ्यइतिनसूत्रितं॥प्रतिपदोक्तस्यास्यैवपदादेशोमाभूत्॥किंतुक्वि
वंतस्यापियथास्यादिति॥एवंचपादस्यलोपइतिगुरुनिर्देशंकुर्वतासूत्रकृतैवकौस्तुभंनस्थानिवदितिज्ञापितं॥तच्चक्वाचित्कंइतितुप्रकृतसूत्र
स्थस्यनेत्वंविज्ञापयतेकौस्तुभंनेतिभाष्यस्यार्थः॥विशब्दमाहात्म्यात्लभ्यत्वात्सूत्रादिभाष्याच्चेतिन्यवस्थितशब्दंप्रयुंजानेनकैयटेनध्वनितं॥पु
ष्माणाच्चष्टेपुष्मयति॥ततःक्विपिणिलोपेसौत्वाहोसोइतिकर्तव्येणिलोपोनस्थानिवत्॥तदुक्तं॥स्थानिवत्त्वंचणेरत्रकौस्तुभमतत्वात्नविद्यतेइति
॥स्थानिवत्त्वमिति॥लोपस्येतिशेषः॥णेःकौस्तुभमतत्वादित्यन्वयः॥अस्तुतर्हिकौस्तुभमित्यपिनिस्यमेवा॥तावतापिलवमाचक्षाणोल्लौरित्यस्यंसिद्धे
रितिचेन्न॥पिपीठिषीत्यस्यासिद्धिप्रसंगात्॥देवयतेर्द्यूरितितुइहकैयटेनयदुदाहृतंकौस्तुभंनेतिसिध्यतीति॥तस्यायमाशयः॥यद्यपिइ
हक्वौविधिंप्रत्यूठसिद्धः।तथापितस्यस्थानिद्वाराअनादिष्टादचःपूर्वत्वेनणिलोपस्यस्थानिवद्भावादचोञ्णितीतिवृद्धिप्रसंगः॥तस्मात्कौस्तु
भनेत्स्यैवशरणं॥यत्तुलोपोव्योरितिसूत्रेकंडूयतेःक्विप्अंतात्प्रत्ययेकंडूःकंडुवाविति न्युत्पादयन्कैयटआह॥अल्लोपस्यस्थानिवद्भावाद्यण्॥

प्र॰का॰ तस्यऊठ्॥ नचऊठिकर्त्तव्येस्यानिवत्त्वेनप्रतिबंधःस्यादितिवाच्यं॥ वकारस्यादिष्टादचःपूर्वत्वादिति॥ तत्तुस्थानिहूस्वकेपूर्वत्वमनित्यमित्याश्रित्य
१२८ ॥ तद्वीत्यानुदपूरित्यपिसुसाधमेव॥ ननूभयथापिदयूरित्यत्रप्रत्ययलक्षणेनवृद्धिःस्यादेवेतिचेत्॥न॥ बहिरंगस्यऊठोवृद्धिंप्रत्यसिद्धत्वात्॥ए
वंचस्थानिवद्भावेसत्यपिनकाचित्क्षतिः॥ बहिरंगत्वेनैवसर्वसमाधानात्॥ तस्माद्दपूरितिपक्षद्वयेपिसिध्यतीत्येवतत्त्वं॥ नन्वेकदेशविकृतस्यानन्य
न्यत्वाद्दिवऔत्स्यादितिचेन्न॥ निरनुबंधपरिभाषया अधातुग्रहणानुवृत्तेर्वा भसद्यूरित्यत्रनऔदितिदिवऔत्सूत्रेभाष्यएवस्पष्टत्वात्॥ यद्यपि
उगिदचामितिसूत्रे अधातुपूर्वीदित्यर्थस्तथापीहशब्दाधिकारइतिभावः॥ एतेनहलिचेतिदीर्घः दीव्यतीतिनामधातुप्रकरणेकौमुदीप्रसादो
क्तसुक्तौ॥ दिवेर्डिविरितिन्यासोहितसूत्रेणडिविरितिवदन्माधवोपिदिव्यतीतिहूस्वमेवोपजगाम॥ प्रकृतमनुसरामः॥ द्विवचनादौतु ओःसुपी
तियण्॥ रयोरदइत्यादिखलपूवत्॥ कंडूःकंडुवौकंडुवइत्यादितूवड़ेव॥ संयोगपूर्वकतयायणोप्राप्तेरितिदिक्॥ अत्रायंसंग्रहः॥ सख्यु
र्गोमान्पदस्त्वंच कौलुप्तस्यनिदर्शनं॥ अनित्यत्वेपिपठिषिक्कौविधौलोहूयोर्दपूः॥ लुकालुप्तंनस्थानिवत्॥ आमलक्याःफलंआमलकं॥ फले
लुक्॥ अत्याख्यानपक्षेतुपंचभिःपट्वीभिःक्रीतःपंचपटुःइत्युदाहार्यं॥ तथापंचेंद्राण्योअग्नाय्यश्चदेवतास्यपंचेंद्रःपंचाग्निःङीषासंनियु
क्त आनुक् ऐकारश्चश्रूयेत॥ नचसन्नियोगशिष्टन्यायेननिवृत्तिः॥ परतद्धितलुङ्निमित्तयाङीषनिवृत्तेःपूर्वयोरानुगैकारयोर्निवृत्तौकर्त्त
व्यायामनःपरस्मिन्नितिस्थानिवत्त्वात्॥ येतुपूर्वोक्तरीत्यावरईइतीकारप्रश्लेषंकुर्वतितेषामिहलुग्ग्रहणंनकार्यं॥ उपधात्वेकर्त्तव्येनस्थानिव
त्॥ तेनपारिखाशब्दाच्चातुरर्थिके अणिकृतेवृद्धादेकेकांतखोपधादितिपारिखशब्दाद्वोपधलक्षणेछप्रत्ययेपारिखीयःसिध्यति॥ अन्यथाउ राम॰
पधासंज्ञायाःपूर्वत्वेनतत्रकर्त्तव्यायामाल्लोपःस्थानिवत्स्यात्॥ नन्वेवंपटयतीत्यादौवृद्धिःस्यादितिचेन्न॥ यत्रोपधासंज्ञामुपजीव्यप्रत्ययोविधित्सि १२८

नस्तत्रैवायंनिषेध इति भाष्ये स्थितत्वात्॥ अत्रचङ्परनिर्ह्रासग्रहणमेवज्ञापकं॥ कथंतर्हि भाष्ये यलोपे सौरीबलाकेत्युदाहरणंदत्वा उपधा
विधौ मेत्येवसिद्धमित्युक्तमितिचेत्॥ अनास्थया दर्शमात्रंतदित्यवेहि॥ नत्रहि तेनैकदिगित्यणं तान्ङीपि अल्लोपद्वयस्यापि यलोपे कर्त्तव्येस्था
निवद्भावेनिषिद्धे समानाश्रयस्याणो लोपस्याभीयत्वेनासिद्धतायां यल्लोपः सिद्ध्यतीति यलोपेनस्थानिवदित्यस्यैव सौरीत्युदाहरणं॥ उपधा
त्वंनत्रलोपेउपयोगि नतुप्रत्ययविधावितिस्थितम्॥ चङ्परेणौ योह्रस्वः सचङ्परनिर्ह्रासः तत्रनस्थानिवत्॥ वादितवंतंप्रयोजितवान् अवीवदत्
ह्रीणांपरिवादकेन॥ प्रथमणिचो लोपस्य स्थानिवत्वादनुपधा आकार इतिणौ चङीत्युपधाह्रस्वो नप्राप्नोति॥ णिसामान्यग्रहणाद्व्येनत्सिद्धम्॥
इदंतूदाहरणं॥ वारिआख्यत्॥ अवीवरत्॥ नचनाग्लोपीतिनिषेधः शंक्यः॥ परत्वाद्वृद्धौसत्यांटिलोपइत्यभ्युपगमेनाग्लोपित्वाभावात्॥ अतो
एव हलककेत्यदंतनिपातनंसार्थकं॥ कुत्वेनस्थानिवत्॥ अर्चयतेरौणादिकः कप्रत्ययः॥ अर्कः॥ पाचयतेः क्तिच्॥ पाक्तिः॥ चोः कुरितिकुत्वेणि
लोपोनस्थानिवत्॥ इहसूत्रेजश्त्वग्रहणस्यैव सिद्धे विधिग्रहणं द्वद्वाश्रयेण विध्यंतरोपसंग्रहार्थं॥ नह्युत्पादनार्थं च क्विलुगित्यादिवार्त्तिकमितिनि
ष्कर्षः॥ तत्रापि किंचङ्निर्ह्रासोपधाग्रहणमावश्यकं॥ लुकईकारप्रश्लेषेणगतार्थत्वात्कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्यवधेयं॥ चजोरितिकुत्वेच
उदाहरणमन्वेषणीयं॥ पूर्वत्रासिद्धेच॥ नस्थानिवत्॥ पापच्यतेः क्तिच्॥ पापक्तिः॥ यायज्यतेर्यायष्टिः॥ पाचयतेः पाक्तिः॥ याजयतेर्याष्टिः॥ इह
ल्लोपणिलोपौ कुत्वषत्वयोर्नस्थानिवत्॥ एवंलेहयतेर्लीढिः॥ दोहयतेर्दोग्धिः॥ वेशयतेर्वेष्टिः॥ दाक्षयतेर्दाष्टिरित्याद्यूह्यं॥ न्यायसिद्धं चेदं॥ अचः पर
स्मिन्नित्यतिदेशंप्रतित्रिपादीस्थस्यासिद्धतयातस्मिन्कर्त्तव्ये अतिदेशाप्राप्तेः॥ नचैवंस्थानिवत्सूत्रस्याप्यप्रवृत्तौ रामइतिविसर्गोनस्यादितिवा
च्यं॥ प्रत्ययः परश्चेत्यादिनिर्देशौ र्भोभगोअघोइतिसूत्रेशय्यहंप्रेनचनस्त्रवृत्तेर्ज्ञापितत्वादित्यवधेयं॥ एवंस्थिते द्विर्वचनसवर्णानुस्वारदीर्घ

श्व.कौ. जग्धा रसूत्रेन पठ्यत ॥ किंतु न पदांत वरे यलोप स्वरेष्वित्येव पाठ्यं श्रुति भाष्यवार्तिकयोः स्थितं ॥ स्यादेतत् ॥ यदि दीर्घग्रहणं स्यज्य ते तर्हि सा सप्तमि
१२९ केदीर्घविधौ स्थानिवद्भावः प्रसज्येत ॥ तथा च चिण्णमुलोरिति सूत्रे यङंताण्णिजंता द्वाणि चितनक्ष्णिणि अशांशामि अशामि इति यदुदाहृतं तत्
न सिद्ध्येत् । न च दीर्घग्रहणसामर्थ्यात्स्थानिवद्भाव बाधः क्रमेर्णिङ् सूत्रे हरदत्ताद्युक्तरीत्या चिण्णमुलोर्दीर्घ इत्यत्र कैयटाद्युक्तरीत्या चाहींडी त्यं
तत्सिध्या अहेडीत्यस्य निवृत्त्या तस्य चारितार्थत्वात् ॥ उच्यते ॥ णित्वजात्यैक्यं गृहीत्वा अशामीति सिद्धं ॥ अशंशामीति तु यङ् लुगंताण्णिचि
विष्यति ॥ नहि यङ् यङ् लुकोः स्थानिवत्त्वे कश्चिद्विशेषोस्ति । येन यङ्येव साधयितुं क्लिश्येत ॥ एवं च ग्राहितं दृत्याद्यपि सिद्धं ॥ पूर्वस्मादपि विधौ स्था
निवद्भावे ग्रणि चाव्यवधाने सति ग्रहो । हिटीति दीर्घस्याप्रवृत्तेः ॥ सूत्रमते तु विहितविशेषणाश्रयणाद्ग्राहितमित्यादौ न दीर्घः ॥ अत एव यङंतात्तृ
त्विजरी गृहिं तेत्यत्र न दीर्घः ॥ स्थानिवद्भावात् ॥ सूत्रमते विहितविशेषणाच्चेति स्थितं ॥ यङ् लुगंतात्तु तृजादावितो दीर्घो भवत्येवेति माधवः ॥ हि
प्रश्नेगोह्निर्वचनं षाष्ठमिति सिद्धांतात् ग्रहेर्विहितत्वानपायात् ॥ यङ् लुकोः नैमित्तिकतयाऽज्झलादेशनयालुकालुप्तत्वाच्च स्थानिवद्भावोपि
नास्तीति माधवस्याशयः ॥ वस्तुतस्तु यङ् लुक्यपि इटो दीर्घो निष्ट एव ॥ एकाचो द्वे प्रथमस्येति सूत्रे भाष्य कैयटादिपर्यालोचनयातथैवनिर्णयात्
॥ तथा च तत्र ग्रहेरंगादिति भाष्यमुपादाय कैयट आह ॥ तृचो हि जरीगृहीत्यं गं न तु ग्रहिः विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणमिति ॥
यद्यपि तत्र यङंतं प्रक्रम्येदमुक्तं तथापि युक्तिसाम्याद्यङ् लुङंतेपि न दीर्घ इति लभ्यते ॥ अत एव एकाचो द्वे इति सूत्रे हरदत्तोपि यङंते दीर्घ
माशंक्याह ॥ एकाच उपदेश इत्यतो दीर्घविधावेकाज्ग्रहणमनुवर्त्तत इति ॥ न ह्यत्र पक्षे यङ् लुकि दीर्घस्योक्तिसंभवोप्यस्ति ॥ नन्वेवं ग्रहो राम.
लिटीति सूत्रे यङ् लोपे चोक्तमिति वार्त्तिकव्याख्यावसरे स्थानिवद्भावाद्विहितविशेषणाश्रयणाद्वा यङंते दीर्घं परिहरन् कैयटो विरुध्यते ॥ १२९

यङ्लुगर्थे यथाश्रुतरूपाश्रयणस्यैकाज्ग्रहणानुवर्तनस्य वा आवश्यकतया तेनैव गतार्थत्वादिति चेन्न ॥ ग्रहोलिटीत्यत्रत्यग्रंथस्य उपायस्य
उपायांतरादूषकत्वादिति न्यायेन यङंते उपायांतराभिधानपरत्वात् ॥ अत एव तत्र कैयट आह ॥ अन्यत्रास्य दोषस्य सम्यगुद्धृतत्वादिति ॥
एवं हि वदन् तत्रत्यपरिहारस्याव्यापकतां एकाच्सूत्रोक्तस्यैवावश्यकतां चाभिप्रैति ॥ न च यथाश्रुतरूपपक्षे गृहीतमित्यादिसिद्धिः । अंगसंज्ञा
प्रवृत्तिवेलायां यथाश्रुतरूपस्यैव तत्र सत्वात् ॥ ग्राहिताटौ तु नैवं ॥ एकाच इति समाधानं तु णिज्भिन्नविषयकमेव । तस्मात् ॥ यङ्लुङंतात् णिजं
ताच्च यङंताच्च ग्रहेरिटः ॥ द्विधा त्रिधा चतुर्द्धा चेटी घीनेति व्यवस्थितं ॥ माधवग्रंथस्तु विहितविशेषणपक्षस्य मुख्यतां पक्षांतराणामभ्युच्चयतां
च परिकल्प्य कथंचिन्नेय इति प्रतिभातीति दिक् ॥ तस्य दोष इत्यादेरयमर्थः ॥ तस्य पूर्वत्रासिद्धे चेत्यस्य स्थलत्रये दोषः ॥ अतिप्रसक्तिः । तस्मा
त्तत्रस्थानिवद्भावस्य प्रतिप्रसवः कर्त्तव्य इत्यर्थः ॥ तेन वाक्यर्थे वास्यर्थे इत्यत्र स्कोरिति लोपो न ॥ निगार्यते ॥ निगाल्यते ॥ अचि विभाषेति
लत्वं सिद्ध्यति ॥ तथा माषवपनीत्यत्र णत्वं न भवति ॥ अल्लोपस्य स्थानिवत्त्वेन नकारस्य समासांतत्वाभावात् ॥ न चासत्यपि स्थानिवद्भावे
ङीबेव समासांतो न तु नकार इति वाच्यं ॥ ङीबुत्पत्तेः प्रागेव समास इति द्वितीये वक्ष्यमाणत्वात् ॥ एवं स्थिते तक्षयतेः क्विपि तक् ॥ रक्षयतेस्तु
रक् ॥ इत्यादि बोध्यम् ॥ अत्र हि संयोगादिलोपे कर्त्तव्ये णिलोपस्य स्थानिवद्भावान्न तत्प्रवृत्तिः ॥ संयोगांतलोपे तु स्थानिवद्भावनिषेधाद्भव
त्येवासौ ॥ गोरट् इति तु शुद्धात् क्विपि बोध्यम् ॥ यत्तु अचः परस्मिन्निति सूत्रे इदध्यत्रेति भाष्यमुपादाय कैयटेनोक्तं ॥ पूर्वत्रासिद्धे चेत्येतदत्र ना
स्ति ॥ तस्य दोष इत्यत्र संयोगादिलोपस्य संयोगोपलक्षितलोपोपलक्षणत्वादिति ॥ तन्न वास्तवं ॥ किंतु तत्रेत्यपूर्वपक्षिणोभिप्रायवर्णनमा
त्रं ॥ अत एव न पदांतसूत्रशेषे तेनैवोक्तं ॥ स्कंदयतेः स्कन् ॥ तक्षयतेस्तगिति ॥ यत्तु सिद्धकांडे स्कुत्वं धुट्त्व इति वार्त्तिकव्याख्यावसरे कैयटे

मा॰धा॰ तोक्तम्॥ मधुगितीष्यते मधुड्डितिप्राप्नोतिइति॥ ननु सकारोपदेशसामर्थ्यादिति बोध्यम्॥ सनुष्प्रोत नतीत्यत्र शितु गित्यस्याप्रवृत्त्या सकार
११० श्रवणितार्थइतिचेत्तर्हि क्वौ लुप्तमिति समाधेयं॥ कुस्मनोस्त्नोवेत्यत्र कूरिति माधवोदाहृतं संभ्यवोव तत्र सामर्थ्यविरहेण संयोगादिलोपाप्रवृ
त्तेरितिदिक्॥ स्यादेतत्॥ इह संयोगादिग्रहणं मास्तु॥ नचैवं वाक्यर्थमित्यादौ स्कोरितिलोपापत्तिः॥ स्कोः संयोगेसत्त्रझलोझलीत्यतोझ
ल इत्यनुवर्तते॥ तच्चोपसर्जनस्यापि संयोगेत्यस्य विशेषणम्॥ ननु प्रधानयोरपि स्कोः॥ अव्यभिचारात्॥ ततश्च झलंतो यः संयोगस्तदा
द्योः स्कोर्लोपः स्यादितिसूत्रार्थो दृष्ट बहिरंगतया यणो सिद्धत्वाद्॥ अतएव हि दध्यत्रेत्यादौ संयोगांतलोपो न प्रवर्तते॥ तथा चाष्टमेवार्तिकं॥
नवा झलोलोपाद्बहिरंगलक्षणाद्वेति॥ नचैवमपि काष्ठतक्॥ राष्ट्रकुइत्यादि न सिध्येद्वेति वाच्यं॥ अनभिधानात्तत्र क्विपस्व दुर्लभत्वात्॥
अनभिधानं च काष्ठशगेव नास्तीत्याष्टमिकभाष्यबलेन न्यायसाम्यान्निर्णीयत इति॥ अत्रोच्यते॥ कुस्मयतेः कूरित्यादि सिद्धये संयोगा
दीति वाच्यमेव॥ किंच॥ न कूरक्॥ इत्याद्यर्थमपि वक्तव्यं॥ न चानभिधानं॥ प्रमाणाभावात्॥ कैयटादिरुदाहृतत्वाच्च॥ न च काष्ठशगेव नास्ती
तिभाष्यं तत्र प्रमाणं॥ न्यायवैषम्यात्॥ तथाहि॥ काष्ठशकृस्यातेत्यत्र झल्यरोपः संयोगस्तदादेः ककारस्य लोपमाशंक्य तदुक्तं॥ तेन यत्र क
लोपप्रसक्तिस्तदभिप्रायकमनभिधानं॥ अतएव कांतेभ्यः क्विपनेत्येवं परतया तत्व्याख्यातं॥ न च णिजंतेभ्यः क्विपि कलोपप्रसक्तिरस्ति
॥ णिलोपस्यस्थानिवद्भावात्॥ न च पूर्वत्रासिद्धे चेति तन्निषेधः संयोगादिलोपे प्रति प्रसवस्य जागरूकत्वात्॥ तस्मात्संयोगादिग्रहणं कर्त
व्यमेवेति स्थितं॥ इदं त्ववधेयं॥ संयोगांतस्य लोप इत्यत्र नवा झलोलोपाद्बहिरंगलक्षणत्वाद्वेतिद्विधासिद्धांतव्यवस्थापनात्॥ कूरिति संयोगां राम
तलोपोपि दुर्लभः॥ तेन कुस्म् इत्येव भवति प्रथमपक्षे द्वितीयपक्षाभिप्रायेण तु माधवः॥ नन्वेवमपि लत्वग्रहणं व्यर्थं॥ निगाल्यत इत्यत्र सत्य ११०

पिणि लोपे प्रत्ययलक्षणे नलत्वसिद्धेः ॥ न च वर्णाश्रयत्वं ॥ धातोः स्वरूपेन तत्स्यपेक्षकार्यविज्ञानात् ॥ इदं च दांडिनायनादिसूत्रे भ्रौणहत्येन त्वनि
पातनेन ज्ञापयिष्यते ॥ किंच ॥ अंतरंगत्वादपि लत्वं स्फत्वं च मिति ॥ अत्रोच्यते ॥ तृणह इमित्यत्राचि नेत्यनुवर्तते ॥ हलीति निवृत्तं ॥ तथा च भत्
णेडित्यादिसिद्धये प्रत्ययलक्षणं नारंभणीयं ॥ किंतु नियमार्थं तदारंभ इति भाष्ये स्थितं ॥ इतरथा वृत्तिमात्रफलकं प्रत्ययलक्षणं सूत्रं वक्त
व्यानि तु स्थानिवत्सूत्रेण निर्वाह्याणि ॥ तत्र च प्रदीप्ये तीणि निवृत्तये अप्राधान्येनाप्यलाश्रयणे निषेधः स्थितः ॥ तथा चाचि प्रत्यये विधीय
माने लत्वं स्थानिवद्भावं विना दुर्लभमेव ॥ यद्प्यंतरंग — त्वाल्लत्वं इत्युक्तं तदपि न ॥ अकृतव्यूहपरिभाषया लत्वाप्रवृत्तेः ॥ किंच ॥ उपसर्गस्य
पताब्भितिसूत्रे पक्षद्वयं वक्ष्यते ॥ अयतिपरत्वं उपसर्गस्य विशेषणं रेफस्य वेति ॥ तत्राद्ये पक्षे पल्ययते इति न सिध्यति प्लायन इति तु न सिध्येत् ॥ ए
कादेशे कृते व्यपवर्गाभावात् ॥ उभयत आश्रये अंतादिवद्भावायोगाच्च ॥ तस्मात्तत्र स्थानिवद्भावेनैव व्यपवर्गो वक्तव्यः ॥ स च पूर्वत्रासिद्धे चेति
निषिद्ध इति लत्वे प्रतिप्रसवः सार्थक एव ॥ द्वितीयपक्षे तु पल्ययत इति न स्यात् ॥ यकारेण व्यवधानात् ॥ प्लायते इत्यत्रैव परं लत्वं स्यात् ॥ पूर्वत्रा
सिद्धे चेति स्थानिवत्वनिषेधे न तत्र रेफस्यायतिपरस्याविघातात् ॥ कृते त्वि हलत्वग्रहणे येन नाव्यवधानन्यायेन पल्ययते इत्यत्रापि लत्वं सि
ध्यति स्फुटं चेदं अष्टमे भाष्य एव ॥ तस्मादिह हलत्वग्रहणं कर्त्तव्यमेवेति स्थितम् ॥ णत्वग्रहणं तु व्यर्थं ॥ तथाहि ॥ माषवपनीति यावद्बहिरंगप
रिभाषयापि सिद्धं ॥ न च प्रह्निणोति प्रमीणीन इत्यादिसिद्धये तदिति वाच्यं ॥ अचः परस्मिन्निति सूत्रस्य प्रवृत्तिं विनापि एकदेशविकृतस्यान
न्यतया हि नुमीनेत्यस्य प्रवृत्तिसंभवात् ॥ न च ष्णांता षडिति सूत्रे वर्णितरीत्या प्रियाष्ट्न इत्यादिसिद्धये णत्वग्रहणमिति वाच्यं ॥ कार्यकालपक्षे
बहिरंगपरिभाषयैव तस्यापि सिद्धेः ॥ यथोद्देशपक्षस्तु न ग्रहीष्यते ॥ मत्यारब्धे येन णत्वेन सह फलसाम्यार्थं ॥ एतेन प्रियाष्ट्न इति णत्वाभ्युपगम

मा॰ धा॰ स्तोक्तम्॥ मधुगितीष्यते मधुङितिप्राप्नोतिइति॥ ननु सकारोपदेशसामर्थ्यादितिबोध्यम्॥ सन्ध्मोतनतीत्यत्रशितुगित्यस्याप्रवृत्त्यासकार
११० श्चरितार्थइतिचेत्तर्हि क्वौ लुप्तमितिसमाधेयं॥ कुस्मनोस्मोवेत्यत्रकूरितिमाधवोदाहृतं सम्यगेव तत्र सामर्थ्यविरहेण संयोगादिलोपाप्रवृ
त्तेरितिदिक्॥ स्यादेतत्॥ इह संयोगादिग्रहणं मास्तु॥ नचैवं वाक्यर्थमित्यादौ स्कोरितिलोपापत्तिः॥ स्कोः संयोगे सत्र झलो झलीत्यतोझ
लइत्यनुवर्तते॥ तच्चोपसर्जनस्यापि संयोगेत्यस्यविशेषणम्॥ ननु प्रधानयोरपि स्कोः॥ अव्यभिचारात्॥ ततश्च झलंतो यः संयोगस्तदा
द्योः स्कोर्लोपः स्यादितिसूत्रार्थो द्रबहिरंगतयायणोसिद्धत्वाद्वा॥ अतएव वहिद्ध्यत्रेत्यादौ संयोगान्तलोपो न प्रवर्तते॥ तथाचाष्टमेवार्तिकं॥
नवा झलो लोपाद्बहिरंगलक्षणाद्वेति॥ नचैवमपि काष्ठतक्॥ राष्ट्रकूइत्यादिनसिध्येद्देवेति वाच्यं॥ अनभिधानात्तत्र क्विपएव दुर्लभत्वात्
॥ अनभिधानं च काष्ठशगेव नास्तीत्याष्टमिक भाष्यबलेनन्याय साम्यान्निर्णीयत इति॥ अत्रोच्यते॥ कुस्मयतेः कूरित्यादिसिद्धये संयोगा
दीतिवाच्यमेव॥ किंच॥ न कूरक्॥ इत्याद्यर्थमपि वक्तव्यं॥ नचानभिधानं॥ प्रमाणाभावात्॥ कैयटादिरुदाहृतत्वाच्च॥ नच काष्ठशगेव नास्ती
तिभाष्यं तत्र प्रमाणं॥ न्यायवैषम्यात्॥ तथाहि॥ काष्ठशकृस्यातेत्यत्र झल्यरोपः संयोगस्तदादेः ककारस्यलोपमाशंक्य तदुक्तं॥ तेन यत्र क
लोपप्रसक्तिस्तदभिप्रायकमनभिधानं॥ अतएव कातेभ्यः क्विपनेत्येवं परतया तत्व्याख्यातं॥ नच णिजंतेभ्यः क्विपि कलोपप्रसक्तिरस्ति
॥ णिलोपस्यस्थानिवद्भावात्॥ नच पूर्वत्रासिद्धे चेतिनन्निषेधः संयोगादिलोपेप्रतिप्रसवस्यजागरूकत्वात्॥ तस्मात्संयोगादिग्रहणं कर्त
व्यमेवेतिस्थितं॥ इदं त्ववधेयं॥ संयोगान्तस्य लोप इत्यत्र नवा झलो लोपाद्बहिरंगलक्षणत्वाद्वेति द्विधासिद्धत्वव्यवस्थापनात्॥ कूरितिसंयोगां राम
तलोपोपिदुर्लभः॥ तेनकुस्मइत्येव भवतिप्रथमपक्षे द्वितीयपक्षाभिप्रायेण तु माधवः॥ नन्वेवमपि लत्वग्रहणं व्यर्थं॥ निगाल्यत इत्यत्र सस्य ११०

पिणि लोपे प्रत्ययलक्षणेन लत्वसिद्धेः ॥ न च वर्णाश्रयत्वं ॥ धातोः स्वरूपेण प्रत्यये कार्यविज्ञानात् ॥ इदं च दांडिनायनादिसूत्रे भ्रौणहत्येति त्वनि
पातनेन ज्ञापयिष्यते ॥ किंच ॥ अंतरंगत्वादपि लत्वं स्फुटमेवमिति ॥ अत्रोच्यते ॥ तृणह इमित्यत्राचि नेत्यनुवर्तते ॥ हलीति निवृत्तं ॥ तथा च भद
णेडित्यादिसिद्धये प्रत्ययलक्षणं नारंभणीयं ॥ किंतु नियमार्थं तदारंभ इति भाष्ये स्थितं ॥ इतरथा वृत्तिमात्रफलकं प्रत्ययलक्षणं सूत्रं वच
त्कार्याणि तु स्थानिवत्सूत्रेण निर्वाह्याणि ॥ तत्र च प्रदीव्यतीणि निवृत्तये अप्राधान्येनाप्यलाश्रयणेन निषेधः स्थितः ॥ तथा चाचि प्रत्यये विधीय
मानं लत्वं स्थानिवद्भावं विना दुर्लभमेव ॥ यदप्यंतरंग — त्वाल्लत्वं इत्युक्तं तदपि न ॥ अकृतव्यूहपरिभाषया लत्वाप्रवृत्तेः ॥ किंच ॥ उपसर्गस्य
पताभ्यितिसूत्रे पक्षद्वयं वक्ष्यते ॥ अयतिपरत्वं उपसर्गस्य विशेषणं रेफस्य वेति ॥ तत्राद्ये पक्षे पल्ययते इति सिध्यति प्लायन इति तु न सिध्येत् ॥ ए
कादेशे कृते व्यपवर्गाभावात् ॥ उभयत आश्रये अंतादिवद्भावायोगाच्च ॥ तस्मात्तत्र स्थानिवद्भावेनैव व्यपवर्गो वक्तव्यः ॥ स च पूर्वत्रासिद्धे चेति
निषिद्ध इति लत्वे प्रतिप्रसवः सार्थक एव ॥ द्वितीयपक्षे तु पल्ययत इति न स्यात् ॥ यकारेण व्यवधानात् ॥ प्लायते इत्यत्रैव परं लत्वं स्यात् ॥ पूर्वत्रा
सिद्धे चेति स्थानिवत्वनिषेधेन तत्र रेफस्यायतिपरस्याविघातात् ॥ कृते त्वि हलत्वग्रहणे येन नाव्यवधानन्यायेन पल्ययते इत्यत्रापि लत्वं सि
ध्यति स्फुटं चेदं अष्टमे भाष्य एव ॥ तस्मादिह लत्वग्रहणं कर्तव्यमेवेति स्थितम् ॥ णत्वग्रहणं तु व्यर्थं ॥ तथाहि ॥ माषवपनीत्तिबावद्बहिरंगप
रिभाषयापि सिद्धं ॥ न च प्रह्लिणोति प्रमीणीन इत्यादि सिद्धये तदिति वाच्यं ॥ अचः परस्मिन्निति सूत्रस्य प्रवृत्तिं विनापि एकदेशविकृतस्यान
न्यतया हिनुमीनेत्यस्य प्रवृत्तिसंभवात् ॥ न च ष्णांताषट्भितिसूत्रे वर्णितरीत्या प्रियपाष्ण इत्यादिसिद्धये णत्वग्रहणमिति वाच्यं ॥ कार्यकालपक्षे
बहिरंगपरिभाषयैव तस्यापि सिद्धेः ॥ यथोद्देशपक्षस्तु न ग्रहीष्यते प्रत्याख्येयेन णत्वेन सह फलसाम्यार्थे ॥ एतेन प्रियाष्ट इति णत्वाभ्युपगम

प्रा.मा. पूः पदमंजरीग्रंथोप्यपास्तः ॥ बहिरंगपरिभाषया अनित्यत्वेपी हृतद्प्रवृत्तौप्रमाणाभावात्॥ तस्मादिह णत्वग्रहणं वृथेति स्थितम्॥ प्रत्युतण
१२१ त्वेस्थानिवत्त्वाभ्युपगमेबाधकमप्यस्ति॥ तथाहि॥ अनितेरंत इतिसूत्रे ऽत इतियोगं विभज्य हे प्राण इति रूपसिद्धये परांतस्येतिप्रतिषेधंबाधि
तुमंत इतिसूत्रेणपदांतस्यानितेर्णत्वं विधीयत इत्येका व्याख्या। अंतशब्दं समीपपर्यायमाश्रित्य निमित्तसमीपस्थो योनितेर्नकारस्तस्य णत्वंनिमि
त्तसमीपस्थस्यानितेर्योनकारस्तस्यणत्वमिति च योगविभागं विनापिव्याख्यानद्वयं भाष्ये स्थितं॥ तत्र प्रथमपक्षे प्राणितीत्यादौ एकेनाकारेण
व्यवधानेऽपि वचनसामर्थ्याण्णत्वंप्रवर्त्तते द्वितीयपक्षे तुएकादेशस्यादिवद्भावाद्वेफाद्व्यवहितस्यानितेः संभवात्प्रवर्त्तते॥ पर्यनितीत्यत्र तुवर्ण
द्वयेनैकेनच व्यवायात्पक्षद्वयेपिणत्वंनप्रवर्त्तते इतिस्पष्टमष्टमे॥ यदिचेहणत्वग्रहणं क्रियेत तर्हि पर्यनितीति वत्प्राणितीत्यत्रापिद्वयेनैकेन वा
वर्णेन यथासंभवंव्यवधानाण्णत्वंनस्यात्॥ नचवचनसामर्थ्यात्स्थानिवद्भावकृतंव्यवधानमाश्रयिष्यते वृत्रघ्न इतिकुत्ववदेवेति वाच्यं। निरणि
तिदुरण्तीति इत्यत्र चरितार्थत्वात्। नचैवंनिर्दुरोरनितेनित्येव ब्रूयात्॥ नत्वनितेरंत इतिसामान्यलक्षणंप्रणयेत् इतिवाच्यं॥ आवृत्तिर्माश्रिस हे प्रा
णीत्यत्र णत्वस्य प्रतिप्रसवार्थं निर्दुरोरित्यपेक्षया अंत इत्युक्तावक्षरलाघवानुरोधाच्च सामान्यलक्षणप्रणयनसंभवात्॥ तस्मादाश्रमिकभा
ष्यपर्यालोचनेनेहणत्वग्रहणं नकर्त्तव्य इतिनिर्णीयते॥ अतएवव्यूढोरस्केनेत्यत्र णत्वंन॥ अन्यथा विसर्गस्याश्वेन तदादेशस्य सस्य स्थानि
वद्भावाण्णत्वंस्यात्॥ इहणत्वग्रहणस्यप्रयोजनाभावस्तूक्त एव॥ ततश्च॥ तस्यदोषः संयोगादिलोपलत्वयोरित्येव वाच्यम्॥ वस्तुतस्तु न वाच्यं॥
पूर्वत्रासिद्धे चेतिहि असिद्धत्वादेवन्यायसिद्धं इत्युक्तं॥ तच्चासिद्धत्वमनित्यं॥ अधुनेतिवदमुनेति वाच्येन मुन इत्युक्ते नेति योगविभागात्॥ नु प्रा.मा.
टीतिवाच्ये नामीति लिंगाच्च॥ अनभ्य इत्यादेरंगस्येत्यनेनव्यावृत्तौसत्यामपिअक्षण्वत इत्यादौ हि दीर्घवारयितुं हिना मीत्युक्तं ॥रुधादिभ्यः श्नम् १२१

श्नाम्नलोप इतिसूत्रद्वये भाष्यकैयटाद्यालोचनेनारंभसामर्थ्यात्संनिपातपरिभाषाया इवासिद्धत्वस्याप्यविशेषाद्बाधे प्राप्ते नामीत्युक्तिरिति
चेत्॥न॥कृतितुग्ग्रहणादिनासंनिपातपरिभाषाया अनित्यत्वज्ञापनात्सामर्थ्याद्बाध इति पक्षेप्यक्षणं तदित्यादौ उभयबाधे गौरवाच्च॥तस्मादनि
त्यताज्ञापनार्थमेवतत्॥तेनसिद्धकांडमपिसंगृहीतं भवति॥एतेनरामोरामेभ्य इत्यादौ रुत्वस्यासिद्धत्वाद्रोरुकारस्येत्संज्ञालोपौ कथं स्यातामिति
तदपिसमाहितं॥प्रत्ययः परश्चेत्यादिलिंगाच्च॥यत्तु अनुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रत्यसिद्धत्वेनेति॥तन्न॥तदर्थमूलमित्यादौ हशि चे
त्यस्यव्यावृत्तः अतोरोरित्यत्रसानुनासिकस्यैवनिर्देशाभ्युपगमेनचारितार्थ्यात्॥रामइत्यादावपिसानुनासिकश्रवणस्यापाद्यमानतयाचारिता
र्थ्यस्यस्पष्टत्वादिति दिक्॥तेनसंयोगादिलोपलत्वयोरसिद्धताविरहात्स्थानिवत्त्वं भविष्यतीति सकलेष्टसिद्धिः॥ ॥द्विर्वचनेचि॥ ॥रूपातिदेशोयं
॥द्वित्वनिमित्तेचि अजादेशः स्थानिवद्रूपं लभते द्वित्वे कर्तव्ये॥चक्रतुः॥चक्रुः॥द्वित्वनिमित्तेनाज्विशेषणादिह न॥दुद्यूषति॥सुस्यूषति॥न
स्यूठ्द्वित्वनिमित्तं॥ ॥तन्वेवंचक्रतुरित्यणोपिस्थानिवद्भावोनस्यात्॥अतुसो द्वित्वनिमित्तत्वेपि अकारस्यातथात्वात्॥सूत्रंतुचक्रे इ
त्यादौसावकाशमिति॥सत्यं॥इह निमित्तशब्देन साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकत्वमाश्रीयते न तु साक्षादेवेत्याग्रहः सूत्रस्यानुरोधा
त्॥किंच॥निमित्तशब्दोनास्त्येव॥किंतुलक्षणयावा द्विरुच्यतेस्मिन्निति द्विर्वचनमिति व्युत्पत्त्या वा द्विर्वचनमस्त्यस्मिन्निति अर्शआद्यचा वा द्विर्व
चननिमित्तं लब्धव्यं॥तच्चप्रकारत्रयं॥साक्षात्परंपरासाधारणे प्रयोजके सुवचं॥एतच्च ठस्येक इति सूत्रे कैयटे स्पष्टं॥अतएव ऊर्णोतेः सनिसनी
वंनेतीट्पक्षे विभाषोर्णोरिति ङित्वविरहे ऊर्णुनविषतीति सिद्धं॥सनं तस्य द्वित्वविधानेपि सनो द्वित्वप्रयोजकत्वेन तस्मिन् गुणावादेशयोर्द्वित्वे कर्त
व्ये स्थानिवद्भावात्॥तदुक्तं॥तद्भावभावितामात्रेणेह निमित्तत्वमिति॥विस्तृतस्तु द्विर्वचनाक्षिप्तः प्रत्ययो अचीत्यनेन विशेष्यते॥परस्मिन्निति अनु

श॰ कौ॰ १३२ वर्त्तते॥ अमीषां मध्ये देवदत्तात्परमानयेत्युक्ते यथा सजातीयेन मनुष्यांतरेणाव्यवहितः पर आनीयते॥ तथेहापि प्रत्ययांतरेणाव्यवहितः परो गृह्यते॥ तेन द्वित्वनिमित्ते अजादौ प्रत्यये प्रत्ययांतरेणाव्यवहिते सति योऽजादेशः स स्थानिवत्स्यादिति सूत्रार्थः॥ एवं च चक्रतुरित्यादौ नकाप्यनुपपत्तिः॥ वक्ष्यमाणज्ञापकबलेन णिचाव्यवहिते प्रवृत्तावपि दिदवयिषतीत्यादौ अनेकप्रत्ययव्यवधानादप्रवृत्तिः॥ अपीप्यदित्यत्र वर्णव्यवधानेपि प्रत्ययांतराभावात्प्रवृत्तिः॥ अनुवादे परिभाषानुपस्थानेपि निर्दिष्टपरिभाषाकर्त्तव्यस्य निर्वाह इति बोध्यम्॥ अत एवेह परस्मिन्नित्यनुवर्त्तत इति स्पष्टमाकरः॥ तथा हि पूर्वत्रेत्येतेनैव प्रत्ययाक्षेपं वदन् णिज्भिन्नेनाव्यवहिते ज्ञापकस्याप्रवृत्तिं ब्रुवन्कैयटोपि एवदभिप्रैति॥ ऊर्णुनविषतीत्यादिसिद्धये तु तद्भावभावितामात्रेण निमित्ततेति स्वीक्रियत एवेत्यवधेयं॥ नन्वेवमरिरिषतीति न सिद्ध्येत्॥ ऋधातोः सनि स्मिपूङ्रंज्वशां सनि इति इटि कृते इस शब्दनिमित्तकस्य गुणस्य स्थानिवद्भावे अजादेर्द्वितीयस्येति इसो द्वित्वप्रसंगात्॥ इष्यते तु रिस शब्दस्य द्वित्वं॥ अत्रोच्यते। नहि कार्यी निमित्ततयाश्रीयते इति दीधीवेवीटामित्यत्रोपपादितत्वान्नेह इस शब्दो निमित्तं॥ अतो न स्थानिवद्भावः॥ न चैवं सनंतस्य कार्यित्वादूर्णुनविषतीत्यपि न स्यादिति वाच्यम्। मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वलाभात्॥ तत्र तु द्वितीय एकाच् द्वित्वरूपं कार्यमनुभवति॥ न तु सन्। अरिरिषतीत्यत्र तु रिस शब्दस्यैव कार्यभाक्त्वमिति वैषम्यात्॥ नन्वेवं अचीत्यस्य जेघ्रीयते देध्मीयते इति व्यावर्त्यं न संगच्छते॥ घ्रीय् ध्मीय् इति द्वितीयाजवधिकस्यैकाचः कार्यितया यङोपि द्वित्वनिमित्तत्वाभावात् इति चेत्॥ सत्यं॥ अधिजगे इत्येवान्न ग्रहणव्यावर्त्यमस्तु॥ तत्र हि गाङ् लिटीति द्विल्कारकनिर्देशमाश्रित्य लावस्थायामेव गाङादेश इति भाष्य एव स्पष्टं॥ इदं च वार्त्तिकमतमनुसृत्योक्तं॥ तत्र लिटि लिङि इत्यादौ गां परसप्तमीत्वाभ्युपगमात्॥ भाष्यमते तु आर्द्धधातुकीयाः सामान्येन भवंतीत्यभ्युपगमाल्लिटीसा राम १३१

द्ययोपिविषयसप्तम्यएवेत्युक्तंस्थानिवत्सूत्रे।तन्मतेतु अचीत्यस्यजग्लेइत्यादिव्यावर्त्यमवोध्यम्॥ तथाहि॥ आदेचइतिसूत्रेःशीतिपरसप्त-
मीतिपक्षेशिदितिकर्मधारयाश्रयणात्यस्मिन्विधिस्तदादावल्ग्रहणइत्यस्यप्रवृत्त्या आदिशितोन्यस्मिन्परेविधीयमानत्वंलावस्थायांक्रि-
यते॥अतोनस्थानिवत्॥नच अंतरंगत्वान्निर्बाधदिषुएशि चकृते आत्वंस्यात्तथाचस्थानिवत्त्वंदुर्वारं इतिवाच्यं॥नसंप्रसारणेसंप्रसारणं।ह्लिटि
वयोयइतिह्लिकारकनिर्देशमाश्रित्यतंचतत्रानुपयुक्तत्वादिहानुवर्त्यह्लिटितुलावस्थायामेवेति आत्वविधौव्याख्यानात्।कथंतर्हिजेघ्रीयते
देध्मीयते इति भाष्यवृत्त्यादिषुप्रत्युदाहृतमितिचेत्॥ प्रातिशाख्यरीत्येत्यवेहि॥ तथाहि॥ अनुस्वारोव्यंजनंचाक्षरांगंइत्युक्त्वास्वरांतरेव्यंजना-
न्युत्तरस्यैवेतितत्रसूत्रितं॥एवंचनेनिजत्यनेनिजुरित्यादौएकाच्कस्यधातोःसंपूर्णस्य द्विर्वचनादभ्यस्तात्परमझावजुसादिसिध्यतु॥ह्व-
केतुमध्यवर्तिनांहलांउत्तरांगत्वात्स्वयमाजंतमेवद्विरुच्यतां॥पपादरिद्रातौदइति॥जागर्त्तौजाइति॥नचैतावताक्वचिद्रूपेनिष्टमापद्यतेयेन
प्रातिशाख्यपरिभाषामुपेक्ष्यनटभायौवव्यंजनानिइतिवाश्रित्यदर्जागृइत्यादिद्विरुच्येत॥अतएवचतुरंच्छयतावाद्यौसरलोपश्चेतिसं-
गच्छतेइतिदिक्॥यदातुषष्ठभाष्यवार्त्तिकरीत्याद्वितीयाजवधिकएकाच्गृह्यते॥गाङ्लिटीतिचविषयसप्तम्याश्रीयते।अनैमित्तिकमा-
त्वंशितितुप्रतिषेधइतिवाअशितीतिविषयसप्तमीवाआश्रीयतेतदाजेघ्रीयतेधिजगेजग्लेइतित्रिविधस्यापिव्यावर्त्यस्यासंभवादचीत्य-
स्यफलंकिमितिविभावनीयंसूरिभिः॥स्यादेतत्॥भसेःक्सौघस्मिभसोर्हलिइत्युपधालोपेकृतेद्वित्वंमाभूदित्येतदर्थमज्ग्रहणंभविष्यती-
तिचेत्॥सत्यसतिवाद्वित्वेश्वानितिस्कृतौविशेषाभावात्॥ ननुदुर्लभोपिविशेषःसूत्रस्यपरशांपतिदुर्वारइतिचेन्न॥रातिबिभियाणिवीरवक्षतुद्ध-
त्याराक्षिवद्वित्वाभावसंभवात्॥वक्ष्यतिहिषष्ठेल्लिटिधातोरितिसूत्रे॥अनभ्यासग्रहणानर्थक्यंचछंदसिवावचनादिति॥ नचैवमपिपासिक-

द्वित्वं स्यादेवेति वाच्यं॥ दृष्टानुविधानस्यैव छंदसि कर्त्तव्यत्वात्॥ अत एव हि उर्च्छन्न इत्येव सिद्धे नित्यं छंदसि इति सूत्रं निष्फलमित्यभियुक्ताः॥
लोके तु भाष्यमते कसुईलेभ उपधालोपश्च छांदस एव तद्वंजेघ्रीयते धिजगे जग्ले इत्येतत्सिद्धये क्रियमाणं अज्ग्रहणमेवेह रूपातिदेशत्वे प्रमा
णं॥ कार्यातिदेशपक्षे हि घ्रीगाग्लाइत्येषामेव भाव्यं द्वित्वेनेति किं तेन॥ तथा च वार्त्तिकं॥ अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्येति॥ देध्मीयते
शाशाय्यते इत्यपि जेघ्रीयते इत्यनेन समानयोगक्षेममुदाहरणं॥ ईघ्राध्मोरिति ईकारः॥ अयङ् यि क्ङितीति शीङो यङादेशः॥ अचीत्यस्य प्र
त्याख्यातपक्षे तु लस्यानुरोधादेव शब्दाधिकारमाश्रित्येह रूपातिदेशो व्याख्येयः॥ पूर्वसूत्रादन्न इति षष्ठ्यं तस्यानुवृत्तिरिह किमर्थेति चेत्॥ शुशु
वतुरित्यादिसिद्धये इति गृहाण॥ तथा हि॥ विभाषा श्वेरिति सूत्रं यद्यपि शुशावेत्यादौ पित्सु सावकाशं तथापि शूनइत्यादौ चरितार्थस्य वचिस्व
पीत्यस्य बाधकमेव॥ परत्वात्॥ लिट्यभ्यासस्योभयेषामित्यस्य तु न बाधकं॥ श्वयत्यनभ्यासविषयकस्य विधेर्निरवकाशत्वात्॥ अत एव
विभाषा श्वेरिति सूत्रे श्वेर्लिट्यभ्यासलक्षणप्रतिषेध इति वार्त्तिकमारब्धं॥ लिट्यभ्यासस्येति सूत्रे अश्वयतीनामिति पूरणीयमितितदाशयः॥
अन्यथा हि विहितप्रतिषिद्धतया विकल्पात् शुश्वाय शुश्वियतुरित्यनिष्टमपि पक्षे प्रसज्येत॥ एवं स्थिते द्विर्वचनेचीत्यत्राच इत्यस्याननुवृत्तौ
शुशावेत्यत्र द्व्यावादेशयोरिव संप्रसारणस्यापि स्थानिवद्भावः स्यात्॥ तथा च शिशाव शिशुवतुरित्याद्यनिष्टमापद्येत॥ न च संप्रसारणं त
दाश्रयं च बलवदिति निबाद्यवस्थायामेव संप्रसारणप्रवृत्तेरचीति नास्तीति वाच्यम्॥ एवमपि व्यतिशुशुवाते इत्यादौ दोषध्रौव्यात्॥ न च
विभाषा श्वेरिति लावस्थायामेव प्रवर्त्तत इति वाच्यं॥ एवमपि ईजाते ईजाथे इत्यादौ दोषतादवस्थ्यात्॥ लावस्थायां कित्वाविधानेतत्र
संप्रसारणाप्रवृत्तेः॥ न च कित्वमपि प्रवर्त्ततामिति वाच्यम्॥ अंतरंगैरस्तिवादिभिर्बाधितत्वात्॥ किं च स्वापेश्चङीति संप्रसारणे असूषुपत्

इत्तीष्यते ॥ स्थानिवद्भावे तु सति न संप्रसारण इति निषेधादभ्यासे उवर्णो न श्रूयेतेति दिक् ॥ तंत्रावृत्त्यैकशेषाणामन्यतमाश्रयणादिह काला
वधारणमपि क्रियते ॥ तथा च व्याख्यातं ॥ द्वित्वे कर्त्तव्ये इति ॥ तेन चक्रतुरित्यादावुत्तरदले पुनर्यथायथं यणादयो भवंत्येव ॥ अन्यथा प्रकृति
भाव एव स्यात् ॥ निन्यतुरित्यत्र तु प्रथमप्रवृत्तस्यापि इयङो द्वित्वकाले ऽपहारात्पुनः प्राप्तोऽप्ययमनेकाच इति यणा बाध्यते ॥ यद्वा ॥ पूर्वमपी
यङ् न प्रवर्त्तते ॥ प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते इति न्यायात् ॥ यद्वा ॥ आभीयत्वेनेयङोऽसिद्धत्वाद्यण् भविष्यति ॥ स्यादे
तत् ॥ स्थानिवत् ग्रहणं निवर्त्त्य नञं चानुवर्त्त्य द्वित्वनिमित्ते ऽचि अच आदेशो न स्याद् द्वित्वे कार्ये इत्येवं व्याख्यायतां ॥ एवं हि सति स्थानिव
दिति[illegible]धिकारक्लेशोऽपि न भवतीति ॥ सत्यं ॥ अस्मिन्नपि पक्षे नञः स्वरितत्वं प्रतिज्ञातव्यं ॥ स्थानिवच्छब्दस्य तु क्लृप्तमेवस्त्वदिति लाघवं ॥ अ
स्तु वा व्याख्या द्वयमपि फले विशेषाभावादिति दिक् ॥ नन्वेवमपि णौ स्थानिवद्वचनं कर्त्तव्यं ॥ नुनावयिषति चुस्नावयिषति तुष्टावयिषतीत्यस्या
र्थे ॥ अत्राहुः ॥ ओः पुयण्ज्यषु वचनं ज्ञापकं णौ स्थानिवद्भावस्येति ॥ अस्यार्थः ॥ यौतेः पूङश्च सनीवंतेति स्मिपूङ्रंज्वशामिति सूत्राभ्यां इ
ट् कृते यियविषति पिपविषते इत्यत्र द्विर्वचनेऽचीति स्थानिवद्भावाद्यकारपकारयोरवर्णपरयोः परतोऽप्यभ्यास उकारो लभ्यते ॥ तस्य चे
कारादेशविधानेन ओः पुयण्सूत्रे पकारयकारग्रहणं चरितार्थं ॥ तथा च वर्गग्रहणं प्रत्याहारग्रहणं जग्रहणं च ज्ञापकं द्वित्वनिमित्तस्याचो णि
चाव्यवधानेऽपि स्थानिवद्भावः प्रवर्त्तत इति ॥ तं विना अवर्णपरेषु पुयण्जिषु परेषु उवर्णान्तस्याभ्यासस्य दुर्लभत्वात् ॥ येन नाव्यवधानात्तु णिचै
वैकेन द्वित्वनिमित्तस्याचो व्यवधानमाश्रीयते ॥ तेन निनवनीयिषतीत्यादौ न स्थानिवत् ॥ ल्युट्क्यज्भ्यां व्यवधानात् ॥ एवं णिजंताल्ल्युट्
क्यच्सु न स्वपि न स्थानिवत् ॥ निनावयिषतीत्यादि ॥ न हि णौ कृते स्थानिवदिति वचनं अस्ति किंतु ज्ञाप्यमानः स्थानिवद्भावो लाघवादेकेने

श० कौ० वव्यवधानं इत्युक्तं इह त्वनेकेनव्यवधानं स्पष्टमेव॥ यद्यप्यनूर्ध्वंशासनादेशविशेषणत्वान्निर्दिष्टपरिभाषानोपतिष्ठते॥ तथापि अत्रैवौपश्लेषिकसप्तमी
१३४ षिकसप्तमीबलादेव तदर्थः पर्यवस्यति ईषद्धि प्रकृष्टलाभेचनात्यन्तं विप्रकृष्टस्य ग्रहणमिति बोध्यम्॥ वस्तुतस्तु परस्मिन्नित्यनुवर्तते इति
सूत्रोपक्रमएवोक्तं॥ एवंचाबीभवत्॥ अमीमवत्॥ अरीरवत् अलीलवदित्यादि॥ बुभूषुविभावयिषतीत्यादिषुच ओः पुयणितीत्वं प्रवर्त्तते॥ ज्ञापनफलं तु
यत्र ओः पुयणित्यस्याप्राप्तिस्तत्रबोध्यम्॥ तद्यथा॥ चुस्रावयिषति॥ उडुरिवाचरति उडुवति॥ उडवतेर्णौसन्॥ उडुडावयिषति॥ चङि
॥ औडुडवत्॥ तुतावयिषति॥ अतूतुवत्॥ सौत्रोयंतुरुस्तुशमीत्यत्रनिर्दिष्टः॥ ऊर्णुनावयिषति॥ और्णूनवत्॥ चिस्फुरोर्णौ इत्यात्वस्य स्था
निवद्भावात्पुस्फारयिषति॥ अपुस्फरत् इत्यादि बोध्यम्॥ तुल्यजातीयापेक्षं च ज्ञापकं॥ तेन अवर्णपरे हल्येवस्था निवृत्तः॥ तेनाचिकीर्त्तदि
त्यादौ नातिप्रसंग इति भाष्ये स्थितम्॥ यत्तु काशिकायां पूर्वत्रासिद्धमिति सूत्रेवहेर्निष्ठांनाण्णिचि चङि औजढदित्युदाहृत्यचिन्त्यं तस्य तु ओ
जिढदित्युक्तं॥ तत्रैवन्यासेपिणौकृतस्य टिलोपस्यस्थानिवद्भावइति व्याख्यातं तदुभयं भाष्यविरुद्धत्वादुपेक्ष्यं॥ अचिकीर्त्तदित्यस्य सि
द्धये अवर्णपरधात्वक्षरविषयकमेवज्ञापकमिति स्पष्टं भाष्ये॥ प्रकृतसूत्रप्रत्याख्यानपरेवार्त्तिके अव्याप्तिरूपदोषोद्भावनपरेण ओदौदादे
शस्यचुटुतुशरादेरित्यादि भाष्येणाप्ययमर्थो लभ्यत इत्यनुपदमेवस्फुटीकरिष्यते॥ अतएव स्रुष्विकाश्रुष्कजंघाचस्ताभिमानौजिढत्तथेति
वैयाघ्रपद्यवार्त्तिके जिशब्द एव पठ्यते॥ जशब्दपाठस्तु काचित्कः प्रामादिकएवेति बोपदेवो दुर्गसिंहादिसंमतिप्रदर्शनपूर्वकं कामधेनौ स्थापितवान्॥ वैयाघ्रपद्यवार्त्तिकं तु पूर्वत्रासिद्धमिति सूत्रस्य प्रयोजनसंग्रहपरं तच्च तस्मिन्नेव सूत्रे व्याख्यास्यामः॥ एवंचाकपदे लक्षणे चेत्सस्य राम०
चङि सणि क्ङिहित्वेनांचिकदित्येवरूपं नत्वांचकदिति॥ नचैवमदंतपाठवैयर्थ्यंस्यादिति वाच्यं॥ तत्सामर्थ्यादल्लोपस्याप्रवृत्तौ सत्यां वृद्धिपुकोश्च १३४

सतो रंकापयतीति रूपाभ्युपगमात्।। नन्वेवं सत्यं कपतीति रूपं न स्यादिति वाच्यम्।। सूचिसूत्रीत्यादिवार्त्तिके सो सूच्यते सो सूत्र्यत इत्यादिभाष्योदाह
रणेन पसे अल्लोपस्याभ्युपगमात्।। सूचिसूत्र्यादपोत्यदंताः।। अत एवानेकाच्त्वेन षोपदेशत्वाभावान्न षत्वं।। षोपदेशलक्षणे हि एकाच्त्वं विवक्षितं इ
ति माधवीये स्पष्टं।। एतच्च सेगादिपर्युदासात् ष्वष्क स्विदादिसाहचर्यात् सो सूच्यते इत्यादिभाष्योदाहरणाच्च निर्णीयत इति वक्ष्यते।। एवं वाक्यशे
षं समर्थयिष्यामहे प्रार्थनाध्यवसायैः संप्रश्नप्रार्थनेषु लिङ् इत्यादिप्रयोगाश्च हमानं।। तदेतत्सकलमभिसंधाय अदंतत्वं सार्थ्यक्याय वा अल्लोप
इत्याहुः। उक्तं च कामधेनौ।। अग्लोपित्वं स्थानिवत्त्वं चादंतत्वप्रयोजनं।। यत्र त्वेतेन विद्येते तत्राल्लोपविकल्पनमिति।। कथयत्याद्यभिप्रायेण पू
र्वोक्तं [illegible] अन्यत्याद्यभिप्रायं तूत्तराद्वमिति विवेकः।। नन्वांचिकदित्यत्र दीर्घो लघोरिति प्राप्ते नग्लोप इति निषेधेनाकारश्चरित्वर्ध इति चेन्न। अच
परेणौ यदंगं तस्य योभ्यास इति सूत्रार्थस्य व्यवस्थापनात्।। इह त्वंगावयवस्याभ्यासो न त्वंगस्य।। एतच्चोर्णुधातौ माधवग्रंथे स्पष्टं।। अत एव
औटिटत् इत्यादौ न दीर्घः। यत्तु दीर्घविधौ हलादेरिति विशेषणं कौमुद्यां दत्तं तन्निर्मूलं।। और्णुनवदित्यादेः सिद्धावपि सन्वल्लघुनीत्यत्र चङ्
परे इत्यंगस्य विशेषणं लघोर्नेति मतभेदे नेष्यमाणे अचिचकासद् चचकासदिति रूपद्वयेप्यति प्रसक्तं च।। दीर्घविधौ चङ्परइत्यस्य लघुविशे
षणतामाश्रित्यार्थसिद्धकथनं न दिति वास माधेयं। सिद्धांते तु माधवोक्तरीत्या ऊर्णावयतेरिव चकासयतेरपि दीर्घाभावः स्पष्ट एवेति दिक्।।
एतच्च सूत्रवार्त्तिककारः प्रत्याचख्यौ।। तथाहि।। षष्ठे द्वित्वप्रकरणे [illegible] विप्रतिषेधः पठ्यते।। द्विर्वचनं यणयवायावाल्लोपोपधालोपणिलोपे
किकिनोरुत्वेभ्य इति।। तथा च दध्यत्रेत्यादौ सावकाशो यण्।। चयनं चायकं लवनं लावक इत्यादौ चायवायावः।। गोदः कंबद इत्यादावाल्लो
पः श्लेष्मघ्न इत्यादावुपधालोपः कारणा हारणेत्यादौ णिलोपः [illegible] इत्यादावुत्त्वं चेत्येतानि निरवकाशानि भिदतुरित्यादौ सावकाशेन द्वित्वेन पूर्वविप्र

श·कौ· तिषेधाद्बाध्यंनेतेनचक्रतुः चिचायलुलावचिचपिथ लुलविथपप्रथुः तस्थतुः जग्मतुः जघ्नतुः आटिटत् ननुरिः जगुरिरिआदिसिद्धं नन्वेवंनि
१३५ न्यतुरितिनस्यात्॥इयङ् इह अपरिगणितत्वादितिचेन्न॥एरनेकाचइतियणेह भाव्यमितिप्रागपीयङोप्रवृत्तेः प्रकल्प्य चेति न्यायात्॥
तस्माद्द्विर्वचनेचीतिसूत्रंविनापिसर्वंसिद्धमिति॥ भाष्यकारास्तुसूत्रमेतमर्थयंते॥तथाहि॥ विप्रतिषेधस्तावदयुक्तः॥ आल्लोपादीनांनित्यत्वात्
॥द्वित्वस्यानित्यत्वेनातुल्यबलत्वात्॥किंचपूर्वविप्रतिषेधेसर्वत्रवचनस्यारंभणीयत्वादिहतुसुतरांतथेतिक्वलाघवं॥अपिच॥क्रियमाणम
पिवचनंयद्यंतरंगाणामपिबाधकंतर्हिनिनंवनीयिषति इत्यादावप्यभ्यासेउकारःश्रूयेत॥अथात्रांतरंगत्वादवादेशः॥वचनंतुनांतरंगाणां
बाधकंकिंतुनित्यानामेवेतिब्रूयाः॥एवमपिचुक्षावयिषतिइत्यादौवृद्ध्यावादेःप्रवर्तनात्अभ्यासेइत्वंस्यात्॥तथाचतद्बाधनायउत्त्वंविधे
यं॥तथाचत्वयाइत्थंन्यासःकर्त्तव्यः॥उत्परस्यातः॥तिच॥ओदौदादेशस्यचुटुतुशरादेरिति॥अभ्यासस्येतिवर्त्तते॥ओदौतोरादेशोयस्मि
न्अंगेपरस्ययोभ्यासश्चुटुतुशरादिस्तस्ययोकारस्तस्यउत्स्यादित्यर्थः। यथा॥ चुक्षावयिषतिउडुडावयिषतितुनावयिषतिशुश्नावयिषति
शुश्रावयिषति पुस्फारयिषतिइति॥अत्रचिस्फुरोर्णावित्यात्त्वं॥यद्यपीहरवयःशेषकृतेशरादित्वंनास्तितथाप्यभ्याससंज्ञाप्रवृत्तिकालेस्त्ये
वेत्यवधेयं॥ओदौदादेशस्येतिकिं॥चायृपूजायांचिचायिषति खदस्थैर्येचिखदिषति॥चुटुइत्यादेःकिं॥बिभावयिषति॥अतइतिकिं॥ऊर्ज्जुं
अणुंऋतुंअंसुंचाख्यत्॥आर्जिजत्॥आणिणत्॥आर्त्तितत्॥आंशिशदित्यत्रपरत्वाद्वृद्धौसत्यांटिलोपेसणिऋकस्यद्वित्वेकृतेमाभूत्॥अ
भ्यासस्येतिकिं॥चुटुतुइत्यादितदंगस्यातोवाविशेषणंस्यात्॥उभयथापिदोषः॥शीतंलुनातिशीतलूःसूर्यः॥तमाख्यातुमिच्छतिशिशी राम·
तलूपिषतीत्यत्रतकारादुत्तरस्यातउत्वसंगात्॥नन्वेवमप्यौजढदांचकदित्यादावभ्यासेऽकारश्रवणार्थयत्नांतरमास्थेयमेवेतिगौरवांत १३५

रंबार्त्तिककारंभनिकुतोनापाद्दितमितिचेन्न॥ तत्रेकारएवेष्टइत्युक्तत्वात्॥ सजातीयापेक्षंहिसिद्धांतेपित्तापकं॥ अन्यथाअचिकीर्त्तदित्यत्रा
भ्यासेःकाभ्रवणापत्तेः।तस्माद्वार्त्तिककृतावचनद्वयमपिकर्त्तव्यंस्यादितिस्थितं॥ तथाओःपुयण्जीतितृतीयमपिकर्त्तव्यमेव॥पिपविषतेयि
यविषतिजिजावयिषतीत्यत्रइत्वंयथास्यात्॥तथाहि॥ पुयुइत्यनयोःसनिइटिपरत्वाद्गुणेकृतेपूर्वविप्रतिषेधेनावादेशात्पूर्वंहित्वमितिद्वित्वं
वक्तव्यमेव॥ तथाजुचंक्रम्येत्यत्रनिर्दिशात्सौत्राज्जुधातोर्ण्यंतात्सनिजिजावयिषतीत्यत्रचुटुतुशरादेरित्युत्वेप्राप्तेतद्वाधनायइत्वंवक्तव्यं
॥नचतत्रचकारमेवपठिष्यामिनतुजुशब्दंइतिवाच्यं॥ गुङ्घुङ्ध्वनौ॥ आभ्यांणिजंताभ्यांचङिसनिच अजूगवत् अजूघवत्॥जुगावयिषतिजु
घावयिषतीत्याद्यसिद्धिप्रसंगात्॥ किंच॥ दिदवनीयिषतिइत्यत्रचुटुतुशरादेरित्युत्वंस्यादितितद्वारणायवचनांतरमास्थेयं॥ अथवासन्यतइति
सूत्राद्गुणोयङ्लुकोरित्याद्यष्टसूत्र्याविछिन्नमपिसन्ग्रहणंमंडूकप्लुत्यानुवर्त्यसूत्रमतोऽकरीत्यायेननाव्यवधानन्यायेनणिजंभि[illegible]
उत्त्वंनेतिसमाधेयम्॥एवमपितनुशब्दादाचोरक्विबंताद्धेतुमण्णौसत्यसतिवासन्॥तत्रतितनविषतितितनावयिषतीत्यत्रा[illegible]उत्त्वंस्यात्॥ त
द्वारणायओदौदादेशस्येतिवार्त्तिकमन्यथैवव्याख्येयं॥ तद्यथा॥ अभ्यासस्येत्यवयवषष्ठी॥ओदौदित्यादिस्तुसंबंधसामान्येषष्ठी॥ उभय
मप्यनोविशेषणं॥तदयमर्थः॥ अभ्यासस्यावयवभूतस्तथाओदौदादेशस्यपश्चायथंअवयवआदेशौवायोःतस्योद्भवतिइति॥ चुस्रावयतीत्यत्र
यवः॥पु स्कारयिषतीत्यादेशः॥ तथाचाङ्ग्रहणमपिसार्थकं॥ अन्यथाआटिटदित्यादिसिद्धयेचाङ्परेणौयदंगंतदवयवेलघौसन्वदतिदेश
दार्जिजदित्यादौअतिप्रसंगविरहादतइतिव्यर्थंस्यादितिदिक्॥ तथाचसूत्रमतापेक्षयावार्त्तिकमतेमहद्गौरवमिति॥स्यादेतत्॥ मास्तुभ
कृतसूत्रंमाचवार्त्तिकं॥ओःपुयणित्येतदेवज्ञापयिष्यति॥ अंगुगंनित्यंचबाधित्वाद्विर्वचनंस्यातइति॥ ततोद्वित्वेकृतेयथाप्राप्तंयणा

दिकरिष्यते॥ मैवं॥ निनवनीयिषतिदिद्वनीयिषतीत्याद्यसिद्धेः॥ किंच॥ सामान्यापेक्षंज्ञापकं विशेषापेक्षं वा॥ आद्येर्धर्चकीर्नेदितिन सिध्ये
त्॥ अंत्येचक्रनुरित्यादिनसिध्येत्॥ तस्मात्सूत्रंकर्त्तव्यमेव॥ तुष्टूषवयिषतीत्यादिसिद्धये ओःपुयणिति ज्ञापकमाश्रयणीयं॥ तच्चतुल्यजा
तीयापेक्षमितिस्थितम्॥ अतएववामनेदात्तदौजढत्इत्येतदुष्यविरुद्धमितिबोपदेवोपष्टम्भेनप्रपंचितंप्राक्॥ वस्तुतस्तुवामनोक्तं
सम्यगेव॥ यतः॥ वोपदेवोमहाग्राहग्रस्तोवामनदिग्गजः॥ कीर्त्तेरेवप्रसंगेनमाधवेनविमोचितः॥ तथाहि॥ किंवामनोक्तोवार्त्तिकदूषणप्र
भाष्यविरोधः॥ किंवासजातीयविषयज्ञापकतावर्णनभाष्यविरोधः॥ नाद्यः॥ नित्यानित्ययोर्विप्रतिषेधानुपपत्तिरितिदिदवनीयिषतीत्याद्य
सिद्धिरितिचदूषणयोर्भाष्येनुक्ततयाभाष्यंदूषणांतराणामप्युपलक्षणमितिस्थितेऔजढदित्यभ्यासेऽकारादेशोपिविधेयः स्यादिति
वार्त्तिकेदूषणांतरस्यापिदेयत्वात्॥ नद्वेवंवार्त्तिकंरचनीयं॥ ओदौदादेशस्यचुटुतुशरादेरभ्यासस्यात्सनि॥ ततोल्लोपवतोणिचौ
दुतोः स्याभ्यासस्यणिचोत्स्यात्॥ औजढत्॥ आंचकदिति॥ नद्वितीयः॥ यत्रद्विरुक्तौअभ्यासस्योत्तरखंडस्याद्योजवर्णस्तत्रस्थानिवदि
तिहिभाष्यस्यफलितोर्थः॥ अस्तिचहतशब्दस्यद्विरुक्तौप्रक्रियादशायांउत्तरत्रावर्णः॥ ननुपुनःप्रवृत्तेनटिलोपेनापहारान्नासौप्रयोगेसम
वैतिइतिचेत्। किंततः॥ नहिप्रयोगसमवायित्वंविशेषणंभाष्येदत्तं॥ एवंचनुनावयिषतीत्यादौद्वित्वप्रवृत्तिवेलायांअवर्णाभावेपिपश्चाद्गा
विनंतमाश्रित्ययथास्थानिवद्भावस्तथाहतशब्दस्यपश्चात्तद्विरहेपि॥ अप्यजीगपत्इत्यत्रतुस्थानिवद्भावेसत्यजादितयाणिचएवद्वित्वं
स्यात्तथाचेन्नद्वित्वप्रवृत्तिवेलायांनापिपश्चादवर्णपरतेत्यचिकीर्त्तदित्यादाविवनस्थानिवद्भावः॥ एवंचोवर्णस्थानिकस्यैवस्थानिवद्भावइ
तिदुराग्रहोनिर्मूलएव॥ अतएवलोपः पिबतेरितिसूत्रेऽपीप्यदित्यत्रपिबतेर्णौयुकिचङि उपधालोपेचतस्य स्थानिवत्त्वात्पामशब्दस्यद्वि

रुक्मिरिति वृत्तिग्रंथोपि संगच्छते ॥ एवं चांचकदित्येव साधु ॥ नत्वांचिकदिति ॥ अंकापयति आंचीकपदित्यादि तु दूरापास्तं ॥ अल्लोपस्य दुर्वारत्वात् अकारोच्चारणं त्वभ्यासे ऋकारश्च इत्यादिना चरितार्थं ॥ यदप्यग्लोपित्वं स्थानिवत्त्वं चेत्याद्युक्तं ॥ तदपि न ॥ चिंतेरिरिदित्करणेन घुषिरविशब्दने इत्येतत्सूत्रस्य भाष्येण चणिञ्विकल्पस्य सुस्थतया अल्लोपविकल्पस्य निर्मूलत्वात् ॥ णिजभावपक्षे हि अनेकाच इत्याम्प्रवृत्त्या धातोरंतोदात्तप्रवृत्त्या चाकारः कृतार्थः ॥ अंक्यादित्यादौ नलोपप्रतिबंधोपि फलमिति दिक् ॥ नचैवमप्यौजढदित्यभ्यासे डकारः श्रूयेत ॥ पूर्वत्रासिद्धीयमद्विर्वचने इत्युक्तेरिति भाष्यं ॥ उभौसाभ्यासस्येति तदनित्यताज्ञापनात् ॥ यत्तु पदद्विर्वचनविषयं नदिति वोपदेवः ॥ तन्न ॥ सुविनिर्दुर्भ्य इति सूत्रेषु पिभूतो द्विरुक्तस्य [illegible] वार्त्तिकेन तद्भाष्येण च सह विरोधात् ॥ अतएवाभ्यासे डकारं दुर्गगुप्तादयः आहुः ॥ एवं च वैयाघ्रपद्यवार्त्तिके औजढदिति पाठस्य प्रमादिकत्वकल्पनमेव प्रामादिकं ॥ जिशब्द गाठस्तु क्तिना निर्वाह्यः ॥ यत्तु अदंतेषु ऊनधातौ मा भवानूनिनदित्यभ्यासे इकारश्रवणेनेदपि सिपिप्रमादमप्युक्तं ॥ अन्यथा कृतसंशब्दने इत्यत्र स्वोक्तेन सममविरोधापत्तेः ॥ तस्मादूननदित्येव धातुवृत्तौ सांप्रदायिकः पाठः एवं च भाष्यकाशिकयोरविरोध एवेति स्थिते सरस्वतीकंठाभरणादिग्रंथा अपि निर्बाधा एवेत्यवधेयं ॥ यत्तु स्तौतिण्योरिति सूत्रे सिषेचयिषतीत्यत्र सिचेर्हेतुमण्णौ गुणे सनि इटि गुणायादेशयोः कृतयोर्गुणस्य स्थानिवद्भावात्सिचूशब्दस्य द्वित्वं इति न्यासकारेणोक्तं तत्तु उत्तरखंडे ऽक्षराभावाद्भाष्यविरुद्धं ॥ स्थानिवद्भावं विनाप्यभिमतरूपसिद्धेर्निष्फलं चेत्युपेक्ष्यं ॥ एतेनौजढदपीप्यदित्यादिसिद्धये सामान्यापेक्षतां वदन् अचिकीर्तदित्यादिसिद्धये चानित्यतां शरणीकुर्वन् सीरदेवोप्यपास्तः ॥ ॥ ॥ इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे पादे अष्टमान्हिकं समाप्तम् ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श-कौ ॥श्रीगणेशायनमः॥ ॥अदर्शनंलोपः॥ स्थानेइत्यनुवर्त्तते॥नदर्शनंअप्रसंगेइति॥प्रसक्तस्यानुच्चारणंलोपसंज्ञंस्यात्॥संज्ञाप्रदेशालोपोव्योर्वली
१२७ त्यादयः॥अर्थस्यैषासंज्ञानतुशब्दस्य॥महासंज्ञाकरणसामर्थ्यात्॥नचैवंप्रदेशेष्वेवलोपइतिलौकिकोर्थोग्रहीष्यते॥पशोअपत्यंदेवतेति
वत्॥तत्किंसंज्ञयेतिचेत्॥न॥प्रसक्तस्येत्येवंरूपविशेषलाभायसूत्रारंभात्॥अन्यथादधिमध्वित्यादौतुगागमप्रसंगात्॥अस्तिहितत्र
क्विपोदर्शनं तच्चलोपइतिप्रत्ययलक्षणापत्तेः॥नन्वस्त्वेवंवार्तिकमते॥भाष्यमतेतुप्रत्ययलक्षणसूत्रंनियमार्थं॥तत्कथंदध्यादौतुक्प्र
संगः॥स्थानिवत्सूत्रंतुननुकंप्रतिप्रवर्तयति॥षष्ठीग्रहणस्यतत्रानुवृत्तत्वात्॥अतएवग्रामणीरित्यादौअण्कार्यंनभवति॥तथाचभाष्ये
त्यासंहितावसानयोर्लोकसिद्धत्वादितिवक्ष्यमाणन्यायेनेदंसूत्रंमास्त्वितिचेत्॥न॥घटंकरोतिग्रामेतिष्ठतिइत्यादौल्यब्लोपइतिपंच
म्यापत्तेः॥अग्निमीळइत्यादौचादिलोपइतिनिघातप्रतिषेधापत्तेश्च॥आरब्धेतुसूत्रेतत्रशास्त्रतोलोकतोवाल्यबाद्यादीनांचाप्रसक्तत्वान्नो
क्तदोषः॥ननुवार्त्तिकमतेप्रसक्तस्येत्युक्तेपिग्रामणीरित्यत्रवृद्धिःस्यात्॥कर्मण्यणःप्रसंगसत्वादितिचेत्॥न॥वासरूपन्यायेनपक्षेणःसंभ
वेपिक्विप्पक्षेतेनाण्प्रसंगस्यबाधितत्वात्॥वैकल्पिकयोरेकानुष्ठानेतस्मिन्प्रयोगेइतरानुष्ठापकशास्त्राप्रामाण्यस्यशास्त्रसिद्धत्वात्॥ ॥
प्रत्ययस्यलुक्श्लुलुपः॥ ॥अनेकसंज्ञाकरणसामर्थ्यात्तत्रावृत्त्याद्याश्रित्यतद्भावितसंज्ञाइहविज्ञायंते॥लुक्श्लुलुप्शब्दैःकृतंप्रत्ययाद
र्शनंक्रमात्तत्तत्संज्ञंस्यात्॥संज्ञाप्रदेशालुक्तद्धितलुकि॥जुहोत्यादिभ्यःश्लुः जनपदेलुविति॥विधिप्रदेशेषुभाविसंज्ञाविज्ञानान्नान्योन्या
श्रयः॥विशेषविहिताअप्येताःसंज्ञालोपसंज्ञांनबाधंते॥एकसंज्ञाधिकारादन्यत्रसंज्ञानांबाध्यबाधकभावोनास्तीतिकडारसूत्रेवक्ष्यमा राम
णत्वात्॥प्रत्ययस्येतिशक्यमकर्त्तुं॥नचैवंलुक्तद्धितलुकीतिविधीयमानमदर्शनंगोस्त्रियोरित्यनुवृत्तेर्गोशब्दस्यापिस्यात्इतिवाच्यम्॥ १२७

गो रूपसर्ज्जनस्येति योगं विभज्य स्त्रियाः लुक् तद्धितलुकीति सूत्रे स्त्रीग्रहणस्यैवानुवर्तनसंभवात्॥ अन्यथा प्रत्ययग्रहणे कृतेपि गमेर्डो लुक्
स्यात्॥ कंसीयपरशव्ययोर्यञञौ लुक् चेति लुगपि प्रकृते र्न भविष्यति॥ ङ्याप्प्रातिपदिकादित्यधिकारात्प्रातिपदिकात्परस्य लुग्विधानात्॥ कृतेपि
हि प्रत्ययग्रहणे कमेः सः कंसः परान् शृणाति परशुरिति उकारसकारयोर्लुक् प्राप्त एवमेव परिहार्यः॥ न चैवं यञञोरेव लुगस्तु विधानसामर्थ्याच्च
यञञ्लुकोर्विकल्पः॥ वेत्यनुक्तिस्तु यञञ्भ्यामुक्त औत्सर्गिकस्याश्रवणं मा भूदित्येवमर्थमिति वाच्यं॥ यञञ्लुकामेककालप्रतीतानामुद्दे
श्यविधेयभावासंभवात्॥ त्युस्तुलौ तु द्वेत्यत्र तु पकालननेषितिअनद्यतने लुङिति चज्ञापकाद्व्याख्याभेदमाश्रित्य त्युस्तुलौ लुङि धीयते॥ तस्मात्प्रत्य
यनिर्दृत्तमेतावत् प्रत्ययग्रहणं न कर्त्तव्यं॥ स्थानिविशेषसमर्पणार्थमपि न॥ तथाहि॥ अत्रिभृगुकुत्सेत्यत्र तावत् यस्कादिभ्यो गोत्र इत्यतो गो
त्र इत्यनुवर्त्तते॥ तेनात्र्यादिभ्यो यो विहितस्तस्य लुक् सिद्धः॥ जनपदे लुबित्यत्र तु ङ्याप्प्रातिपदिकात् प्रत्यय इत्यनुवृत्तेः॥ जनपदे विहितस्य चा
तुरर्थिकप्रत्ययस्य लुप्॥ लवणाल्लुगित्यत्र प्रकृतत्वाट्ठक एव॥ सर्वत्रापि इह प्रत्यय इत्यस्य षष्ठी कल्पयिष्यते॥ तस्मादित्युत्तरस्येति॥ स्यादेतत्॥ स
र्वादेशार्थं प्रत्ययग्रहणं॥ तेन यञञोः सुपो धातुप्रातिपदिकयोरित्यादिषु यत्रानेकाल्प्रत्ययस्तत्रालोन्त्यस्येति न भवति॥ तथा लवणाल्लुगित्या
दावादेः परस्येति न भवतीति॥ मैवं॥ ज्ञापकादेव सर्वादेशत्वसिद्धेः॥ घोर्लोपो लेटि वेति हि लोपे कृते लुग्वाद्यहे तिलुग्ग्रहणं ज्ञापयति। लुगादयः स
र्वादेशा इति॥ अलोन्त्यस्य त्यदर्शनं प्रकृते न लोपेनापि सिद्धं॥ न चैवं पदीत्यापत्तिः॥ असंज्ञात्वविरोधित्वेन लोपे लोन्त्यपरिभाषायाः प्रवृत्तेः॥ सा
मान्येन लुमहिषयं ज्ञापकं न तु लुङ्याद्यविषयमिति सर्वं सिद्धं॥ स्यादेतत्॥ आगस्त्यकौण्डिन्ययोरित्यत्र लुगणिञोरित्यतो लुग्ग्रहणमनु
वर्त्तते॥ न वा॥ आद्ये स्थानिनौ द्वौ आदेशास्तु लुकाः सह त्रयः वैषम्याद्यथासंख्याभावे एकैकस्य त्रय आदेशाः पर्यायेण स्युः॥ न तस्मागस्ति

योपिकुंडिनाः स्युः॥ कुंडिनाभ्यागस्त्ययस्त्युः॥ लुक्क्रियमाणोपीपकात्मवदिशइतिउभयत्रापिप्रविभक्तिमात्रंश्रूयेत॥ अथनिवृत्तंततोः गस्त्यः
कुंडिनाइत्यत्रनकश्चिद्दोषः॥ किंतुअगस्तीनांछात्राआगस्तीयाइत्यत्रप्राग्दीव्यतीयेअजादौप्रत्ययेविवक्षितेप्यगस्त्यादेशस्यनिषेधाभावात्
अनिवृत्तावृद्धत्वाच्छोनस्यात्॥ प्रत्ययग्रहणेसतितुलुग्ग्रहणानुवृत्तौआगस्त्यकौंडिन्ययोः प्रत्ययांशस्यलुग्भवति॥ अवशिष्टभागयोर्यथासं
ख्यंअगस्तिकुंडिनचौ॥ तेनागस्तयः कुंडिनाइतिसिद्धं॥ प्राग्दीव्यतीयेविवक्षितेतुगोत्रेलुगचीतिलुकिप्रतिषिद्धेनतत्संनियोगशिष्टत्वादगस्त्यादे
शेपिनिवृत्ते आगस्त्यशब्दाद्वृद्धाच्छेकृतेसूर्यतिष्येतियलोपेचागस्तीया इतिसिध्यति॥ कौंडिन्येतुनास्तिविशेषः॥ निवृत्तेपिकुंडिनजादेशेकौंडिन्य
शब्दादपिकण्वादिभ्योगोत्रइत्यणिकृतेआपत्यस्येतियलोपेकौंडिनाइत्येवभवितव्यं॥ तस्मादागस्त्यकौंडिन्ययोरित्यत्रावश्यमनुवर्त्यंलुग्ग्रहणं
॥ ततश्चेहप्रत्ययग्रहणमपिकर्तव्यमेवेति॥ मैवं॥ आगस्त्यकौंडिन्ययोरित्यत्रयस्कादिभ्योगोत्रइतिगोत्रग्रहणमनुवर्त्यगोत्रेयोविहितस्तस्यलु
गितिव्याख्यानेनापीष्टसिद्धेः॥ तस्मादत्रप्रत्ययग्रहणंमास्त्विहेतिस्थितं॥ ॥स्यादेतत्॥ ॥एवंसतिलोपसंज्ञयासहलुगादिसंज्ञानांतुल्यव्य
क्तिकत्वंस्यात्॥ तद्भावितस्यसंज्ञेतिचेत्॥ अविशेषाल्लोपेपितथास्यात्॥ उच्यते॥ असंजातविरोधित्वाल्लोपसंज्ञातावदर्शनमात्रस्यभवति॥ लु
गादिसंज्ञासुपरंअनेकसंज्ञाप्रणयनसामर्थ्यात्तद्भावितग्रहः॥ तेनसंज्ञासंकरोनेत्युक्तं॥ सतितुसंकरेहंतीतिशबुकिश्लाविति द्वित्वंस्यात्॥ जुहो
तीत्यत्रश्लौसतिउतोवृद्धिर्लुकिहलीतिवृद्धिःस्यात्॥ नचतत्राभ्यस्तस्यनेत्यनुवृत्तेर्योयोतिनोनोतीत्यादाविववृद्धिर्नभविष्यतीतिवाच्यं॥ सं
ज्ञासंकरपक्षेतदनुवृत्त्यसंभवात्॥ अन्यथासूत्रस्यनिर्विषयतापत्तेः॥ नचयौतिरौतिइत्यादिरवकाशः॥ संज्ञासंकरेतत्रापिद्वित्वस्यदुर्वार
त्वात्॥ लोपसंज्ञातुलुगादिसंज्ञानांव्यापिकेतिउक्तं॥ तेनपंचेत्यादौप्रत्ययलक्षणंसिध्यतीतिदिक्॥ भाष्यमतेतुयद्यपिस्थानिवत्सूत्रेणपं

चेत्यादि सिद्धं ॥ तथापि सुदृषद्ब्राह्मण इत्यत्र वक्ष्यमाणरीत्या उत्तरपदाद्युदात्तत्वस्योपधादीर्घस्य च वारणाय लोपे सति प्रत्ययलक्षणं प्रवेतीति नियमो
ऽवश्यं प्रवर्त्तनीयः ॥ तथा च तत्र लुकः प्रत्ययसंज्ञाप्याद दत्तेन्येत्यवधेयं ॥ ॥ प्रत्ययलोपे प्रत्ययलक्षणं ॥ ॥ प्रत्यये लुप्तेपि तदाश्रयं कार्यं स्यात् ॥ अ
ल्विध्यर्थमिदमिति वार्त्तिकमतम् ॥ तथाहि ॥ अतृणेडित्यत्र तिपो हल्ङ्यादिलोपे कृते तृणह इमिति सूत्रेण विधीयमानो हलादि पित्सार्वधातु
कनिमित्त इमागमोऽस्माद्धि च नाङ्गवति स्थानिवत्सूत्रेण तु न सिध्यति ॥ अल्विधित्वात् ॥ नन्वेवं प्रत्ययलक्षणमपि न स्यात् ॥ वर्णाश्रयेनास्ति प्रत्यय
लक्षणमिति चेत् ॥ न ॥ नह्येवंरूपं वचनमस्ति ॥ किं तु प्रकृतसूत्रे प्रत्ययलोपे तल्लक्षणमित्येवास्ति ॥ यद्वा तल्लक्षणमित्यपि मास्तु ॥ स्थानिवदनु
वृत्त्यैवेष्टसिद्धेः ॥ एवं सति प्रत्ययलक्षणमित्युक्तेः फलं न लभ्यते ॥ पुनः प्रत्ययग्रहणसामर्थ्याद्धि यत्कार्यं प्रति प्रत्ययस्यासाधारणं रूपं निमि
त्ततया श्रीयते सुष्वति इत्यादि तदेव भवतीति लभ्यते ॥ तेन गवे हितं गोहितमित्यत्र वादेशो न भवति ॥ तद्धि भावचूत्वमात्राश्रयणात् ॥ तस्य च
प्रत्ययाप्रत्ययसाधारण्यात् ॥ अथात्र न लुमतेति निषेधः ॥ तर्हि सुयशा इत्यत्र विसर्जनीयस्य सः स्यात् ॥ सुरुडित्यो दोसरि चेति चर्त्वं स्यादिति
दिक् ॥ इमागमे तु हलादौ सार्वधातुक इति प्रत्ययस्यैव प्राधान्येनाश्रीयते इति वैषम्यं ॥ तस्मादङ्गप्राधान्ये प्रत्ययलक्षणं नास्ति प्रत्ययप्राधान्ये
त्वस्तीति विवेकः ॥ अनेनैव न्यायेन न धातुलोप इत्यत्र धातुलोप इति बहुव्रीहिणेव सिद्धे आर्द्धधातुकग्रहणसामर्थ्यात्तत्त्वेन निमित्तता लभ्यते ॥ ते
न धिन्विकृण्व्योर्विविलोपो व्योरिति वलोपस्य वल्निमित्तत्वान्न त्वार्द्धधातुकतया विचो निमित्तत्वाभावाद्गुणो भवत्येव ॥ तेन सुधे सुधेनौ ॥ सुधेनः
॥ सुकः ॥ सुकर्णौ ॥ सुकर्णः ॥ इत्यादि भवति ॥ पठन्ति च ॥ सुधे सुधे वा भिवधात्सुराणां सुकारणे लाघवं न श्वरामः ॥ विशेषणे ह्ययमिहादि कर्तुर्वदे
दधीती सहि कैपटीय इति ॥ न च नोतोतर्तीत्यादिव्यावृत्त्या आर्द्धधातुकग्रहणस्य सार्थक्यात् कथं सामर्थ्यमिति वाच्यं ॥ यङ्लुकम्भ्यां दसत्वात् ॥

श· कौ· भाषाविषयत्वपक्षेतु आर्द्धधातुकग्रहणमावर्त्यसामर्थ्यमुपपादनीयं॥ नन्वेवंतत् क्ङितिचेत्येतत्सूत्रस्यभाष्येणसहविरुद्धं॥ पूर्वस्मिन्योगेपदार्द्ध
१२९ धातुकग्रहणंतदनवकाशमितितत्रोक्तत्वादितिचेत्॥ न॥ अनार्षत्वात्तथोक्तत्वादित्याहुः॥ तदुपष्टंभेनात्रविजेवानभिमतइत्येवकिंनस्यादि
तिचिंत्यं॥ क्विपितुऊठ्॥ तेनधिनूः॥ धिन्वौधिन्वः॥ कृणूः॥ कृण्वौ॥ कृण्वः इतिभवति॥ सुधीः॥ सुधियौ॥ सुधियः सुकीः॥ सुकृणौ॥ सुकृण इत्यादि
तुनभवत्येवेत्याहुः॥ यङ्लुकोभाषाविषयत्वेआर्द्धधातुकग्रहणस्यतोतोर्तीत्यत्रचारितार्थ्यादार्द्धनोचमानाभावाद्गुणनिषेधप्रसक्त्यासुधी
सुधिनावित्येवास्तु॥ कृणोतेस्तुदीर्घेसुकीः सुकीर्णौसुकीर्णइत्यादिभवत्त्वित्यपिचिंत्यं॥ नन्वेवंपरिवीरित्यत्रलुग्दीर्घौपर्यायेणस्यातां॥ अने
नैवोभयविधानेपौर्वापर्याभावेनविप्रतिषेधेपरमित्यस्याप्रवृत्तेः॥ सत्यं॥ शास्त्रातिदेशस्यव्यपदेशातिदेशस्यवाश्रयणाद्दोषः॥ यद्वा॥ सतिप्रत्ययेयत्कार्यं
भवितुमर्हतितदेवातिदिश्यतेइतिपरिक्वीयेत्यादाविवपरिवीरित्यत्रापिदीर्घएवभवतिनतुलुगितिकार्यातिदेशेप्यदोषः॥ भाष्यकारास्त्वा
हुः॥ तृणहइमर्थंतावन्नेदंसूत्रं॥ स्थानिवत्सूत्रेणैवगतार्थत्वात्॥ नचाल्विधिरयं॥ हलीत्यस्यनिवर्त्तनात्॥ नचैवंतृणहानीत्यत्रापीम्
स्यादितिवाच्यं॥ नाभ्यस्तस्याचीत्यतोऽचिनेत्यनुवर्त्तनात्॥ नाप्याशीरित्यत्रशासइदङ्हलोरितीत्वार्थमिदं॥ आशासः क्वावुपसंख्या
नेनैवसिद्धेः॥ तद्धित्वयापिवाच्यम्॥ शासइदङ्हलोरित्यत्रशासिमात्रग्रहणमितिपक्षेनियमार्थंअशासः क्वावेवयथास्यात्॥ अशा
स्तेइत्यादौमाभूदिति॥ यस्माच्छासेरङ्विहितस्तस्यैवाङ्साहचर्यादित्वविधौग्रहणमितिपक्षेयथाआशास्तेइत्यादौनभवतितथाक्विप्य
[illegible]नस्यादितिविध्यर्थं॥ तस्मात्प्रत्ययलोपेसत्प्रत्ययलक्षणमेवेतिनियमार्थमिदंसूत्रं॥ प्रत्ययाप्रत्ययसाधारणंरूपमाश्रित्ययत्कार्यंवि राम·
धीयतेतन्निवृत्तिः फलं॥ तेनशोभनादृषदोस्यप्रासादस्यसः सुदृषत्॥ अत्रसोर्मनसी अलोमोषसीइतिसूत्रेणसुशब्दात्परस्यमन्नंतस्यअ १२९

संज्ञस्य चोत्तरपदस्य बहुव्रीहौ विधीयमानमाद्युदात्तत्वं न भवति॥ अत्र हि लुप्तेऽपि जसि स्थानिवद्भावेनासंज्ञमुत्तरपदमस्त्येव॥ किंतु असइति
[illegible]प्रत्ययाप्रत्ययसाधारणं॥ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदंतविधिं प्रयोजयंतीति वक्ष्यमाणत्वात्॥ अतो नियमेनाद्युदा
त्तव्यावृत्तिः सिद्धा॥ तथा च नञ्सुभ्यामित्यंतोदात्तं पदं भवति॥ इदं त्ववधेयं॥ न केवलं स्वरार्थमेवेदं सूत्रं॥ किंतूक्तोदाहरण एव प्राप्नुवन्भ
त्वसंतस्येत्युपधादीर्घोऽपि उक्तनियमेनैव व्यावर्त्यः॥ वार्त्तिकमते तु उक्तस्वरस्य दीर्घव्यावृत्तेश्चासिद्धये उपायांतरमन्वेषणीयमिति॥ ननु यदि
नियमार्थं सूत्रं तर्हि पंचेत्यत्र प्रत्ययलक्षणेन पदत्वमिति वृत्तिः कथं योज्या॥ एवं समासत्वात् प्रातिपदिकत्वं। स्तुक्रमोरिनीट्। उभयप्राप्तौ कर्मणि
षष्ठी॥ इत्यादयोऽपि तत्र तत्राभियुक्तग्रंथाः कथं योज्या इति॥ अत्रोच्यते॥ योऽस्माकं नियमविधिः स मीमांसकरीत्या परिसंख्याविधिरिति
तावत्स्पष्टं विवरणादौ॥ तत्र दोषत्रयं स्वार्थहानिः परार्थपरिकल्पना प्राप्तबाधश्चेति॥ तच्च पक्ष्यगत्या सह्यते इति पक्षस्तदा नियमविधेर्निषेध
एवार्थः॥ प्रत्ययलक्षणशब्देन तद्भिन्नं लक्ष्यते॥ भवतीत्यनेन तु न भवतीति॥ तथा च स्थानेंतरतमसूत्रे भाष्यं॥ नानेनांतरतमा निर्वर्त्यंते अ
पि तु अनंतरतमा निवर्त्यंते इति॥ अत एव वार्त्तिककारोऽपि वक्ष्यति॥ उभयप्राप्तौ कर्मणीति प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेध इति॥ अस्मिन्प
क्षे उभयप्राप्ताविति परिशेषिता षष्ठी[illegible] क्रमेण व्याख्येयं न तु विहितेति॥ यदि तु दोषत्रयभयेन परिहारार्थं प्रत्ययलक्षणसूत्रं यथाश्रु
तं व्याख्याय अत एव ज्ञापकात् स्थानिवत्सूत्रस्य प्रत्ययलोपेतरविषयकता कल्प्यते सामान्यपुरस्कारेण प्रवृत्तस्य शास्त्रस्य विशेषतात्पर्ये हि त्वयापि
कल्प्यमेव॥ अन्यथा विकल्पापत्तेः॥ भाट्टमतेन तौ पशौ करोतीत्यत्र यथा॥ पदे जुहोतीत्यादिभिः सवनीयविधेरिव विशेषविधिना सामान्यवि
धेः संकोचसंभवाच्च॥ न चैवं सामान्यस्य विशेष उपसंहारापत्तिः। सामान्यशास्त्रप्रणयनवैयर्थ्यापत्तेः। परे तु न कश्चि[illegible]सामान्यताये नैवं प[illegible]नुयुक्तो

तेतिचतुर्द्धीकरणस्याम्नेयेउपसंहारोमीमांसायामभ्युपेतः॥ कल्पसूत्रकमास्तुतत्रापव्युत्पाद्यमानमाचभगवताकात्यायनेनसूत्रितं। अविशेषाद्यु
मैवेति॥ एवंचसामान्यशास्त्रस्यविशेषेलक्षणायाउभयवाच्यत्वात्तयेवोपपत्तौदोषत्रयंनसोढव्यमितिपक्षस्तदाउदात्ततग्रंथः सम्यगेव॥ नैयायि
यिकमतेतुतात्पर्यसंकोचस्थलेलक्षणानास्त्येवेतिनिर्विवादं॥ विशेषधर्मप्रकारकबोधस्योद्देश्यानामेवतदभ्युपगमात्॥ सामान्यप्रकारकस्यवि
शेषविशेष्यकस्यापिलक्षणंविनानिर्वाहाद्दितिसुधीभिराकलनीयं॥ नलुमतांगस्य॥ लुमताशब्देनप्रत्ययलोपेसतिप्रत्ययलक्षणमंगस्यकार्यंन
स्यात्॥ वार्त्तिकमतेपूर्वसूत्रप्राप्तस्यायंनिषेधः॥ भाष्यमतेतुस्थानिवत्त्वप्राप्तस्य॥ नियमविधौनांतात्पर्यसंकोचकत्वमात्रंनतुनिषेधकतेतिप्रागुक्त
रीत्यातुभाष्यमतेपिपूर्वसूत्रेणप्राप्तस्यायंनिषेधइत्यवधेयं॥ एवमग्रेपि। गर्गाः॥ मृष्टः॥ जुहुतः॥ इहयञ्शपोर्लुमतालुप्तयोरंगस्यगुणवृद्धीनभ
वतः। लुमतेतिकिं॥ कार्यते॥ हार्यते॥ णेरणिटीतिणिलोपेकृतेणिजपेक्षावृद्धिर्भवत्येव॥ अमार्ट॥ हल्ङ्यादिलोपेनित्यत्वात्कृतेपिवृद्धिः॥ अंगस्येति
किं॥ पंच॥ सप्त॥ अत्रांगस्येतिस्वर्यते॥ तेनानांगाधिकारोगृह्यते॥ स्वरितेनाधिकारइतिवचनादितिवार्तिककाराः॥ भाष्येतुइदंदूषितं॥ तथाहि॥ एवं
सतिउक्त्वामेत्यत्रातोहेरितिहेर्लुकिकृतेक्रमः परस्मैपदेष्वितिदीर्घोनस्यात्॥ तथाजिगमिषेत्यत्रगमेरिट्परस्मैपदेष्वितीण्नस्यात्॥ तथाविवृ
त्सेत्यत्रनवृद्भ्यश्चतुर्भ्यइतीण्निषेधोनस्यात्॥ तस्मान्नलुमतेत्यत्रनांगाधिकारः प्रतिनिर्दिश्यते॥ किंतुलुमतालुप्तेप्रत्ययेयदंगंतस्यांगेअनांगेच
सर्वप्रतिषिध्यतइति॥ नचैवमुक्तदोषतादवस्थ्यमितिवाच्यं॥ उक्त्वामेत्यत्रलुप्तंपरस्मैपदं॥ तदपेक्षस्यायदंगंशावं तेनतस्यदीर्घोविधीयते॥ किंतु
क्रमेः॥ सतुशपंप्रतिअंगंनतुलुप्तंप्रतीतिनिषेधाप्रवृत्तौप्रत्ययलक्षणेनदीर्घप्रवृत्तेः॥ एवंजिगमिषविवृत्सेत्यत्रापिइटोविधिप्रतिषेधौभवतएव॥
नैहिलुमतालुप्तेपरस्मैपदेयदंगंसन्नंतंतस्यनक्रियेतेकिंतुसकारादेःप्रत्ययस्य॥ सचांगंनेतिस्पष्टमेव॥ स्यादेतत्॥ पक्षद्वयेपिञ्नित्यादि

र्निर्त्यंकितः पथिमथोः सर्वनामस्थाने इतित्रिसूत्र्याविधीयमानाः स्वराः लुकि कृतेपि प्राप्नुवंति॥ तथाहि॥ गर्गाः॥ विदाः॥ यञञोर्लुक्॥ उष्ट्रग्रीवाः
गा इवेप्रतिकृतावितिकनोदेव पथादिभ्यश्चेति लुप्॥ ततोञ्नित्यादिरित्याद्युदात्ततांप्राप्नोति॥ तथा अत्रेरपत्यानि अत्रयः॥ इतश्चानिञ इति
ढकोत्रिभृगुकुत्सेत्यादिनालुक्॥ ततः कितस्तद्धिते तस्यांतउदात्तो भवतीत्यंतउदात्ततांप्राप्नोति॥ साहिप्रत्ययग्रहणे तदंतग्रहणात्तद्धितांतस्य
विधीयते॥ नचसिद्धांतेपि फिट्स्वरेणांतोदात्ततया भाव्यमेवेति वाच्यम्॥ राशदिभ्यांत्रिप्॥ अदेस्त्रिनिश्चेत्युणादिसूत्रेणत्यदेश्चकारानुकृ
ष्टेत्रिप्प्रत्ययेतस्यपित्वेनानुदात्तत्वादाद्युदात्तोत्रिशब्दः॥ तथाचप्रयुज्यते॥ अत्रेरिवशृणुतंपूर्व्यस्तुतिं॥ यथाशृणोरत्रेःकर्माणिकृण्वतइति
तथाढकोलुक्यप्याद्युदात्तएवप्रयुज्यते॥ अत्रीणांस्तोममद्रिवः॥ अत्रीणांशृणुतंहवमितिच॥ त्रिन्प्रत्ययांतस्तु अंतोदात्तोनकारांतश्चेत्यन्य
देतत्॥ सोपिप्रयुज्यते॥ दूरेवायेअंतिवाकेचिदत्रिणइति॥ तथापंथाः प्रियोयस्यपथिप्रियः पथिप्रियः॥ सुप्रोधात्विति सोर्लुकि पथिमथोः स
र्वनामस्थानेइत्याद्युदात्ततांप्राप्नोति॥ नत्वेषासूत्रीअंगाधिकारस्था॥ येननलुमतेतिनिषेधः प्रवर्त्तेत॥ नाप्येतद्धस्तुतोंगस्यकार्यं॥ सुप्तिङंतमि
तिपदसंज्ञावदुक्तस्वराणांप्रत्ययकार्यत्वात्॥ नन्वसुकितइतितथा॥ इतरत्तुद्वयंञ्नितिसर्वनामस्थानेइतिसप्तमीनिर्देशाद्धस्तुतोंगस्यकार्यं
भवत्येवेतिचेत्।न।ञ्निदंतस्यादेरित्यादिक्रमेणप्रत्ययांतस्यैवतद्विधानात्॥ सौवर्यः सप्तम्यपि तदंतसप्तम्य इतिसिद्धांतात्॥ एतच्चभीह्रीभृ
हुमदजनधनदरिद्राजागरांप्रत्ययात्पूर्वंपितीति पूर्वग्रहणेन ज्ञाप्यतइति तत्रैवभाष्येस्पष्टम्॥ अतएवोपोत्तमंरितीत्युदात्तत्वमाहवनीयइ
त्यादौरिदंतस्योपोत्तमेनीशब्दस्येकारेप्रवर्त्तते चङ्यन्यतरस्यामितिचचङंतस्य॥ नचैवंचतुरस्सासीत्युदात्तत्वंशसंतस्यस्यात्तथाचषट्त्रिंश
श्चचतुरः कल्पयंतइत्यादौचतुरइतिपदंमध्योदात्तमिष्यमाणंनसिद्ध्येदितिवाच्यम्॥ तत्रशस्ग्रहणसामर्थ्यात्तदंतसप्तमीत्वबाधात्॥ स

नरथाहि उडिदंपदाद्यप्पुमरैद्युचतुर्भ्यइत्येवब्रूयात्॥ तत्रहिअंसर्वनामस्थानग्रहणेनैवसिद्धे शसएवभविष्यति॥ षड्भिचतुर्भ्योहलादिरितिहि लादेःसिद्धांतेप्युदात्तविधानात्॥ नचैवंस्वरविधिपुषष्ठ्येवनिर्दिष्टयन्नामितिवाच्यम्॥ रितश्चर्ड इत्याद्यपेक्षयारितिचडीत्युक्तावर्द्धमात्रालाघवसंभवेनसप्तमीप्रयोगादिति॥ अत्रोच्यते॥ अंगाधिकारनिर्देशपक्षेतावदुक्तदोषपरिहारायवार्त्तिकमारभ्यते॥ लुमतिप्रतिषेधेएकपदस्वरस्योपसंख्यानं। सर्वामंत्रितसिज्लुक्स्वरवर्जं॥ प्रयोजनंत्रिनिकित्स्वराः॥ पथिमथोःसर्वनामस्थानेलुकीति॥ अस्यार्थः॥ लुमतिलुमत्संज्ञायाप्रतिपादितेऽदर्शनेयःप्रतिषेधःतस्मिन्नेकपदाश्रयोयःस्वरस्तस्योपसंख्यानं॥ प्रत्ययलक्षणेनकार्यमप्येकपदस्वरेणनभवतीत्यर्थः॥ पदद्वयाश्रयस्तुस्यादेव॥ यथादधितिष्ठतीत्यत्रपदस्यपदादित्यधिकृत्यविहितस्तिङ्ङतिङ इतिनिघातः॥ अत्रदधीत्यस्यपदसंज्ञार्थंप्रत्ययलक्षणमपेक्ष्यते॥ तथाइहतिष्ठेत्यादौतिङंतत्वलाभायापि॥ नन्वेवंसर्वस्यसुपीत्याद्युदात्तत्वंनस्यात्॥ तथा॥ सर्पिरागच्छसप्तागच्छतेत्यत्रामंत्रितस्यचेतिषाष्ठमाद्युदात्तत्वंनस्यात्॥ तथामाहिष्ठानांमाहिधानामित्यत्रादिःसिचोन्यतरस्यामित्याद्युदात्तत्वंनस्यादित्यतआह॥ सर्वेत्यादि। इदंस्वरत्रयंविहायस्वरांतरेप्रतिषेधइत्यर्थः॥ नचसर्वस्तोमइत्यत्रबहुव्रीहौप्रकृत्यापूर्वपदमितिपदद्वयस्वरोयमितिवाच्यं॥ सर्वस्यसुपीतियदाद्युदात्तत्वंतस्यैवत्यनेनप्रकृतिभावमात्रंकर्त्तव्यं॥ तथाचतत्प्राप्तिरवश्योपपादयितव्येतिभावात्॥ नचसर्पिःशब्दस्यामंत्रितस्वरंविनाप्याद्युदात्ततालब्धुंशक्या। अर्चिशुचिहुसृपिछादिछर्दिभ्यइत्यौणादिकेइसिप्रत्ययेकृतेनोदात्तत्वात्॥ अव्युत्पत्तिपक्षेपिफिट्स्वरेणतथात्वात्॥ नचनब्विषयस्येत्याद्युदात्तः॥ अनिसंतस्येतिपर्युदासात्॥ केयदेशतुसर्पिःशब्दस्यघृतादित्वंकिमर्थंकल्पितमितिचिंत्यं॥ ननुसप्तशब्दःसप्यशूभ्यांतुट्चेतिकनिनंतोव्युत्पादितः॥ तथाचनित्त्वादाद्युदात्तः॥ अव्युत्पत्तिपक्षेपितथैव॥ त्रःसंख्याया इतिवचनादितिचेत्।

न ऽभयथापि घृतादित्वेनांतोदात्तत्वात्॥ तथाच प्रयुज्यते॥ समसुंजंतिरू[illegible]मेकचक्रमिति॥ इहसिज्लुग्ग्रहणंमास्तु॥ गातिस्थेत्यत्रसिज्ग्रहण
सामर्थ्याल्लुकिस्वरःसिद्धः॥ अन्यथाहिलाघवार्थं च्लेरेवलुकंविदध्यात्॥ एवंह्यभूदपादित्यादिसिद्धये: स्तिसिचोपृक्तइत्यत्रसकारांतरप्रश्लेष
कृशोपि नाश्रयणीयइति॥ नचच्लेर्लुकि आतइतिसूत्रेविध्यर्थमेवस्यान्नतुनियमार्थंतथाचतत्रलङ्निवृत्तये च्लेर्लुकीतिवक्तव्यंस्यादितिविपरी
तगौरवापत्तिरितिवाच्यं॥ ङितइत्यनुवृत्त्यैवलटोव्युदस्तत्वात्॥ तस्मात्सर्वामंत्रितस्वरवर्जमिस्यैवआवश्यकं॥ वार्त्तिकारंभस्यप्रयोजनमाह।
प्रयोजनमिति॥ ञिनिशब्दयोरिकारउच्चारणार्थः॥ सुट्तिथोरितिवत्॥ एतेस्वरानिवर्त्यमानतयाप्रयोजनमित्यर्थः॥ प्रयोजनांतरमाह। पथिम
थोरिति॥ तदेवंवचनबलेनत्रिसूत्र्याअतिव्याप्तिरुद्धर्त्तव्याइतीहसूत्रेस्थितम्॥ वस्तुतस्तुनैतदर्थंवचनंक्रियते॥ ज्ञापकबलेनैवविदागर्गाइ
त्यादेःसिद्धत्वात्॥ तथाचसंज्ञायामुपमानमितिसूत्रेवार्त्तिकं॥ उपमानस्याद्युदात्तवचनंज्ञापकं अनुबंधलक्षणेस्वरेप्रत्ययलक्षणप्रतिषेधस्ये
ति॥ अस्मिंश्चपक्षेपथिमथोःसर्वनामस्थानेलुमताल्लुप्तेप्रत्ययलक्षणंनभवतीति वचनमेवकर्त्तव्यं॥ नह्ययंअनुबंधलक्षणःस्वरः॥ येनोक्तज्ञाप
कबलेनवार्येत॥ नचस्वरमात्रविषयकंज्ञापकमितिवाच्यं॥ आमंत्रितस्वरसिजल्लुक्स्वरयोर[illegible]प्रसंगात्॥ नचैवमपिसप्तमीनिर्दिष्टेस्वरेप्र
त्ययलक्षणंनभवतीतिज्ञाप्यतामितिवाच्यं॥ सर्वस्तोमइत्यत्राद्युदात्तासिद्धिप्रसंगात्॥ यद्वा॥ अस्तु सप्तमीनिर्दिष्टस्वरविषयकमेवज्ञापकं॥ स
र्वस्यसुपीत्यत्रतुसुपीतिसप्तमीमपनीयसुपइतिषष्ठीपाठ्या॥ तथाच पथिस्वरार्थंवचनंनारंभणीयं॥ च्विस्तिकस्वरार्थंतु भयथापिनारंभणीयमि
तिसर्वंसुस्थं॥ पक्षद्वयमपीदंसंज्ञायामुपमानमितिसूत्रेभाष्यकारैःस्पष्टमुक्तं॥ [illegible]यंनिर्गलितोर्थः त्रिसूत्र्यांशंकितस्यातिव्याप्तिदोषस्यवचने
नोद्धारमापाततउक्त्वाज्ञापकेनपरिहृतिरितिनिष्कर्षोपेक्षितइति॥ एतच्चसर्व[illegible]थानं [illegible]निर्दिश्यतेइतिपक्षइववस्तुनोगस्त्वयत्का[illegible]र्यं

श॰ कौ॰ तिनिष्कृष्टपक्षेपि तुल्यं॥ अत एव संज्ञायामुपमानमिति सूत्रे भाष्यं कैयटः पस्पशायां साधारण्येनैवोक्तं ज्ञापकं वार्तिकं योजितं॥ प्रकृतसूत्रभाष्यकैयटयो
१४२ स्तु निष्कृष्टपक्षे उक्तदोषप्रसंग एव नास्तीति लभ्यते॥ तत्रेत्थमाशयमभियुक्ता वर्णयंति॥ ज्ञापकं हि द्विविधं॥ सामान्यापेक्षं विशेषापेक्षं च॥ तत्र ग्र
दाभीह्रीत्यत्र पूर्वग्रहणे न यत्र सप्तम्यर्थपक्षे तदंतग्रहणपक्षे च फलभेदः तत्रैव सोवर्यः सप्तम्यास्तदंते सप्तम्य इति ज्ञाप्यते॥ यथा भीह्रीत्यत्रै
व पूर्वग्रहाभावे तदंतस्य कार्यित्वे प्रत्ययांतानां भ्यादीनामुदात्त इत्युल्लोंत्यपरिभाषया प्रत्ययात्पूर्व एवोदात्तः स्यात्॥ सप्तम्यर्थाश्रयणे तु प्रत्ययम
पहाय भ्यादीनामेवोदात्तः स्यात् इति स्पष्टः फलभेदः॥ तथापो त्तमैरिति॥ चङ्यन्यतरस्यामित्यत्रापि॥ ञ्नित्यादिर्नित्यं पथिमथोः सर्वनाम
स्थान इत्यादौ तु नास्ति फलभेदः॥ तदंतस्य हि कार्यित्वे प्रकृत्यादेरेवोदात्तत्वं ञ्निदादिपूर्वस्यापि कार्यित्वे तथैवेति॥ तथा च तत्र सोवर्य इत्यस्या
प्रवृत्त्या तदंताकार्यित्वादुक्तदोषस्याप्रसंग एवेति॥ संज्ञायामुपमानमित्यत्र भाष्यकैयटादिग्रंथास्तु सामान्यापेक्षं ज्ञापकमाश्रित्य योजयि
तव्या इति॥ अत्र यइत्यत्र नु स्वरो न भवति॥ लुकि कृते कार्यिणोऽभावात्॥ प्रत्ययलक्षणं हि यदन्यस्य कार्यं तत्प्रत्ययलोपेपि भवति॥ न तु प्रत्य
यस्यैव यत्कार्यं तदपि॥ न च प्रत्ययग्रहणपरिभाषया तदंतग्रहणं स्यादिति वाच्यं॥ येन विधिरिति सूत्रेणैव तल्लाभस्य वक्ष्यमाणत्वात्॥ विशेष
णविशेष्यभावे च कामचारात्॥ नन्वेवमपि स्थानिवत्सूत्रेण स्यादेवोदात्ततेति चेत् न। लोपस्याभावरूपतया तदीयांतस्य तदुदात्ततायाश्चाबाधा
त्॥ अत एव हि अभूदित्यादौ लुप्तस्य सिचो नेट्। न ह्यभावस्य भावोवयवः संभवति॥ भाष्यमतेऽनल्विधाविति निषेधाच्च॥ किब्विजादीनां तु नेड्व
शीतीण्निषेधोप्यस्तीति दिक्॥ वस्तुतो यदंगमिति व्याख्यानाद्राजपुरुष इत्याद्यपि निर्बाधं॥ भसंज्ञापानिषेधेनाल्लोपाभावात्॥ सुबंतत्वप्रयु राम॰
क्तपदसंज्ञया नलोपाच्च॥ तथा अहदीतीत्यत्र रेफोपि सिद्धः॥ सुपीति निषेधो हि वस्तुतोंगस्य कार्यमिति नेह प्रवर्तते॥ अंगाधिकारनिर्देशे १४२

तुश्चवर्त्तितासी॥अतएव अन्होरविधौ इति वचनमारभ्यते॥ नचासुपीति वचनसामर्थ्यात्तत्पलक्षणे नासुपीति निषेधो नेति वाच्यं॥दीर्घाह्णानिदा
घइत्यादौ हल्ङ्यादिलोपेपि रेफापत्तेः॥एतेनासुपीति पर्युदासमाश्रित्याहर्दृशातीत्यत्रदाधातोः सुब्भिन्नस्य सत्वाद्रेफ इत्यपि कल्पनमपास्तं॥
दीर्घाह्णानिदाघइत्यत्रातिप्रसंगात्॥ यद्यपिरुत्वरत्वयोरसिद्धत्वया पूर्वं नलोपे कृते अकारस्यैव रुत्वरत्वे प्राप्नुतस्तथापि रुत्वरत्वयोर्विधये नलो
पोनेष्यते॥रुत्वरत्वोभयारंभसामर्थ्यात्॥ नच संबुद्धौ नलोपनिषेधाद्धे अहर्गच्छ हे दीर्घाहोनिदाघेत्यत्रचरितार्थता॥एवमपि रूपरात्रीति रुत्वस्य
वैयर्थ्यापत्तेः॥ नह्यकारस्य रौ रे वा विशेषोस्ति इति दिक्॥ स्यादेतत्॥ परमवाचा परमगोदुहा परमलिहा परमदंडिना परमदिवा परमकुमार्येत्यत्रां
तर्वर्त्तिनीं विभक्तिमाश्रित्योत्तरखंडस्य पदसंज्ञा स्यात्॥ ततश्चचोः कुः दादेर्धातोर्घः हो ढः नलोपः प्रातिपदिकांतस्य दिवउत् इकोसवर्णे शाक
ल्यस्य ह्रस्वश्चेत्येते विधयः प्रसज्येरन्॥ नच भसंज्ञया पदसंज्ञाया बाधः॥भिन्नावधिकत्वात्॥ भसंज्ञा हि समस्तस्य प्राप्ता॥पदसंज्ञा तूत्तरखंड
स्य॥ अत्र भाष्यं॥ भसंज्ञासूत्रे सुप्तिङंतमिति सूत्रात् सुबंतमित्यनुवर्त्तनीयं॥ तदयं सूत्रार्थः॥ यजादौ असर्वनामस्थाने परे यस्मात्प्रत्ययविधिस्त
था भूतः पूर्वः समुदायो भसंज्ञो भवति॥ तदवयव सुबंतं यद्यस्ति तर्हि तदपि भसंज्ञं स्यात्॥ यचादावनंतर इति॥ इह च समुदायस्य भसंज्ञा प्र
धानशिष्टा॥ अवयवस्य त्वन्वाचयशिष्टा॥ भक्तुः क्यङ् सलोपश्चेतिवत्॥ तेन राज्ञ इत्यादौ सुबंतावयवाभावेपि भवति सुबंतावयवसत्वे तु समु
दायस्य चेत्युभयोरपि भवतीति विवेकः॥ नन्वेवमपि परमवाचो परमवाच इत्यादौ भत्वाभावात्पदकार्यं स्यादेवेति चेत्॥ न॥ तत्र भत्वाभावेप्यसर्व
नामस्थाने इति पदसंज्ञानिषेधात्॥ स्वादिष्वसर्वनामस्थाने इत्यत्रापि हि सुबंतमित्यनुवर्तते॥ भसंज्ञाप्रतिषेधश्चायं॥ तत्सामर्थ्यादनंतरस्य वि
धिर्वेति न्यायो नाश्रीयते॥ तदयमर्थः॥ सर्वनामस्थाने परतः पूर्वः समुदायः पदं न स्यात्॥ तदवयवभूतं सुबंतं च पदं न स्यादिति॥ तच्च समुदा

श॰ कौ॰ स्यस्वादिष्विति प्राप्ता अवयवस्यनुसुबंतमिति प्राप्ता पदसंज्ञा नेन निषिद्धेति पक्षमवाचावित्योदिसिद्धं॥ नन्वेवंसुवाक्सुराजेत्यादौ कुत्वादि नस्या
१४३ त्॥ सावपि समुदायस्यावयवस्य च प्राप्तयोर्द्वयोरपि पदसंज्ञयोर्निषेधादिति चेन्न॥ असर्वनामस्थान इत्यत्रोत्तरसूत्राद्यचीत्यपकृष्य यज्ञा
दौ सर्वनामस्थाने उभयविधपदसंज्ञानिषेधात्॥ सौ हि द्विधापि पदसंज्ञा भवत्येव॥ नन्वेवं श्रूयमाणे सौ पूर्वस्य पदसंज्ञा स्यात् इति चेत्॥ इष्टा
पत्तेः॥ नन्वेवमेचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ इति सूत्रे भद्रं करोषि गौरित्यत्राति प्रसंगवारणाय तु पदांतग्रहणं कर्त्तव्यमिति
वार्त्तिककृता वक्ष्यमाणं विरुध्येत॥ क्रियमाणेपि पदांतग्रहणे दोषतादवस्थ्यादिति चेत्॥ न॥ नत्रांतग्रहणमात्रं कृत्वा वाक्यस्य टेरित्यतो वा
क्यग्रहणमनुवर्त्य वाक्यांतस्येति व्याख्यानसंभवात्॥ न देवं समासचरमभागस्य पदसंज्ञा यजादौ क्वापि नास्तीति स्थितम्॥ क्वचिन्निषेधा
त्क्वचित्तु भत्वेन बाधादिति विशेषः॥ नन्वेवं दूरान्मुक्तमित्यादावलुङ् न स्यात्॥ होतापोतारावित्यत्रानङ् न स्यात्॥ उत्तरपदे तद्विधानादिति चेत्॥
न॥ उत्तरपदशब्दस्य समासोत्तरावयवे रूढतया पदसंज्ञाविरहेपि तत्प्रवृत्तेः॥ सर्वातएव चेयं रूढिः॥ तेन होतृपोतृनेष्टोद्गातार इत्यत्र मध्यमाना
मुत्तरपदत्वाभावात्ततः पूर्वपदस्यानङ् नेति दिक्॥ नन्वेवं दधिसेचौ दधिसेच इत्यत्र सात्पदाद्योरिति षत्वनिषेधो न स्यादिति चेत्॥ न॥ पदादादिः
पदादिः तस्य षत्वं नेति व्याख्यानात्॥ न चैवं ग्रामेषु हरिष्वित्यत्रापि निषेधः स्यादिति वाच्यम्॥ स्वादाविति या पदसंज्ञा तामुपजीव्य पदादेर्नेति निषे
धाप्रवृत्तेः॥ एतच्च सात्प्रतिषेधेन ज्ञाप्यते॥ उक्तं च पदादादेर्नेत्येवं व्याख्यानं न तु पदस्यादेरिति॥ तथा सति गतिकारकोपपदानां इति सुबुत्पत्तेः प्रा
गेव समासे दधिसेगित्यादौ षत्वस्य दुर्वारतापत्तेः॥ नन्वेवमपि बहुसेचौ बहुसेच इत्यत्र षत्वं स्यादेव॥ बहुचोऽपदत्वेन षत्वप्रतिषेधाप्राप्तेरि राम
ति चेत्॥ सत्यं॥ वचनमेवेह कर्त्तव्यं॥ बहुच् पूर्वस्य नेति॥ अत्रायं सूत्रन्यासः। सातेः सः षत्वं न स्यात्॥ ततः बहुच् पदाभ्यां॥ अभ्यामुत्तरस्य १४३

स्यष त्वं न स्यादादिग्रहणं न कर्त्तव्यं ॥ तस्मादित्युत्तरस्येत्येव सिद्धेः ॥ तदिदं बहुज्ग्रहणमादिग्रहणेन निमातव्यमिति ॥ वार्त्तिके तु उत्तरपदत्वे
चापदादिविधाविति वचनेनैव परमवाचेत्यादि साधितं ॥ उत्तरस्य समासोत्तरभागस्य पदत्वे कर्त्तव्ये लुमता लुप्तेप्रत्ययलक्षणं न स्यात् ॥ अतो
नकुत्वादि ॥ पदादिविधौ प्रत्ययलक्षणं स्यादेव [illegible]नषत्वनिषेधाद् धिसेचेत्यादि सिद्धिः ॥ अस्मिंश्च पक्षे प्राक् सुबुत्पत्तेः समासोऽत्र नाभ्युपगन्तव्यः
॥ धनक्रीतेत्यादि सिद्धये तस्यानित्यताया वक्ष्यमाणत्वात् ॥ कैयटस्त्वाह ॥ दध्नः सेचाविति विग्रहे षष्ठीति समासः न त्वयमुपपदसमासः । सोऽप
पदात्तु विज्नास्ति ॥ अनभिधानात् ॥ अतो दधिषेचावित्यादि न भवत्येव ॥ अस्मिन्नपि पक्षे बहुच्पूर्वस्य चेति वचनं कर्त्तव्यमेव ॥ कृते हि बहुचि विशि
ष्टस्यार्थवत्त्वेन प्रातिपदिकत्वे सुपो लुकि च कृते पुनर्विशिष्टात्सुबंतरमुत्पद्यत इत्यर्थवत्सूत्रे वक्ष्यते ॥ तत्रांतर्वर्तिनीं विभक्तिमाश्रित्य प्राप्तं पदत्
त्वं तत्कृत्वा दौ कर्त्तव्ये मा भूत् ॥ षत्वनिषेध एव यथा स्यादिति ॥ अत्रायं निष्कर्षः । पूर्वसूत्रे एव स्थित्वा उत्तरपदत्वे च पदादिविधौ ॥ बहुच् पूर्वस्य
चेति पाठ्यं ॥ पदादिविधावेव प्रत्ययलक्षणं भवति न तु पदांतविधाविति नियमार्थं चेदं वचनद्वयं इति व्याख्येयं । एवं च नञ् न कर्त्तव्य इति लाघ
वं ॥ अस्मिन्पक्षे सो पदत्वं नास्ति ॥ प्रागुक्तकुसृष्टेरभावात् । तदेतत्सर्वं हृदयमभिप्रेत्य हलङ्यादिसूत्रे भाष्यकारैरुक्तं ॥ अथ सावपि पदं भव
ति ॥ एवमप्युभयतः पाशा रज्जुरिति ॥ ननु अंगाधिकारग्रहणपक्षे वस्तुतोऽङ्गस्येति पक्षे चाभूवन्नित्यत्र जुसप्राप्नोतीति चेत् ॥ सत्यं ॥ आत इति
नियमान्न भवति ॥ ननु देवदत्तं याज यांचकार इत्यत्र लुकं बाधित्वा परत्वान्निबादिषु कृतेषु आम इति वेषां लुकि प्रत्ययलक्षणेन तिङंतत्वादा
मंतस्य निघातः स्यात्ततः परस्य च न स्यादिति चेन्न ॥ लावस्थायामेव येन नाप्राप्तिन्यायेन [illegible]दीन्बाधित्वा लुक्प्रवृत्तेः ॥ तदुक्तं ॥ आ
मि लिलोपात्तस्य चानिघातस्तस्माच्च निघात इति ॥ ननु देवदत्तो युष्मत्पुत्र इत्यादौ षष्ठ्यंतस्य विधौ पश्मानायुष्मदस्मदोरादेशाः प्राप्नुवंतीति चेन्न

शा·कौ· सत्यं॥स्यग्रहणान्नभवति॥नचविभक्तौ परतः पूर्वभागमात्रस्य माभूत्किंतु विभक्तिविशिष्टस्येत्येतदर्थस्य ग्रहणं स्यादिति वाच्यं॥षष्ठीचतु
१४४ र्थीहितीयानामिति निर्देशेनापि गतार्थत्वात्सर्वस्य पदस्येत्यनुवृत्तेश्च॥तस्माद्विभक्तिलोपेकृतेमाभूदित्येतदर्थमेवस्य ग्रहणं॥अवस्थानंहि
श्रूयमाणास्वेव भवति॥यद्वा॥तिष्ठतिरद्या नौवर्त्तते॥यथासमयेतिष्ठ सुग्रीवेति॥समयंमाहासीरित्यर्थः॥तथाचापरित्यक्तविभक्तिकयोरि
त्युक्त्या श्रूयमाणविभक्तिकत्वं स्पष्टमेव लभ्यते॥इदंत्ववशिष्यते॥वस्क्रतोंगस्येतिसिद्धांतेचिणोलुगितितल्लोपेकृतेहनिणिङादेशः न
स्युः॥अवधिभवतादस्युः॥अगापिभवताग्रामः॥अध्यगायि भवतानुवाकइति॥लुङिपरतोह्येतेविधीयंतेइतिचेत्॥मैवं॥लुङियदार्द्ध
धातुकं तत्र हनिणिङादेशविधानात्॥तस्माद्वस्तुतोंगस्येति पक्षोनिर्दोष इतिस्थितं॥ अचोंत्यादिटि॥ अच इति निर्द्धारणे षष्ठी॥जातौएक
वचनं॥अचांमध्येयोंत्यस्तदादिशब्दरूपंटिसंज्ञंस्यात्॥टितआत्मनेपदानांटेरेरित्यादयः॥पचते।पचेते इत्यादि॥अंतेभवोंत्यः
॥दिगादित्वाद्यत्॥अंत्यआदिर्यस्येतिबहुव्रीहिः॥नित्यसापेक्षत्वात्समासः॥ ॥अलोंत्यात्पूर्वउपधा॥ ॥अंत्यादलःपूर्वोवर्णउपधा
संज्ञःस्यात्॥उपधागुणः।चेतति॥च्योतति॥वर्द्धतइत्यादि॥ननुपूर्वस्याविशेषितत्वाच्छासिधातौ शा इति समुदायस्यसंज्ञास्यादिति चेत्॥अ
स्तु॥नैवं शास इदङ्हलोरितीत्वंस्यात् इति वाच्यं॥अलोंत्यपरिभाषयाइष्टसिद्धेः॥स्यादेतत्॥नानर्थकेलोंत्यविधिरनभ्यासविकारेष्विति
निषेधः प्राप्नोति॥इहचविभक्तीत्यत्र भृञामित् अंत्यस्ययथास्यादित्येतदर्थमनभ्यासविकारेष्वित्युक्तं॥विकारोनामवर्णात्मकआदेशः॥
अतएवदेहीत्यत्रलोपःसर्वादेशएवभवतीति॥अत्रोच्यते॥नतावदेषापरिभाषासूत्रकृतःसंमता॥ तस्यलोपइतिसूत्रेञ्जिटुडूनांसर्वस्यलोपा राम·
र्थंतस्यग्रहणात्॥नापिभाष्यकारस्यसंमता॥एतत्प्रयोजनानामन्यथोपपत्तेर्भाष्येउक्तत्वात्॥तथाहि॥ अव्यक्तानुकरणस्येतितावदंत्यादे १५५

श्नो न भवति॥ नाम्रेडितस्यांत्यस्य तु वेति ज्ञापकात्॥ इतरथा ह्याम्रेडितस्य वेत्येव ब्रूयात्॥ घ्वसोरेद्धावित्यत्रापि लोपो यीति प्रकृते पुनर्लोपग्रहण
सामर्थ्यात्सर्वादेशः॥ तथा चेत्थं सूत्रन्यासः॥ घोरभ्यासस्य लोपः॥ लोपशब्दांतरस्यानुवृत्त्या सर्वलोपः स्यात्॥ अस्ते श्चैत्॥ अस्तेर्घो श्चेद्भवति ह्या
विति। अथवा लोपश्च इति छेदः॥ संज्ञायां कृतो ऽनुबंधः संज्ञिनि फलति यथा ङमुटि॥ भाष्ये तु द्विशकारकौ निर्देश इत्युक्तं। तत्र लोप इति भिन्नं पदम्।
श इत्यस्य उपदेश एव इत्संज्ञा॥ तत्फलं तु प्रयोगे॥ सर्वत्रानुबंधानां काकादिवदनवयवी भूयैव व्यावर्त्तकत्वादिति भावः॥ अस्मिन्नपि पक्षे झलि
परे यः संयोगः तदादित्वात्सोर्लोपे एकशकारक एव पाठः सुवचः॥ स्पष्टार्थअनउपधालोपिन इत्यादावकारस्येवेहापि सकारस्य लोपो मास्त्विति तु भा
ष्याशयः॥ आभ्यामित्यादौ हलि लोप इति सूत्रेणाक्कारस्येदम इद्रो विधीयमानो लोपोपि तर्ह्यंत्यस्य स्यादिति चेन्न॥ अनाप्यक इति सूत्राद् द्वि
त्यनुवर्त्य तस्य हलीति सप्तम्या षष्ठीं प्रकल्प्य अत एव लोपविधानात्॥ तथा च तत्रालोंत्यपरिभाषया नकारलोपे अतो गुण इति पररूपे च कृते
आभ्यामेषामित्यादि सिद्धं॥ अत्र लोपोभ्यासस्येति सूत्रेप्यत्राभ्यासत्वाश्रयेन तु तदेकदेश इति व्याख्यानादत्रग्रहणसामर्थ्यात्सर्वलोपः॥ यद्यपिस
नीत्यपेक्षितं ददौ दधौ इत्यादिवारणाय॥ सादाविति च जिज्ञपयिषतीत्येतद्वारणाय॥ प्रकृतयोपि मिपक्षतीत्यादिवारणाय॥ विषयोप्यपेक्षितः
मुचोऽकर्मकस्य गुणो वेति मुमुक्षति गामित्यादिवारणाय तथापीदं सर्वमनुवृत्त्यैव सुलभमिति सर्वलोपार्थमेवात्रग्रहणं बोध्यम्॥ नन्वेवमपि वि
भाषा भवद्भगवद्घवतामोच्चावस्येति वार्त्तिकेन विधीयमान ओकारोंत्यस्य स्यादिति चेन्न॥ वस्येति सिद्धे अवस्येति गुरुकरणसामर्थ्यात्सर्वादे
शसिद्धेः॥ तस्मान्नानर्थक इति परिभाषा निष्फला सूत्रभाष्यासंमता चेति स्थितम्॥ एवं च शासेः शाशब्दस्योपधात्वेपि शिष्ट इत्यादि सिध्यति॥
संयोगोपधग्रहणं कृञर्थमित्यादिव्यवहारास्त्वस्मिन्पक्षे संगच्छंते इति दिक्॥ यद्वा अवध्यवधिमद्भावः सजातीयानामेवेत्युत्सर्गः॥ लोके त्व

मीषांब्राह्मणानामंत्यात्पूर्वमानयेत्युक्ते एकएवअंत्यादव्यवहितं पूर्वआनीयतेनतुसमुदायः॥एवंचेहाप्यलः अव्यवहितपूर्वोलेवसंज्ञीनतुस
मुदायः॥नवाव्यवहितोल्॥संयोगोपधव्यवहारस्तुभाक्तः॥अवयवधर्मस्यसमुदायेउपचारात्॥एवंस्थितेअलइतिजसंतमपिसुवचं।प
जात्याख्यायामितिबहुवचनं॥पूर्वइत्यपिजसंतं॥अंत्योप्यलेवसाजात्याल्लभ्यते॥यद्वा॥अलइतिनिर्धारणेषष्ठी॥जातौचैकवचनं॥अलां
मध्येऽंत्यात्पूर्वइत्यर्थः॥तथाचेहालइतिजस्ङसिङस्वितिपक्षत्रयमपिस्थितं॥तस्मिन्नितिनिर्दिष्टेपूर्वस्य॥सप्तमीनिर्देशेषुपूर्वस्यैवकार्यं
स्यात्तच्चनिर्दिष्टेऽव्यवहितोच्चारितेसतीत्यर्थः॥निशब्दोनैरंतर्यंदिशिरुच्चारणक्रियः॥निरंतरंदिष्टोनिर्दिष्टः॥नियमार्थमिदंसूत्रं॥तथाहि
॥इकोयणचीत्यत्राचीतियस्यचभावेनभावलक्षणमितिसप्तमी॥अश्रूयमाणक्रियत्वाच्चांतरंगस्यास्त्यर्थस्यलाभः॥तेनाचिसतियण्भवती
त्यर्थः॥यद्वागंगायांघोषइतिवदौपश्लेषिकेऽधिकरणेसप्तमी॥तत्रसत्त्वंपरस्येवपूर्वस्यापिसंभवति॥एवमुपश्लेषोपि॥तत्रयुगपदेकस्य
कार्यित्वनिमित्तत्वयोरसंभवाद्दध्युदकंमध्विदमित्यादौइकारोकारयोःपर्यायेणयण्प्राप्तः॥पूर्वस्यैवेतिनियम्यते॥तथा॥अग्निचिदत्रेतिव्य
वहितस्यापियण्प्राप्तःअनंतरस्यैवेतिनियम्यते॥ननुगवित्ययमाहेत्यादौस्वरूपपदार्थकतामितिशब्दःकरोतितथाइहापि॥एवंचत
स्मिन्नणीत्यत्रैवेयंपरिभाषाप्रवर्त्तेत॥अस्तिहितत्रव्यवच्छेद्यं॥हेयौष्माकीणअस्मभ्यंदेहिहेअस्माकीनयुष्मभ्यंददामीत्यादौख
ञण्भ्यांपरस्याप्यादेशप्रसंगसत्वात्॥सत्यं॥इतिकरणःपदार्थविपर्यासकृत्।लोकेऽर्थपरतायाऔत्सर्गिकत्वात्तत्रशब्दपरतांकरोति।
शास्त्रेतुविपरीतं॥किंच॥यदितस्मिन्नणीत्यत्रैवेयंप्रवर्त्तेततर्हितत्रैवपूर्वग्रहणंकुर्यात्॥तस्मान्नेदंतस्मिन्नित्यनुकरणं॥किंतुअग्निरिह
स्त्रीत्यादिसकलसंग्रहार्थंस्वतंत्रस्यसर्वनाम्नोयंनिर्देशः॥तस्यापत्यंतत्रभवइत्यादिवत्॥तस्मादित्युत्तरस्य॥पंचमीनिर्देशेषुउत्त

रस्यैव कार्यं स्यात्तच्चाव्यवहितोच्चारिते॥ तिङ्ङ्तिङः॥ अग्निमीळे॥ इह न भवति॥ ईडेऽग्निं॥ इह कारकविभक्तेरसंभवाद्दिग्योगलक्षणा पंच
मी॥ तत्र दिक्शब्दोऽध्याह्रियमाणेत्तरशब्दवत्पूर्वशब्दोप्यविशेषात् अध्याह्रियेत॥ व्यवहितोपि च गृह्येत॥ तथा च उत्सं स्याता इत्यत्राप्युः
स्यास्तं भो रित्यस्य प्रसंगः॥ तदेवं पूर्वसूत्रमेतत्सूत्रं चेति द्वयमपि नियमार्थमिति स्थितं॥ तथा च वार्त्तिकं॥ तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयो
विशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनमिति॥ इहापि तस्मादिति स्वतंत्रस्य सर्वनाम्नो निर्देशः प्राग्वत्॥ न त्वनुकरणं॥ तथा हि संतिपद्यं
पि तस्मान्नुड्ढ्हलि इत्यत्रातः आदेरिति दीर्घात्पूर्वस्यागस्यासंभवात्प्रयोजनाभावान्नैतत्परिभाषोपस्थितिस्तथापि तस्माच्छसो नः पुंसि तः
स्मान्नुड चीति योगद्वये स्यात्॥ उच्चरत आनुपरुभृते गौरनश्व इत्यादेर्व्यावर्त्यस्य तत्र संभवादितिदिक्॥ स्यादेतत्॥ एतत्सूत्रं नियमार्थमस्तु
॥ पूर्वसूत्रमपि औपश्लेषिकसप्तमीपक्षे नियामकमस्तु॥ सत्सप्तमीपक्षे तु नियामकत्वमयुक्तं॥ षाष्ठभाष्यकैयटविरोधात्॥ तथा हि॥ श्वा
न्नलोप इत्यत्र भाष्यं॥ नैषा परसप्तमी॥ का तर्हि सत्सप्तमी क्ङिति सतीति॥ तथा तत्रैव कैयटः॥ कथं पुनः संभवत्यां परसप्तम्यां सत्सप्तम्याश्रयितु
मुक्ता॥ यथेष्टं वाक्याध्याहारादद्दोषः। क्ङिति सतीत्येव हि विज्ञायमाने पौर्वापर्यानाश्रयणान्नास्ति तस्मिन्नित्यस्याः परिभाषाया उपस्थानं॥
यदा त्वौपश्लेषिकेऽधिकरणे सप्तमी तदा किं पूर्वस्य कार्यं अथ परस्येत्यनियमे नियमाय परिभाषोपस्थानमिति॥ अत्रोच्यते॥ षाष्ठग्रंथस्य प्र
कृतमात्रपरत्वाद्विरोधः॥ तथा हि॥ श्वान्नलोप इति सूत्रे शकारवतो ग्रहणं मास्तु नादित्येवास्तु इति प्रश्ने नंदना इत्यादावतिप्रसंग इत्युत्तरितं॥
अनिदितामित्यस्यानुकर्षणे तु हि नस्तीत्यत्र न स्यात्॥ ततः क्ङितीत्यनुवर्त्य श्नमेव क्ङित्त्वमाश्रित्य हि नस्तीत्यत्र लोपोस्त्विति शंक्यते॥ यदि
चास्यामवस्थायां तस्मिन्निति परिभाषोपतिष्ठेत — तदा नंदमाना इत्यादौ चानशो ङित्वाल्लोपः प्रवर्त्तेत॥ श्नमः शित्करणं चानर्थकं स्यात्॥ तद्धि शित्वा

त्सार्वधातुकतयाऽङित्त्वमिममेवाश्रित्य हि नस्तीत्यत्र नलोपे क्रियमाणे सार्थकं नत्वन्यथा॥ नन्वार्द्धधातुकसंज्ञा निरुत्त्वाशित्वं सार्थकं॥ नस्यो हि
सत्यामनक्ति भनक्ति इत्यतो लोपः स्यात्॥ रुणद्धि भिनत्तीत्यत्र गुणः स्यात्॥ तृणेढीतीडागमः स्यात्॥ नेड्वशीति तु न प्रवर्त्तते अकृत्त्वादिति चेन्न॥
श्नमः पूर्वभागस्यानंगत्वनयोक्तविधीनामप्राप्तेः॥ कथमनंगतेति चेत्॥ इत्थं॥ प्रत्ययविधौ यत्पंचमीनिर्दिष्टं धातोः प्रातिपदिकादित्यादि तद्धादिन
स्मिन्प्रत्यये परतोंऽगमिति हि सूत्रार्थः॥ इह तु यत्पंचमीनिर्दिष्टं रुधादिभ्य इति नास्मात्प्रत्ययः परः॥ यस्माच्च परः पूर्वभागान्नासौ तस्मिन्विधी
यमाने पंचम्यानिर्दिष्टः॥ अत एव भिनक्तीत्यादावतो दीर्घो यञीति न प्रवर्त्तते॥ न च श्नसोरल्लोप इत्यत्र विशेषणार्थं शित्करणं स्यादिति वाच्यं॥ न सो
रल्लोप इत्युक्तेऽपि दोषाभावात्॥ नन्वेवं नांतास्त्योर्ग्रहणं स्यात्॥ तथा च कनेर्यङ्लुकि च कांत इत्यत्रापि स्यादिति चेन्न। सिद्धांतेऽपि श्नप्रत्ययसांत
योर्ग्रहणापत्तौ वस्त इत्यादावतिप्रसंगसाम्यात्। साहचर्यात् प्रत्ययधात्वोर्ग्रहणमिति तु तुल्यं। ननु नसोरल्लोप इत्युच्यमाने यत्र न प्रत्ययस्य किङ्
त्यानंतर्यं तत्रैव भविष्यति यत्वङ्वाच्यस्तः यत्नत्क्षामनत इति॥ मैवं॥ अनुवर्तमानेन सार्वधातुकग्रहणेन प्रत्ययो विशेष्यते॥ तथा च विध्यसंस्प
र्शान्निर्दिष्टपरिभाषानुपस्थितौ निमित्तसप्तमी॥ सार्वधातुकनिमित्तस्य न प्रत्ययस्यास्तेश्चालोपः क्ङित्यनंतर इति॥ ननु चात उत्सार्वधातुक इ
ति सूत्रे सार्वधातुकग्रहणं प्रत्याख्यातमिति चेन्न॥ सति शित्त्वे प्रत्याख्यानात्। तदेवं श्नमः शित्वकरणसामर्थ्यात् क्ङितीति सत्सप्तम्यामपि प
रिभाषानोपतिष्ठत इति स्थितं। पूर्वपक्षत्वाद्नास्थया तत्र योक्तमिति वा वर्णनीयं। इह सूत्रद्वये षष्ठी प्रक्लृप्ति पक्षोऽपि भाष्ये स्थितः॥ तथाहि॥ षष्ठी
स्थाने योगेति सूत्रात् षष्ठीत्यनुवर्त्तते सप्तम्यर्थनिर्देशे पूर्वस्याव्यवहितस्य षष्ठी स्यात्॥ पंचम्यर्थनिर्देशे उत्तरस्याव्यवहितस्य षष्ठी स्यादिति।
तत्र इको यणचीत्यादौ सूत्र एव षष्ठीश्रवणात् षष्ठीमनूद्य पूर्वस्यानंतरस्यैषा न तूत्तरस्य न वा पूर्वस्यापि व्यवहितस्येत्येतावन्मात्रमुच्यते॥

आनेमुगित्यादौ तु षष्ठ्या अश्रवणात् सापि प्रकल्प्यत इति विशेषः ॥ सा चानियतयोगत्वात् स्थानषष्ठी यस्य च स्थानषष्ठी तस्यैव कार्यनियम इति
सोप्यर्थात् सिद्ध्यति ॥ यत्र तूभयनिर्देशस्तत्रोभयं तावन्न प्रकल्पकं कार्यित्वनिमित्तत्वयोरेकत्र युगपदसंभवात् ज्ञापकाच्च ॥ तथा चैकः पूर्वपर
योरिति सूत्रे कैयटः ॥ सूत्रद्वयप्रमाणत्वाद्द्वे भवेतां प्रकल्पिके षष्ठ्या विभक्ती तेनात्र ज्ञापनार्थत्वमाश्रितमिति ॥ न च पर्यायेणोभयप्रकल्प
नम् ॥ अतुल्यबलत्वात् ॥ तथा हि ॥ आनेमुगित्यत्र सप्तमी निरवकाशा सा पूर्वत्र चरितार्था या अतो येय इति पंचम्याः षष्ठीं कल्पयति ॥ एवमी
दास इति सप्तम्याः ॥ तथा तास्यनुदात्तेत्सूत्रे अभ्यस्तसिजर्थे सार्वधातुके इति सप्तमीनिर्देशं वक्ष्यति सा च सप्तम्युत्तरत्र चरितार्थेति त
स्या एव षष्ठी कल्प्यते ॥ तथा वह्वोर्लोप इत्यत्र बह्वोरिति पंचमी अकृतार्था या इष्ठेमेयःस्विति सप्तम्याः षष्ठीं कल्पयति ॥ अत एव भूच्च बहोरिति
पृथक् षष्ठीनिर्देशः ॥ तथा गोतो णिदिति पंचमी सर्वनामस्थान इति सप्तम्याः षष्ठीं प्रकल्पयति ॥ गोशब्दस्य णित्वे प्रयोजनाभावाच्च ॥ न च तिष्ठ
ति गौरित्यादौ पूर्वस्य वृद्धिः फलमिति वाच्यम् ॥ गोशब्दं प्रति तिष्ठतेरनंगत्वात् ॥ एवं प्रायेण पंचम्या अकृतार्थतेति भाष्ये स्पष्टं । आमि सर्वनाम्नः सु
डित्यत्रापि पंचम्यनवकाशा ॥ आमीति सप्तमी तूत्तरार्थं तया सावकाशा ॥ यदि तु इह आदित्यनुवृत्त्या पंचम्या सामानाधिकरण्यं संपाद्य सर्व
नाम्न इति पंचम्यपि कृतार्थेति ब्रूयात्तर्हि यथोद्देशपक्षाश्रयणेन परत्वात्तस्मादित्युत्तरस्येति भविष्यति । तदुक्तं । उभयनिर्देशे परत्वात् पंचमी
निर्देश इति ॥ वस्तुतस्तु नेह सामानाधिकरण्यम् ॥ वर्णाश्रमेतराणामित्यस्य सिद्धये सर्वनाम्नो विहितस्येति व्याख्यानात् ॥ येषां तेषामित्या
द्यर्थं मकारात्परस्येति व्याख्यानाच्च ॥ दीर्घाच्छे तुग्भवतीत्यत्र तु षष्ठ्याः स्थाने पंचमी ॥ तेन दीर्घस्यैव तुग् भवति न तु छकारस्य सुराच्छा
येति निर्देशश्चेह लिंगं ॥ अन्यथा हि खरि चेति चर्त्वेन सुराश्चायेति चकारद्वयं निर्दिशेत् ॥ प्रत्ययविधौ तु पंचमी न प्रकल्पिका ॥ षष्ठ्या अनुवादे

 निभक्तित्वात्॥ अप्रसिद्धस्य चानुवादासंभवात्॥ तत्राविधियमाप्रसंगे ननियमकारिण्याः परिभाषाया अप्रवृत्तेश्चेति दिक्॥ स्वं रूपं शब्दस्या॰
 शब्दसंज्ञा॥ शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना॥ अग्नेर्ढक्॥ आग्नेयं॥ आङोयमहनः॥ आयच्छते। आहते॥ इह अग्नि
आङ् यमहन् एषामेतत्सूत्रोपात्तानां प्रयोगसमवायिनस्त एवसंज्ञिनः। अशब्दसंज्ञेति किम्॥ उपसर्गे घोः किः। दाधाघ्वदाप् इति यथा स्यात्॥
घुधातोः शब्दार्थान्मा भूत्। शब्दः शब्दशास्त्रम्॥ तत्र संज्ञेति सप्तमीसमासः॥ ननु शब्दस्य संज्ञेति॥ कर्मकरणमित्यादिष्वर्थसंज्ञासु स्वरूपग्रह
णापत्तेः॥ स्यादेतत्॥ रूपग्रहणं विनापि स्वशब्देन तदेव ग्रहीष्यते॥ प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादंतरंगत्वान्नियतोपस्थितिकत्वा
च्च॥ अर्थो हि प्रतीतौ संबंधग्रहणमपेक्षते साधारणश्च। पर्यायैरपि प्रत्यायनात्॥ बहिरंगश्च। पदज्ञानजन्यबोधविषयत्वात्॥ अनियतोपस्थि
तिकश्च अनुकरणदशायामप्रतीतेः। तत् किं रूपग्रहणेनेति चेत्॥ अत्राहुः। इह शास्त्रे अर्थोपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणं॥ तेनार्
र्थवद्ग्रहणेनानर्थकस्येति उपपन्नं भवति॥ ततोक्तज्ञापकादर्थो ग्राह्यः स्वं रूपमिति वचनाद्रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणं। तेन काशे कुशे इत्य
त्र शे इति प्रगृह्यसंज्ञा न भवति॥ एतत्सूत्रं भाष्ये प्रत्याख्यातं॥ तथाहि॥ आरभ्यमाणेपि सूत्रे पश्चुरपत्यं देवता प्रांचः उदंचो भरता इत्यादय पत्त्याव
ल्लोकवदर्था एव गृह्यंते॥ अग्नेर्ढगित्यादौ तु शब्द एव ग्रहीष्यते॥ अर्थस्य प्रत्ययेन पौर्वापर्याभावात्॥ ङ्याप्प्रातिपदिकादित्यधिकाराच्च॥ उपसर्गे
घोः किरित्यादौ घुधातुस्तु न ग्रहीष्यते॥ दाधाघ्वदाबित्यारंभात्॥ उक्तं हि॥ व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचिदिति॥ अर्थवद्ग्रहणपरिभाषा
पि प्रत्ययादिसूत्रे राजिं पठित्वा पुनर्भ्राजि पाठात् सिद्धा न्यायसिद्धा च॥ अग्नेर्ढगित्यादौ हि शब्दविशिष्टस्यार्थस्योत्सर्गतउपस्थितौ विशेष्ये कार्य 
बाधाद्विशेषणीभूते शब्दे प्रवर्तमानं कार्यमुपस्थितार्थोपहितएव न त्वनर्थकेपि॥ अर्थस्य विशेषणविशेष्यभावव्यत्यासमात्रेणोपपत्तौ सर्वात्मना 

त्यागायोगात्॥ गौणमुख्यन्यायोप्येतन्मूलः गौणस्य प्रथमतोऽनुपस्थितेः एतेनाभिव्यक्तपदार्थायेइत्यपि व्याख्यातम्॥ तस्मान्न्यायतएवसकल
निर्वाहे सूत्रंनारंभणीयमिति॥ ननूत्तरत्रचतुःसूत्र्यामनुवृत्तये स्वरूपमित्यवश्यंवाच्यमेवेति चेन्न अनुवृत्तेरनावश्यकत्वात्॥ तथाहि॥ अणुदि
त्सूत्रेनावतस्वस्यापि स्वसावर्ण्यादेवसिद्धं॥ कथमन्यथा अवत्तमित्यत्र झरोझरीतिलोपः॥ तत्रव्यक्तिभेदात्सावर्ण्यमिति चेत् इहापि बोध्यबोधक
व्यक्त्योर्भेदात्॥ तथातपरस्तत्कालस्येत्यत्रापि॥ आदिरंत्येनेत्यत्रापि आदिग्रहणावृत्त्यासिद्धम्॥ आवृत्तौलिंगंतुनादिचीत्यादि। येनविधिरित्य
त्रतुवार्त्तिककारस्तस्यचेति वक्ष्यत्येव। वस्तुतस्तु नदपिनवाच्यम्॥ व्यपदेशिवद्भावेनैवसिद्धेः॥ अप्रातिपदिकेनेति तु तत्रैवप्रत्याख्यास्यामः॥ अ
तएवयेनविधिस्तदाद्यंतत्वे प्रयोजनमित्याद्यंतवत्सूत्रस्थवार्त्तिकं संगच्छत इतिदिक्॥ सित्तद्विशेषाणांवृक्षाद्यर्थं॥ अत्रसिदित्युपलक्षणं किं
चिल्लिंगमसमासज्य इत्थंलिंगाविशेषाणांसंज्ञेति वक्तव्यं तच्चलिंगंवृक्षादावासंजनीयमित्यर्थः॥ एवमग्रेपि। तेनविभाषावृक्षमृगेति सूत्रे विशेषाणा
मेवग्रहणात् प्लक्षन्यग्रोधं प्लक्षन्यग्रोधा इतिसिध्यति॥ पित्पर्यायवचनस्यचस्वाद्यर्थं। चकारात्तद्विशेषाणांस्वरूपस्यचग्रहणं॥ स्वेपुषः॥ रैपोषंपुष्टः
॥ अश्वपोषम्॥ स्वपोषं॥ जित्पर्यायवचनस्यैवराजाद्यर्थम्॥ सभाराजामनुष्यपूर्वा इनसभम्॥ ईश्वरसभं॥ नेहराजसभा। हरिश्चंद्रसभा। पर्यायेण
योवक्तिसहिपर्यायवचनः॥ नचस्वस्यस्वेनसहविकल्पः॥ नापिसामान्यविशेषयोर्भिन्नप्रकारकबोधजनकतया तुल्यार्थत्वाभावात्॥ तुल्यार्था
स्तुविकल्पेरन्निति न्यायात्॥ इनशब्दो राजशब्दपर्याय इत्यादिव्यवहारस्तु भीमोभीमसेन इतिवत्॥ झित्तस्य तद्विशेषाणांच मत्स्याद्यर्थं। प
क्षिमत्स्यमृगान्हंति। मात्सिकः॥ शाफरिकः। पर्यायवचनानां न। अनिमिषान्हंति। मीनस्यैष्यत इति भाष्यं॥ मैनिकः॥ मृगपक्षिणोस्तु यन्निर्दे
शः कर्त्तव्यः॥ तेनस्वरूपस्यपर्यायाणांविशेषाणांच ग्रहणमिति व्याख्यातारः॥ इह वृक्षादौ राजादौ च स्वपर्यायैर्नैवाभिमतं सिध्यतीति तत्रैव वक्ष्यते।

प्रा·कौ· इतरत्तु सर्वं वाचनिकमेवेत्यवधेयं॥ अणुदित्सवर्णस्य चाप्रत्ययः॥ अत्राण् परेण णकारेणेत्युक्तं॥ अणुदिच्च सवर्णस्य संज्ञा स्यात् विधीयमानं विना॥
१४८ चकारात् स्वरूपस्य। अस्यच्वौ। शुक्लीस्यात् मालीस्यात्॥ अनेकाचोऽसंयोगपूर्वस्य॥ चिक्यतुः निन्यतुः॥ ऋदोरप्॥ यवः स्तवः लवः पवः॥ उरण्रपरः कर्त्ता किरति॥ नचैवं ऋदोरप् ह्रस्वांतेभ्यः कृआदिभ्योपि स्यादिति वाच्यं॥ दीर्घोच्चारणवैयर्थ्यापत्तेः। अन्वेवमपि अष्टन आविभक्तावित्यस्य सवर्णग्रहो दुर्वारः॥ नहि तत्रापि सामर्थ्यं। ह्रस्वोच्चारणे ह्यर्धमात्रिकस्य मात्रिक एव स्यादिति दीर्घग्रहणस्य उभयार्थतोपपत्तेरिति चेन्न। अप्रत्यय इति निषेधात्॥ दीर्घाणामनण्त्वेन सवर्णग्राहकता नास्तीति प्रागेवोक्तत्वाच्च॥ ननु दीर्घश्चेदनणस्तर्हि ईकारकोहारक इत्यादौ रपरत्वं न लभ्येतेति चेत्॥ आंतोसि। नहि दीर्घः क्वाप्यणग्रहणेन नोपस्थाप्यंत इति ब्रूमः किंतु ग्रहणकशास्त्रे तदुपजीव्येषु वर्णोपदेशादिषु च इतरत्र तु वाक्यापरिसमाप्तिन्यायानवतारादस्त्येवाणग्रहणेन —————— दीर्घग्रहणमिति तत्वम्॥ उदित् कुहोश्चुः। चकार। जगाद॥ अप्रत्यय इति निषेधस्तु उगित्सु न प्रवर्त्तते॥ उगित्करणसामर्थ्यात्॥ अतएवाहुः॥ भाव्यमानोण सवर्णान्न गृण्हातीति। तुक् लुक् नुक् नुडादयस्तु नोदितः। प्रतिज्ञानुनासिक्याः पाणिनीयाः इत्यभ्युपगमात्॥ अप्रत्यय इति किं॥ विधीयमानानां प्रत्ययागमादेशानां सवर्णग्राहकत्वं माभूत्॥ अत इञ्॥ आर्द्धधातुकस्येट्॥ भुषो वुक्॥ अम् संबुद्धौ॥ इदमइश्॥ इह हि सर्वत्र उपदेश इति वचनात् सूत्रांतर्गतेष्वेव इञादिशब्देषु इत्संज्ञा प्रवर्त्तते॥ लोपस्तु तत्रानुपूर्व्या बाधितोपि पदस्वरूपपर्यालोचनायां प्रवृत्तः॥ ततः स्वंरूपमिति संज्ञाबलात् जायमानापदार्थोपस्थितिरनुबंधविनिर्मुक्तस्यैव भवति॥ तथा च उपस्थापकस्याणत्वात् सवर्णग्रहणं प्राप्तं निषिध्यत इति उचितं॥ अतएव चतुर्दशसूत्र्यां उच्चारणार्थस्याकारस्येवेत् संज्ञकानामपि णकारादीनां लपमध्याकारस्य च पदपर्यालोचनायामेव लोपश्च बलवत्तर इति न्यायेनापहारादितरांतर्भावेणैव संज्ञा प्रवर्त्तत इति सिद्धांतः। राम·
१४८

इदंचालोंत्यात्पूर्वउपधेतिसूत्रेतस्मिन्निति निर्दिष्ट इत्यत्र च कैयटग्रंथे स्पष्टम्॥ इट् अकः इको चीत्यादौ सानुबंधाद्विभक्तिस्तु प्राथमिकबोधेवि
शिष्टस्य विषयतयातस्यैवार्थवत्त्वमादाय॥ अन्योहि पश्चादुपतिष्ठते न तु प्रयुज्यत इति कथं तत्तो विभक्तिः क्रियतां॥ इत्संज्ञाकार्यं तु आनर्थक्या
त्तदंगेष्विंतिन्यायेनप्रत्याय्येप्रवर्त्तते॥ विभक्त्यर्थान्वयोप्येवं॥ दृष्टं हि ङमुडादावुपस्थापके कृतस्य लिंगस्य तद्बोध्येफलप्रवर्त्तकत्वमिति दिक्॥
स्यादेतत्॥ उक्तरीत्या उदोष्ठ्यपूर्वस्येति सौत्रे उच्छब्दे प्रवृत्तादित्संज्ञालस्येति तत्स्वरं प्रवर्त्तयेदिति चेत्॥ सत्यं। अतएवैतत्समाधानायपूर्वैः
चार्थैः पराक्रांतमिति गृहाण॥ कथं तर्हि एओङ्सूत्रे तद्दूषणाय प्रवृत्तमिति चेत्॥ तत्कालावधारणे न कृतार्थस्य तकारस्यानुबंधांतरवैयर्थ्यादिति
गृहाण॥ अतएव वैयाकरणइत्यत्र ऐच्श्चित्स्वरो न भवति पचस्वेति शापोप्येवं॥ नद्याभ्यामिति सूत्रे अचः परस्य हे इत्यत्र च ऐजचोस्त्वकारस्य प्रत्या
हारेउपस्यात्॥ यद्वा॥ इञ्शादिष्वपिमास्तु सूत्रांतर्गतेष्वित्संज्ञा किंतु फलप्रत्यासत्तेः पदार्थेष्वेव सास्तु॥ नैते उपदिष्टा इति चेन्न तेफलं
भाज इत्तितुल्यम्। सामर्थ्यात्परंपरासंबंधे फलमिति चेत्संज्ञापितत्रैवास्तु सामर्थ्यादिति तुल्यम्। उपदेशेत्वंत्वंहि माघोगिकेष्वसंभवात् वत्प्र
त्यायकनिष्ठमानुपूर्वीसाजात्यादाश्रीयते॥ नचैतत्तपरेष्वस्ति। प्रत्याय्ये तकाराभावादिति दिक्॥ प्रकृतमनुसरामः॥ भाव्यमानोप्युकारादेशः सवर्णा
न्गृण्हाति॥ ऋत उदिति तपरकरणाल्लिंगात्॥ तेनामुना अमूभ्यामित्यत्र ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घः सिद्ध्यति। न चैवं सनाशंसेत्युप्रत्ययोपि सवर्णा
गृण्हात्विति वाच्यम्॥ आदेशविषयकं ज्ञापकमित्युक्तत्वात्॥ यद्वा॥ अदसोसेरिति सूत्रएव उश्च ऊश्चेति समाहारद्वंद्वोस्तु॥ अतएव सोर्लुकानि
र्देशः कृतः अतएव च ऊदुपधायाः इति सूत्रे गोह इति विकृतनिर्देशं प्रत्याख्यातुं भाष्यकारैरुकारांतरं प्रश्लेष उक्तः॥ नन्वेवमपि अकः सवर्णे इत्यत्र अ
कारो ऽष्टादशानां ग्राहकोस्तु॥ अण्त्वादस्तु च स एव इकारादीनामपि ग्राहकः आदिरंत्येनेति उक्तेः। ईकारादयस्तु कथं ग्राह्याः। नहि तद्वाचकः शं

श॰ कौ॰ ब्दस्तस्मिन्सूत्रे उपात्तोस्ति॥ ननु अकुशब्देन इकारादयोप्युपस्थिता इति चेत्तर्हि वाक्यार्थेऽन्वियंतु नाम॥ पदार्थसंसर्गस्य वाक्यार्थत्वात्॥ ननु तेपि
१४९ स्वार्थोपस्थापकाः। अनुच्चारितत्वादित्युक्तम्॥ अतएव अऋ चं वेत्तीत्यादौ शब्दविशेषं वेत्तीत्येवार्थो न तु तदर्थं वेत्तीति। तदुक्तं वार्त्तिककृता॥ तत्र प्रत्या
हारग्रहणे सवर्णाग्रहणमनुपदेशात् ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणसंप्रत्यायकत्वाच्छब्दस्यावचनमिति॥ शब्दस्याप्रतीयमानस्य। अवचने
। अर्थाप्रतिपादकत्वमित्यर्थः॥ अत्रोच्यते॥ प्रत्याहारग्रहणे सर्वत्र स्ववाच्यवाच्ये निरूढलक्षणा दीर्घोज्जसिचेति ज्ञापकात्॥ प्रथमयोः पूर्वसवर्ण-
इत्यत्र हि अक इत्यनुवर्त्तते॥ न चाकुशब्दवाच्यो दीर्घोस्ति येनास्य निषेधस्य विषयः स्यात्॥ नन्वाकारोस्तीति चेत् न। नादिचीत्यनेनैव तत्र निषेधसि
द्धेः॥ प्वार्स्तीनामित्यादिनिर्देशा अपीह लिंगं॥ नन्वेवमिकोयणचीतिसूत्रे ईदातोर्ग्रहणं न स्यात्॥ युगपद्वृत्तिद्वयविरोधात्॥ तथा च सुद्ध्युपास्यः दध्यान
येत्यादि न सिद्ध्येदिति चेन्न॥ सति तात्पर्ये युगपद्वृत्तिद्वयस्य स्वीकारे बाधकाभावात्॥ इह चाणनद्याइत्यादिनिर्देशानां तात्पर्यग्राहकत्वात्॥ यदि तु
प्राचां मते अश्रुत्वावशाद्युगपद्वृत्तिद्वयं नाभ्युपेषितर्हि इह ईदातोरपि इगच्छब्दयोर्लक्षणैवास्तु॥ स्ववाच्यह्रस्ववाच्यत्वाविशेषात्॥ स्ववाच्यतापि
परमस्तीत्यन्यदेतत्॥ नन्वेवमपि शरीरमित्यादौ शकारस्य स्थानसाम्याद्यकारादेशः प्राप्नोति। इकारवाच्यो दीर्घः तत्सवर्णश्च शकार इति तस्या
पि इग्ग्रहणेन ग्रहणात्॥ तथा शीतलमित्यादावपि यण्प्रसंगः॥ दीर्घः परं न भवति॥ अकुशब्दवाच्यतायाः दीर्घविश्रांतत्वात्तत्संबन्धग्रहे मानाभा
भावादिति॥ अत्रोच्यते॥ भवेदयं शकारस्य यकारादेशरूपो दोषः॥ यदि स्ववाच्यसवर्णलक्षणां वदेम॥ वयं तु स्ववाच्यवाच्ये सत्येव ब्रूमः॥ न च
ईकारः शकारस्य वाचकः॥ दीर्घाणामनण्त्वेन सवर्णाग्राहकतायाः असकृदावेदितत्वात्॥ भाष्यमते तु अज्झलोः सावर्ण्यमेव नास्तीत्युक्तं॥ तद राम
यमिह निर्गलितोऽर्थः॥ अकारोऽष्टादशानां संज्ञा॥ एवमिदुतौ॥ ऋलृ इत्येतौ पर्यायशब्दौ त्रिंशतः संज्ञे। ऋलृवर्णयोः सावर्ण्यस्योपसंख्यातत्वात् १४९

ऋलृक्सूत्रे ऋत्यकस्तिप्रकृतिभावदर्शनेनज्ञापितत्वाद्॥ नचतुल्यव्यक्तिकसंज्ञाद्वयप्रणयनवैयर्थ्यंतदर्थमिहसूत्रांतराप्रणयनात्॥ एचस्तु
द्वादशानांसंज्ञाः॥ यवलाद्वयोः॥ रहौतुस्वस्यैवेति॥ यद्यपिहकारआकारस्यसंज्ञेतिप्राप्तंतथापितत्परिहारायनाज्झलावित्यत्रैवयत्नःकृतोनवि
स्मर्त्तव्यः॥ वार्त्तिककारास्तुइहाण्ग्रहणंप्रत्याचख्युः॥ तन्मतेस्यचावित्यादौजातिनिर्देशात्सिद्धम्॥ अनुवाद्यविशेषणस्यचह्रस्वत्वस्यग्रहे
कत्ववद्विवक्षा॥ विधिप्रदेशेतुप्रत्येकत्वबहुत्वविवक्षेतिसर्वेष्टसिद्धिः॥ यद्यप्यस्मिन्पक्षेऋकारेणलृकारग्रहणंदुःसाधंतथापिऋलृक्सूत्रोक्तरी
त्यासमाधेयमितिदिक्॥ ॥तपरस्तत्कालस्य॥ तःपरोयस्मात्सतपरः। नातपरोपितपरः द्विविधोप्ययंस्वसमानकालस्यग्राहकःस्यात्॥
तेनअत्इत्उत्इतिषण्णांसंज्ञाः। वृदितिद्वादशानां। अतएवोपसर्गादृतिधातावित्यत्रसावर्ण्यात्लृवर्णग्रहणंतपरत्वाद्दीर्घेनेतिसिद्धांतः॥
पंचमीसमासोदाहरणंतुवृद्धिरादैजिति। इहसंज्ञायांकृतेतात्परत्वंसंज्ञिनोःफलतिङ्मुटष्टित्वमिवेत्युक्तम्॥ परंपरासंबंधेनलाक्षणिकस्यसं
रक्षतेतिपक्षेतुनकश्चिद्दोषः। अदेङ्गुणइत्यत्राप्येवंसिद्धं॥ अत्रतकारस्योभयार्थतयासामर्थ्यविरहात्॥ यदितुऊकालसूत्रेवक्ष्यमाणरीत्याणुदि
त्सूत्रेशब्दसंज्ञायामित्यनुवर्तते॥ यदिवाकार्यकालपक्षमाश्रित्यभाव्यमानत्वादेवसवर्णग्रहणंवार्यते॥ तदावृद्धिसूत्रेतपरकरणंस्पष्टार्थं
॥इहतुपंचमीसमासोनाश्रयणीयः॥ अतएवशास्त्रांतेअदिति भाष्यंसंगच्छते॥ गुणाभेदकाइतिपक्षेतुवृद्धिसूत्रेनपरकरणमुभयार्थं॥ गुणां
तरयुक्तस्यग्राह्यत्वात्॥ भेदकत्वेज्ञापकंतुअणुदित्सूत्रस्थमण्ग्रहणमितिहलसूत्रएवोपपादितं। तथाभूततत्सूत्रस्थंतत्कालस्येतिपदमपीह
ज्ञापकं। अन्यथाहिस्वस्यरूपस्येत्यनुवृत्त्यैवसिद्धेकिंतेन॥ नचसावर्ण्याल्लृवर्णग्रहणार्थंतत्॥ एवंहितत्रैवलृग्रहणंकुर्यात्॥ ऋतिऋवेतिविहि
तेरेफद्वयमध्यंवोच्चारयेत्॥ आदित्येवसिद्धेःतोदीर्घोयञीतिसूत्रेदीर्घग्रहणमपीहलिंगमितिदिक्॥ अतएवैतत्सूत्रंभाष्यादौद्वयमव्याख्यातं

विध्यर्थं नियमार्थं वेति॥ तथाहि॥ अणितिनानुवर्त्तते॥ तेन आकारादावनणि तत्कालानां सवर्णानां गुणभेदेप्यनेनग्रहणं॥ अतोभिस ऐसि
त्यादौ तूभयप्रसंगे परत्वादस्यैव प्रवृत्तिः॥ ननु संज्ञानां बाध्यबाधकभावो नेत्युक्तमितिचेत्॥ सत्यं। अविरोधे फलभेदे च भवत्येव समावेशः इ
ह तु विरोध एवास्ति॥ अष्टादशधा ह्याः षड्ग्राह्या इति हि विरुद्धं। संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वात्॥ अत एव वृद्धादेर्घ इतिसूत्रे
हि प्रभृत्युपसर्गस्येति वक्तव्यमिति वार्त्तिकं संगच्छत इत्याहुः॥ वस्तुतस्तु नेह संज्ञासूत्रद्वये संख्योपात्ता येन विरोधः स्यात् किंतु अतोभिस इत्या
दौ तपरकरणसामर्थ्याद्बाध्यबाधकभावोनुमीयत इति तत्त्वं॥ वस्तुतस्तु तकारविशिष्टयसंज्ञानत्वणमात्रं। न तत्कालस्येति तच्छब्दस्तु विशेष्य
मात्रं परामृशति॥ न तु विशिष्टं॥ तदुच्चारणकालसदृशेलक्षणा तु प्राचांमतेप्यस्त्येव। सर्वनामपदेपि सतस्यैव वारवंतीयं तत्त्वमसीत्यादौ लक्ष
णायाः पूर्वोत्तरतंत्रयोः स्थितत्वात्॥ तथा च टिघुभाद्यंतर्गतापदिह पदैकदेशत्वेनानर्थक्याद्ग्राहकताप्रसंग एव नास्ति। विभक्त्युत्पत्तिरप्येवं स
तिसंगच्छते॥ वृद्धिसूत्रे अत्राकारः प्रयोगस्थे राकारैरर्थवानिति हरदत्तग्रंथस्तु प्राचां रीत्यानेतव्य इति दिक्॥ सोयं विध्यर्थता पक्षः। यदानुभ
णित्यनुवर्त्तते तदा नियमार्थमिदं तपरेण तत्कालस्यैवेति गुणानामभेदकत्वादनणस्तु न कश्चिद्दोषः॥ अस्मिंश्च पक्षे तत्कालग्रहणं शक्यमकर्त्तुं
अण्ग्रहणानुवृत्तिश्चानावश्यकी तपरः स्वरूपस्यैवेतिनियमेनापीष्टसिद्धेः॥ दिव औदित्यत्र तपरकरणं स्वरार्थं न तु कालावधारणार्थं भाव्यमा
नतया सवर्णग्रहणाप्रसक्तेः॥ तथा च स्वरितः प्रयुज्यते। द्यौः पितः पृथिवि मातरध्रुगिति। पृथिवी उत द्यौरित्युदात्तप्रयोगस्तु द्योशब्दस्य बोध्यः
औदश्व धैरित्यत्र तु मुखसुखार्थं तपरकरणं॥ व्याख्यानात्॥ तेन सन्निधाने अग्नावित्यादौ तितस्वरेणेति हरदत्तादयः। यत्तु न विभक्तौ तुस्मा इ
त्यत्र जपादित्वादि भिरुक्तं॥ इटोदित्यत्रायं निषेधो न भवति॥ इदमस्थमुरित्युकारानुबंधकरणादनित्यत्वादस्येति। तदभ्युपगमवादमात्रं

नित्त्वरप्रसंगाच्चानकेशपत्तिः॥ भस्मीयतवराधसइत्यादावंतोदात्तश्रवणात्॥ तस्मादिटोदित्त्यपि सुखसुखार्थस्तकारः॥ एतदेवहृद्यवचनेउक्तं तदु
त्पादिद्वयेप्येवमितिदिक्॥ वस्तुतस्तु दिवऔदित्यत्राप्येवमेव हलःस्वसनधर्मिणोनुदात्ते कृतेउदात्तस्वरितयोर्यणइत्येवस्वरितसिद्धेः। स्यादेतत्॥ द्रुता
मध्यमाविलंबिताचेतितिस्रोवृत्तयः॥ तदुक्तं॥ अभ्यासार्थेद्रुतावृत्तिः प्रयोगार्थेतुमध्यमा। शिष्याणांतूपदेशार्थेवृत्तिरिष्टाविलंबिता॥ तास्तुक्रमेण
त्रिभागाधिकाः॥ तथाहि॥ द्रुतवृत्त्यायस्यांऋचिपठ्यमानायांनवपानीयपलानिस्रवंति तस्यामेवऋचिमध्यमवृत्त्यापठ्यमानायांद्वादशविलंबितायांतु
षोडश। एवंस्थिते यदिसूत्रकृद्विलंबितायांतपरकरणमकार्षीत्मध्यमायांद्रुतायांवातर्हितद्वृत्त्यंतरेणपाठकालेऽतोभिसऐस्नस्यात्॥ कालावधार
णेनदीर्घप्लुतयोरिववृत्त्यंतरस्यापिवारणादिति॥ तथाचवार्त्तिकं॥ द्रुतायांतपरकरणेमध्यमविलंबितयोरुपसंख्यानंकालभेदादिति॥ अतएवनिपा
तनान्मध्यशब्देहूस्वइति संहितासंज्ञासूत्रेकैयटः॥ अत्रसिद्धांतंवार्तिककाराएवाहुः॥ सिद्धंतु अवस्थितावर्णावक्तुश्चिराचिरवचनाद्वृत्तयोवि
शिष्यंतइति॥ अस्यार्थः॥ व्यंजकीभूतोध्वनिर्यद्यपिबहुकालानुवर्त्ती॥ तथापिकश्चिन्मात्रापर्यंतमेवाभिव्यनक्ति॥ तदुत्तरकालोपहितस्तुस्व
यमेवानुवर्त्ततेनतुपरमभिव्यनक्ति॥ यद्वा॥ हूस्वस्यव्यंजकोध्वनिर्वृत्तित्रयेपिमात्राकालएव। मध्यमविलंबितयोः प्रथमगृहीतध्वन्यनुनिष्पादि
नाततोन्यूनकालेनध्वन्यंतरेणाभिव्यक्त्यंतरंजन्यतेअभिव्यंग्यस्तुनभिद्यते॥ एवंदीर्घव्यंजकोपिसर्वत्राद्योध्वनिर्द्विमात्रएव॥ अनुनिष्पादीतु
ततोन्यूनइत्याद्यूह्यं। व्यंग्यास्तुसर्वत्रएवपरस्परभिन्नलक्षणाः॥ एतच्चसर्वंकैयटेनध्वनितं॥ तस्मादुच्चारणभेदेषांमात्राकालंप्रतीयते वर्णास्तुनित्याए
व। वर्णोत्पत्तिपक्षेतुतदनुनिष्पादीद्वारदपियात्वः कश्चिद्ध्वनिरवश्याभ्युपेयः॥ तस्यैवकालभेदाद्वृत्तित्रैविध्यं। वर्णास्तुवृत्तिभेदेप्येकरूपाएव केश्चि
द्व्यक्तयएवास्याध्वनित्वेनप्रकल्प्यंताइतिपक्षेतुकालरूपोपाधिविशेषावच्छिन्नस्यैवव्यक्तित्वमितिदिक्॥ उक्तंचभाष्ये। ध्वनिः स्फोटश्चशब्दा

नांध्वनिस्त्क्रखलुलक्ष्यते॥अल्पोमहांश्चकेषांचिदुभयंतत्स्वभावतइति॥ अस्यार्थः॥शब्दोहिद्विधाव्यंजकोव्यंग्यश्च॥शब्दानांव्यंग्यानांव्यंजक
त्वेनसंबंधीयोध्वनिः सएवमहानल्पश्चलक्ष्यते।तदुभयंव्यंग्यव्यंजकरूपंकेषांचिद्देवतात्वादिव्यापारजन्यानामेवनतुभेर्यादिजन्यानामपि।
कुतः।स्वभावतः।कारणवैलक्षण्यात्॥अत्रउभयमितिभावप्रधानोनिर्देशः॥उभयरूपतेत्यर्थः॥ ।आदिरंत्येनसहेता॥ अंत्येनेतासहोच्चा
र्यमाणआदिर्वर्णोवर्णसंघातोवामध्यगानांसंज्ञास्यादादेःस्वरूपस्यच॥वर्णोयथाअल्॥संघातस्तुकृञ्॥इहहिअभूततद्भावेक्तुभ्यस्ती
तः कृञोद्वितीयेतिञकारेणप्रत्याहारः॥ आद्यंतौतावदवयवौ॥ताभ्यामवयवीसमुदायआक्षिप्यते॥तस्यचयुगपदुक्त्यप्रयोगाभावात्तदवय
वेषुसंज्ञाक्तरंतीमध्यमेषुविश्राम्यतिनत्वाद्यंतयोःसंज्ञास्वरूपांतर्भावेणतयोः पारार्थ्यनिर्णयात्॥ अतःस्वंरूपमित्यनुवर्त्तते॥स्वंरूपंचादेरेवगृ
ह्यतेनांत्यस्यअप्राधान्यात्॥अंत्येनेतिद्यप्रधानेतृतीयातेनैदध्यत्रेत्यादौकेवलएवयकारःप्रवर्त्ततेनणकारसहितइतिकैयटादयः॥अत्रेदंवक्तव्यं
।प्रत्याहारेष्वाद्यावाचकास्तत्रग्रहणकशास्त्रंसावकाशमितिग्रहणकशास्त्रस्यभाष्यादिपर्यालोचनयावाचकत्वंतावदाद्यवर्णेविश्रांतंअंत्यस्तु
तात्पर्यग्राहकःसहग्रहणात्तुविशिष्टाद्विभक्त्युत्पत्तिरितिद्योतकांतरवैषम्यमितिस्थितम्।किंचांत्यस्येत्संज्ञापादत्वनस्यकथंसंज्ञित्वप्रसक्तिः।अ
न्यथाजादिसंज्ञानामपिणकारादावतिप्रसक्तेःकउद्धारः।किंच॥ अस्तुविशिष्टस्ययणसंज्ञातथापिदध्यत्रेत्यत्रयणशब्दापादनंअसंगतमेव
न्यायसाम्येनइकशब्दस्यैवस्थानित्वप्रसक्त्याइकारस्यस्थानित्वासंभवात्॥अंत्येनेतिकिम्॥सुडितितृतीयैकवचनावयवेनमाभूदिति
टन्तिकाराः।टाङसिङसामित्यादिनिर्देशेनटकारेणपूर्वांतइतिनिर्णयादितिभावः॥नन्वेवमपिटकारांतस्यसंघस्यटाटकारांत्योभवत्येवेति
चेत्॥न।व्यक्तितांत्यताविरहात्॥ इहहिअंत्यत्वप्रयुक्तायस्येत्संज्ञातेनप्रत्याहारइतिसुडनपुंसकसूत्रेहरदत्तः॥नचैवंप्रत्याहारासि

द्विः लण्सूत्रे ऽनुनासिकप्रतिज्ञासामर्थ्यादनंत्येनापि प्रत्याहारात्॥ इदंतु वक्तव्यं॥ औट्ष्टित्वस्यानन्यार्थतया तेनैव सुट्प्रत्याहारः॥प्रत्यासत्तेश्च॥
तथाचांत्यग्रहणंमास्त्विति॥अत्रेदंसमाधानं॥ मध्यमेनेतासहितआदिस्तदुत्तरेषामपिग्राहकोमाभूत्॥एवंअंत्येनसहितोमध्यमः पूर्वेषांसंज्ञा
माभूदित्यादिग्रहणं। इतेतिकिम्। रप्रत्याहारोयथास्यात्॥ सहिअनंत्येनापि अनुनासिकप्रतिज्ञासामर्थ्याद्भवतीत्युक्तम् नचैतदित्वेत्यस्य
विरहेलभ्यते॥ नवीनास्तुसहासमंतादेतीतिसहेतामध्यमोवर्णः स्वंरूपमिति चानुवर्तते॥अंत्येनादिः अण्इत्यादिसंज्ञको भवतीत्यर्थः॥आ
द्यंतसमभिव्याहाराच्च। सहेतामध्यमोवर्णोलभ्यते॥ वृद्धिगुणादिसंज्ञास्विवेहापिसामानाधिकरण्यात्संज्ञात्वावगतिः॥अस्मिंश्चव्याख्या
नेहलंत्यमित्यत्रेतरेतराश्रयशंकापिनास्तीत्याहुः॥आद्यंतावयवद्वारासमुदायानुकरणे[illegible]रूपेइदम्॥ येनविधिस्तदंतस्य ॥
विशेषणंतदंतस्यसंज्ञास्यात्स्वस्यचरूपस्य॥एरच्॥चयः॥जयः॥अयः॥ओरावश्यके॥अवश्यलाव्यं। इहयेनेतिकरणेतृतीयानतुकर्त्त
रि तद्योगेलक्षणषष्ठ्याबाधितत्वात्॥ विधिरितिहिकर्मणिकिप्रत्ययः॥ तेनकर्मणोभिहितत्वाद्भयप्राप्तावितिनियमस्यनायंविषयः॥कर
णंचपरतंत्रंकर्त्रधिष्ठितस्यैवकरणत्वात्॥एवंचेहतृतीययापारतंत्र्यंलक्ष्यतेसुब्विभक्तौनलक्षणेतिनैयायिकोक्तदूषणस्तुनिर्मूलः॥नचव्युत्प
त्त्यनुशासनवैयर्थ्यापत्तिस्तन्मूलम्। तिङ्स्वपितस्यतुल्यत्वात्॥रथोगच्छतीत्यादौव्यापारेलक्षणायास्त्वयापिस्वीकारात्॥अतएवप्रयाजशे
षेणहवींष्यभिघारयतीत्यत्रप्रयाजशेषंहविष्युक्षारयेदितिमीमांसकाव्याचख्युरितिदिक्। नचैवंराजिकादौइकारादीनांपारतंत्र्यंधात्वादीनांच
स्वातंत्र्यंकृष्णादीनामिवतत्स्यादीनामिवचस्वरूपतःसंभवतिकिंतुवैवक्षिकम्॥ तेनविशेषणमप्रधानंतच्चात्मांतस्यविशेष्यस्यसंज्ञेतिफलितं॥
विशेष्यसन्निधौचविशेषणत्वंभवतिसन्निधिस्तुक्वचित्साक्षान्निर्देशेनयथाईदूदेद्विवचनंप्रगृह्यमितिद्विवचनस्यक्वचिदधिकारात्।यथाएरजि

त्यत्र धातोः क्वचिदाक्षेपाद्यथा इको झलित्यत्र सनाधातोः। इको यणचि एचोयवायाव इत्यादौ तु न कथंचिदपि विशेष्यसन्निधिः अतो भेदः प्रवर्त्तते॥
स्यादेतत्। उदोष्ठ्यपूर्वस्येत्यत्र ओष्ठ्यपूर्वकत्वं धातोरेव विशेषणं स्यान्न तु ऋकारस्य स हि विशेषणत्वादृते तस्य संज्ञा॥ संज्ञा च संज्ञिनं प्रत्या
पति॥ ननु स्वयं विशेषणादियोगमनुभवति ततश्च संकीर्णमित्यादावतिव्याप्तिः॥ पूर्त्तमित्यादावव्याप्तिश्च एवमुतश्च प्रत्ययादित्यत्राप्यसंयो
गपूर्वत्वमंगस्य प्रत्ययस्य वा विशेषणं स्यान्न तूकारांतस्य ततश्चाश्नुहीत्यादावतिव्याप्तिः विशेषणं च यद्यंगस्य तदा तक्ष्णुहि इत्यादावतिव्या
प्तिः अथ प्रत्ययस्य तर्हि तक्ष्णुहीत्यादि सिद्ध्यतु अश्नुहीत्यादौ तु दोष एवेति॥ अत्राहुः। गुणप्रधानभावसापेक्षेयं संज्ञा तथा च उतश्च प्रत्ययादित्या
दौ विशेषणसंबंधवेलायां गुणभावास्फुरणात्तमनुभूय पश्चाद्धि विशेष्यसंबंधे विशिष्टा संज्ञा भवति॥ इह हि विशिष्टस्य वैशिष्ट्यं॥ ननु विशेष्ये वि
शेषणमिति। व्याख्यानात्॥ अत एव न विशिष्टे वैशिष्ट्यं नाप्येकत्र द्वयमिति दिक्॥ तथा च वार्त्तिकं॥ येन विधिस्तदंतस्येति चेत् ग्रहणोपाधीनां तदं
तोपाधिताप्रसंगः। सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वादिति। ग्रहणोपाधीनां गृह्यमाणविशे[illegible]संमतानामोष्ठ्यपूर्वत्वादीनामित्यर्थः॥ य
थेष्टत्वादित्यनेनेदं दर्शयति चतुर्विधेषु विशिष्टवैशिष्ट्यबोधेषु मध्ये विशिष्टस्य वैशिष्ट्यमेवेह संमतं न त्वितरत्त्रिकं व्याख्यानात् लस्याणुरोधा
च्च॥ इह सिद्धांताभिमतं विशेषणविशेष्यभावं स्फुटीकर्त्तुं बहूनि वार्त्तिकानि प्रवृत्तानि॥ तद्यथा। समासप्रत्ययविधौ प्रतिषेधः। द्वितीया श्रितेत्यादौ श्रि
तादयो विशेष्यास्तद्विशेषणं च सुप्। एवं नडादिभ्यः फगित्यादौ नडादि विशेष्यं प्रातिपदिकं विशेषणमिति फलितोऽर्थः॥ एतेन ग्रहणवता प्रातिपदिके
न तदन्तविधिर्नास्ति — त्यपि व्याख्यातं तस्याप्युदात्तत्प्रतिषेधसमानविषयकत्वस्य दिव उत् सूत्रे कैयटादिभिरुक्तत्वात्॥ अत एव गोस्त्रियोरि
ति सूत्रेऽपि तं यत् प्रातिपदिकमिति व्याख्यातं॥ एतेन शेषो घ्यसखीत्यादौ ग्रहणवतेति प्रतिषेधं संचारयंतो हरदत्तादयः प्रत्युक्ताः। प्रकृतमनुसरामः॥

॥श्रितादयो विशेष्या इत्युक्तम्॥ तेन द्वितीया श्रितेति समासः कृष्णश्रित इत्यत्रैव भवति न तु कृष्णं परमश्रित इत्यादावपि॥ तथा नडादिभ्यः फक्॥
नाडायनः नेह सूत्रनडस्यापत्यं सौत्रनाडिः॥ अनुशतिकादित्वादुभयपदवृद्धिः॥ ननु कृष्णं परमश्रित इत्यत्र समासप्राप्तिरेव नास्ति॥ अत्र हि स
मासात् सुब्विहितः तेन श्रितांतं सुबंतमेव न भवति॥ अत्र कैयटहरदत्तौ॥ संबुध्यंतमुदाहर्तव्यं कृष्णं परमश्रितेति एतद्धि प्रत्ययलक्षणेन सुबंतं
भवति श्रितांतं च श्रूयते इति॥ स्यादेतत्॥ सिद्धांते श्रितादीनां विशेष्यत्वेपि तत्र सुबंतत्वं बाधितम्॥ न चात एवान्वयानुपपत्त्या श्रितादिशब्दानां
तत्प्रकृतिके लक्षणेति वाच्यं॥ संबुध्यंत एव मुख्यार्थपुरस्कारेणावकाशलाभात्॥ तथा च कृष्णश्रितमित्यादि न सिद्ध्येदिति। उच्यते। समासतद्धि
तप्रकरणे सर्वत्र श्रितादीनां नडादीनां च तत्तत्प्रकृतिकलक्षणैव रव द्वाक्षेपेन दीभिश्चेत्यादौ [illegible]स्य बाधात्॥ नहि तत्र संबुद्ध्यंतता संभवति॥
पूर्वकाले केत्यादौ संबुद्ध्यंतता संभवेपि एकविभक्तावित्यादिसौत्रनिर्देशो न सिध्येत्॥ तस्मात्सामान्यापेक्षज्ञापकबलेनैकरूप्याय सर्वत्र तत्त
त्प्रकृतिके लक्षणेति स्थिते इह त्वभाष्यवृत्त्योः कैयटहरदत्तकृतं भंक्त्वा व्याख्यानमनादेयमित्यवधेयं। अस्यापवादमाह॥ उगिद्वर्णग्रहणव
र्जमिति॥ उगिता वर्णेन च प्रातिपदिकं विशेष्यत इति फलितोर्थः॥ महांतमतिक्रांता अतिमहती उपसर्जनत्वाद्गौरादिलक्षणस्य ङीषो ऽभावे उगि
दंतत्वान्ङीप्। बृहन्महतोर्गौरादित्वं नास्तीत्यपि केचित्॥ युक्तं चैतत्॥ महते सौभगायेत्यादौ विभक्तेरुदात्तत्वसिद्धये शतुरनुम इति सूत्रे
नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमिति वार्तिकस्यारभ्यमाणत्वान्ङीपोप्युदात्तत्वसिद्धेः। अतद्धन्॥ दाक्षिः॥ न चेह सामर्थ्यात्तदंतवि
धिः॥ अस्यापत्यं इः काम इत्यत्र चरितार्थत्वात्। न चैवमिञोञित्वं व्यर्थं स्यादिति वाच्यं॥ बाह्वादिभ्यश्चेत्यत्र यथायथं वृद्ध्याद्युदात्ताभ्यां चरि
तार्थत्वात्॥ नन्वेवमपि औपगविरित्यादावेव स्यान्न तु दाक्षिरिति॥ अकारस्येहानर्थकत्वादिति चेन्न॥ वर्णग्रहणे अर्थवत्परिभाषाया अप्रवृ

न्तेः॥ तथा चैतत् सूत्रशेषे वार्त्तिक ॥ अल्लैवानर्थकेनेति॥ अत एव संघातेनार्थवतैव॥ तेन स्त्रियामृतीपड् इहैव भवति॥ स्त्रियौ परमस्त्रियौ ने
ह शास्त्र्यौ शास्त्र्यः। तथा स्नहन्पूषार्यम्णां शौ सौ चेत्यत्र हन् इत्यत्र संघातग्रहणे प्लीहन् ग्रहणं न तेन प्लीहानावित्यादौ शौ सौ चेति नियमाप्रवृत्तेः दी
र्घः सिध्यति उदस्थास्तंभोरित्यत्र वा पदांतस्येत्यतः पदग्रहणानुवृत्तिपक्षेपि उदेव विशेष्यः॥ अननुवृत्तौ तु न काचित् क्षतिः॥ उभयथाप्यनर्थक
स्याग्रहणान्नेह गर्मुत्स्थास्यति गर्मुत् सुवर्णं तृणयोः॥ ननु शास्त्र्यौ प्लीहानावित्यत्र प्राप्तिरेव नास्ति पदांगाधिकारे तस्य तदुत्तरपदस्य चेत्यिष्व
नान्महीदंतन्नापि तदुत्तरपदमिति चेत्॥ सत्यं॥ पदांगाधिकार इति वचनसत्वे नश्येव किं त्वेतद्दूषितं भाष्ये सौत्रेण तदंतविधिनैव गतार्थत्वात्॥ अ
नएष परमश्वासावतिमहांश्चेति विग्रहे परमातिमहानिति सिध्यति वचनाश्रयणे तु नैतत् सिध्येत्॥ अतिमहच्छब्दस्य महदुत्तरपदत्वेप्यनंग
त्वात्॥ परमविशिष्टस्यांगत्वेपि महदुत्तरपदत्वाभावात्॥ सौत्रेण तदंतविधिना तु सांतमहत इति दीर्घ उगिल्लक्षणो नुमागमश्चेह सिध्यति। नचेह
ग्रहणवतेति निषेधः शंक्यः॥ समासप्रत्ययविधौ इत्यनेन सह समानविषयः स इत्युक्तत्वात्॥ एतेन बुद्धिर्जन्मजरसः परंसुनि ब्रह्मणः पदमुपेतु
मिच्छतामिति भारविप्रयोगो व्याख्यातः॥ अल्लैवेत्यस्यापवादः पठ्यते भाष्ये॥ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदंतविधिं प्रयोज
यंतीति॥ अन् राज्ञेत्यर्थवता साम्नेत्यनर्थकेन इन् दंडीत्यर्थवता वाग्मीत्यनर्थकेन अस् सुपया इत्यर्थवता सुश्रोता इत्यनर्थकेन मन् सुशर्मेत्यर्थ
वता सुप्रथिमेत्यनर्थकेन। एतच्चेणः षीध्वमिति सूत्रे अंगग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात् सिद्धं॥ परिवेविषीध्वमित्यत्र हि षीध्वं
शब्दस्यानर्थकत्वादेवाग्रहणे सिद्धे किं तन्निवृत्त्यर्थेन अंगग्रहणेनेति दिक्॥ सूत्रस्योदाहरणांतराण्याह वार्त्तिककारः॥ प्रयोजनं सर्वनामाव्ययसं
ज्ञायां॥ अन्वर्थसंज्ञयाक्षिप्तः संज्ञी सर्वादिभिर्विशिष्यते इति फलितोर्थः॥ उपपदविधौ भयाढ्यादिग्रहणं। भयंच आढ्याद् पश्चेति हूहूः॥ तेन खच्

प्रकरणेभैघर्त्तिभयेषु कृञ इति सूत्रे वाक्यं भित्त्वा उपपदेन मेघर्त्तौ विशेष्येते भयेन तु उपपदं यदि तु भयाढ्यशब्दयोर्द्वंद्वं कृत्वा आदिशब्देन बहुव्रीहिः
क्रियेत तदा क्षेमप्रियमद्रेष्वप्युपपदं विशेष्येत सिद्धांते तु क्षेमादयः उपपदेन विशेष्यंते भयंकरः अभयंकरः आढ्यंकरणं स्वाढ्यंकरणं। ङीप्प्रतिषेधे स्व
स्रादिग्रहणं। स्वसा परमस्वसा ॥ अपरिमाणविस्ताचितग्रहणं च। प्रतिषेधप्रयोजनमित्यनुवर्त्तते। द्विगुनासन्निधापितमुत्तरपदं बिस्तादिभिर्विशे
ष्यते इति भावः। द्विबिस्ता द्विपरमबिस्ता द्व्याचिता। द्विपरमाचिता। दितिः। दैत्यः आदित्यः। दित्यदित्यादित्येति सूत्रे अदितिग्रहणं न कर्त्तव्यं परमदित्यादिभ्य
स्त्वनभिधानान्न भवतीति भावः। रोण्या अण्। रौणीति सूत्रेण चातुरर्थिकः आजकरोणः॥ सैंहकरोणः॥ तस्य च। तस्य चेति वक्तव्यं॥ उक्तानां वक्
ष्यमाणानां च सर्वेषामयं शेषः॥ तथा चेह सूत्रे स्वंरूपमित्यनुवर्त्तते इति फलितोर्थः। ननु व्यपदेशिवद्भावेन रौण इति सिद्धमिति चेन्न॥ व्यपदेशिव
द्भावोऽप्रातिपदिकेनेति निषेधादिति भाष्यकाराः। यद्यपि रोणीशब्दो न प्रातिपदिकं तथापि अप्रातिपदिकेनेत्यत्र वाक्ये प्रातिपदिकग्रहणे लिंगवि
शिष्टस्यापि ग्रहणात् स्त्रीप्रत्ययांतेरपि व्यपदेशिवद्भावो नास्तीति भावः॥ यथा कथंचित् प्रातिपदिकग्रहणे लिंगविशिष्टग्रहणमिति त्रिष्वस्यां प्रसू
त्रे वक्ष्यते॥ ननु यदि तु स्वरूपे त्युच्यते स्वरूपग्रहणं चानुवर्त्यते तर्हि व्यपदेशिवद्भावः प्रातिपदिकेनेत्यस्य निर्विषयत्वं स्यादिति चेन्न॥ सूत्रांता
ट्ठक् दशांता ड इत्यादिसावकाशत्वात्॥ न च तत्रांतग्रहणसामर्थ्यादेव व्यपदेशिवद्भावो न भविष्यतीति वाच्यम्॥ समासप्रत्ययविधौ प्रतिषेधः
इत्येतद्बाधेनांतग्रहणस्य चरितार्थत्वा ज्ज्ञापकसिद्धेयं परिभाषा। पूर्वात्सपूर्वादिनिरिति वक्तव्ये पूर्वादिनिः सपूर्वाच्चेति योगविभागश्चेह ज्ञा
पकः। वस्तुतस्तु भस्त्र्यादाविव सूत्रांता ट्ठक् दशांता ड इत्यादावपि विशेषणविशेष्यभावव्यत्यासमात्रेण सिद्धे अंतग्रहणसामर्थ्यमपि सूपपाद
मिति परिभाषाश्रयणं व्यर्थम्॥ नचैवं गोकुलमित्यत्र ह्रस्वः स्यादिति वाच्यं॥ उपसर्जनं यो गोशब्दस्तदंतस्य प्रातिपदिकस्य ह्रस्वविधानात् ॥४॥

सन्निधानाच्च प्रातिपदिकं प्रत्येव विशेषणताश्रयणात्॥ गोशब्दे च तदभावात्॥ अत एव राजकुमारीपुत्र इत्यत्र न ह्रस्वः॥ उपसर्जनं यत्स्त्रीप्रत्ययांतं तदंतस्य प्रातिपदिकस्येत्यत्रापि सन्निधानाश्रयणात्॥ एषैव तत्रापि गतिः न ह्युक्तपरिभाषेह संभवति व्यपदेशिवद्भावोऽप्रातिपदिकेनेति ग्रहणवतेति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिव उत्सूत्रे कैयटहरदत्ताभ्यामुक्तत्वात्॥ एवं च पूर्वादिनिरिति योगविभागोऽप्यर्थः किं बहुना पूर्वादिनिरित्यत्र तदंतग्रहणसंभवात् सपूर्वाच्चेति सूत्रं व्यर्थं व्यपदेशिवद्भावेन सिद्धे तस्येति प्रकृतवार्त्तिकमपि न कर्तव्यं॥ स्वं रूपमिति तु भागेऽस्मत्स्याख्यातमिति दिक्॥ रथसीताहलेभ्यो यद्विधौ॥ न ह्यहतीति यत्॥ रथ्यः परमरथ्यः॥ सीत्यं परमसीत्यं क्षेत्रं। सीतया संमितमित्यर्थः॥ नौवयोधर्मेति यत्। हलस्य कर्षो हल्यः॥ मतजनहलात्करणजल्पकर्षेष्विति यत्॥ यद्विधाविति किं। हलसीराट्ठगिति ठग्विधौ तदंततग्रहणं मा भूदिति कैयटः॥ अत्रेदं वक्तव्यं। हलसीराट्ठिति ठिः पठ्यते तस्येदमित्यधिकारे तद्ह्यहतीत्यधिकारे च तत्रोभयत्रापि तदंतविधिरिष्ट एव आद्यस्य प्राग्दीव्यतीयत्वाल्लुक्॥ द्विहलः अपरस्य श्रवणं॥ द्वैहलिकः॥ स्पष्टं चेदं चतुर्थे हरदत्तग्रंथे। युक्तं चैतत्। रथाद्यदिति तद्ह्यहतीति रथशब्दस्य द्विरुपादानमेतदर्थमिति भाष्ये प्रयुक्तत्वात्॥ तद्वहतीत्यधिकारस्य रथहलयोरुपादानसामर्थ्याल्लुभ्यां हितरुं न विधिरविशेषादुभयत्रापि स्यादेव॥ नचैवमिह यद्विधावित्यसंगतमिति वाच्यम्। तस्योपलक्षणत्वात्॥ यद्वा॥ रथाद्यदिति सूत्रे रथाद्यद्ग्रहण इति वहो ढरीत्युक्तौ तत्प्रकारकशब्दबोधस्योपपादयितुं शक्यत्वेपि हलग्रहणेन तदुपपादनस्य वक्तुमशक्यत्वेन हलग्रहणे न तदंतविधिः। अस्तु वा संख्यापूर्वपदस्यैवेति कैयटाशयः॥ तस्मै हितमिति प्रकरणे शरीरावयवाद्यदिति सूत्रे रथाच्चेति वार्तिकं॥ तत्राप्ययं तदंतविधिर्बोध्यः॥ यत्तु तत्र कैयटो वक्ष्यति॥ हलसीराशब्दाभ्यां साहचर्याच्चतुर्थीस्थ्यायविहित एव यतीति तदंतविधिमाहुरिति। तत्राहुरिति अस्वरसोद्भावनं॥ असमासे निष्कादिभ्य इत्यसमासग्रहणेन तस्मिन्प्रकरणे विशिष्यापि न तदंतविधेर्ज्ञापितत

यासाहचर्यात्श्रयणेपि तदंतविधेर्दुर्वारत्वादित्यवधेयम्॥ सुसर्वार्द्धदिक्शब्देभ्योजनपदस्य। सुपांचालकः। सुमागधकः॥ सर्वपांचालकः। अर्द्ध
पांचालकः। अवृद्धादपिबहुवचनविषयादितिवुञ्॥ सुसर्वार्द्धाज्जनपदस्येत्युत्तरपदवृद्धिः। दिक्शब्दः॥ पूर्वपांचालकः॥ अपरपांचालकः। पूर्ववद्वुञ्।
दिशोमद्राणामित्युत्तरपदवृद्धिः॥ ऋतोर्वृद्धिमद्विधाववयवानां ऋतुवाचिनःशब्दाद्योर्वृद्धिमान्वृद्धिनिमित्तंप्रत्ययःतद्विधानेअवयवानांपूर्वपद
त्वेइतिशेषः॥ तदंतविधिरिहवाचनिकएव॥ शारदः पूर्वोभागः पूर्वशरत् पूर्वापराधरोत्तरमित्येकदेशिसमासः॥ तत्रभवंपूर्वशारदंसंधिवेलाद्यृतुन
क्षत्रेभ्योण्॥ अवयवादृतोरित्युत्तरपदवृद्धिः॥ वृद्धिमदितिकिं॥ शारषष्ण्यइत्यत्रतदंतविधिर्माभूत्॥ तेनतत्रअत्वणेवभवतिपूर्वपारृषमिति॥ अव
यवानांकिं। पूर्वस्यांशरदिभवंपौर्वशारदिकमित्यत्राण्नभवतिकिंतुकालाट्ठञेवभवतितत्रहियथाकथंचित्कालवाचिनोगृह्यंतेनतुरूढ्यैवेत्य
र्थः॥ उत्तरत्वसंधिवेलाघृतुनक्षत्रेणविशेषणात्॥ अतएवसायंप्रातिकः॥ पौनःपौनिकइत्यादिसिध्यति। ठञ्विधौसंख्यायाः॥ द्वेषष्टीपरिमाणम
स्येतिविग्रहेतद्धितार्थेत्यनेनसमासेकृतेआर्हादितिठक्नभवतिसंख्यायास्तदंतविधौसतिसंख्यांतादपिठक्प्रतिषेधात्॥ तेनमाग्वतेरितिठञ्भव
ति। अध्यर्द्धपूर्वेतिलुक्भवति॥ सोस्यांशवस्नभृतयइत्यतःसोस्येत्यनुवर्तमानेतदस्यपरिमाणमित्यत्रपुनःप्रत्ययार्थस्यसमर्थविभक्तेश्चनि
र्देशात्। पुनर्निर्देशेनहिप्रकृतालुक्संबद्धाद्विलक्षणमिदमितिनिस्सूच्यते॥ यद्वा॥ अनुवर्तमानेनसोस्येत्यनेनसहितंपरिमाणसंख्यायाइत्येतता
वत्प्रत्ययंविधत्तेनतस्यलुकिकृतेपुनस्तदस्यपरिमाणमितिवचनसामर्थ्यात्स्वार्थेतज्जातीयःप्रत्ययःतस्यविधानसामर्थ्यान्नद्विगुनिमित्त
त्वाभावाद्वालुङ्नभविष्यति॥ एतच्चवृत्तिकारमतमाश्रित्योक्तम्॥ भाष्यकारमतेतुतमधीष्टइतिसूत्रेणभूतार्थेप्रत्ययंकृत्वाद्विषाष्टिकइत्यादि
साध्यंनह्यत्राध्यर्द्धेतिलुक्प्राप्नोतिअनार्हीयत्वात्॥ यद्यपितमधीष्टइत्यत्रकालादितिवर्ततेतथापिकालेसंख्येयेवर्तमानात्षष्टिशब्दादुत्पत्तिर्नविरु

शा॰ को॰ ध्यतेरमणीयादिभ्यस्त्वनभिधानान्न भवति। परिमाणार्थे तुलुकू दुर्वीरः॥ तथाहि॥ प्राग्वतेष्ठञिति ठञ् न दर्हतीत्यतः प्राक् तेनक्रीतमित्येवमाद्यर्थे यास्तेषु भ
१५५ वति॥ अर्हत्यर्थे च॥ नतः परेष्वियेर्थावर्त्तयतीत्यादय आकालिकडाद्यं तवचनेइत्येवमंतास्तेष्वपि भवति॥ एवं च ठञ आर्हीयानार्हीन्यार्थे साधारणत्वेपि प
रिमाणार्थस्य तदर्हतीत्यतः प्राङ् निर्देशात्तत्रोत्पन्नष्ठञ् आर्हीय एव। न च तदस्येति पुनरुपादानमात्रेणार्हीयत्वमपगच्छति। नहि काकोवाश्यत इत्यार्ही
यत्वं निवर्त्तते किं च यथार्हीयत्वं निवर्त्तेत॥ तर्हि जीवितपरिमाणादन्यत्रापि लुङ् न स्यात्॥ द्वौ निष्कौ परिमाणमस्य हि निष्कः नच द्वित्रिपूर्वान्निष्कात् इति
वचनं स्याम् अर्थात् स्यादिति वाच्यं॥ परिमाणातिरिक्ते ष्वार्हीयार्थे षु वचनस्य सावकाशत्वात्॥ तस्माद्यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भवती
ति जमधीष्टो भृतइत्येतस्मिन्नार्थे ष्टिकः साधनीयः॥ तदस्येति तु त्यक्तव्यम्। सोस्येत्यनुवृत्त्यैवेष्टसिद्धेरिति स्थितम्। धर्मान्नञः॥ धर्मं चरति धार्मिकः॥ अ
धर्मं चरति आधर्मिकः॥ अधर्माच्चेत्येतन्न वक्तव्यं पदांगाधिकारे तस्य तदुत्तरपदस्य च प्रयोजनं। इष्टकेषीकामालानां चिततूलभारिषु। इष्टकचितं॥ प
क्वेष्टकचितं। इषीकतूलेन मुंजेषीकतूलेन। मालभारी॥ उत्पलमालभारी॥ इहोत्तरपदाधिकारे प्रयोजनस्योदाहरणात् पदांगेति पदशब्द उत्तरपदपर
इति कैयटादयः॥ अत एव परममहत् परिमाणमित्यत्र परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषः॥ सामानाधिकरण्ये हि आन्महत इत्या
त्वं स्यादित्युदयनाचार्या व्याचख्युः॥ यत्तु तत्र वर्द्धमानेनोक्तम्। पदांगाधिकार इत्यत्र केवलपदाधिकारो गृह्यते तेन तूत्तरपदाधिकारः॥ अन्यथा इ
ष्टकेषीकामालानामित्यत्र पुनस्तदंतविध्युपसंख्यानं व्यर्थं स्यात्॥ तथा च परममहत्परिमाणमित्यत्र कर्मधारयपक्षे प्यात्वप्रसक्तिर्नास्त्येवेति
तदेतदनवहिताभिधानं। इष्टकेषीकेत्यस्य प्रयोजनत्वेनोदाहरणात्॥ उपसंख्यानांतरस्य गगनकुसुमायमानत्वात्॥ तस्मादाचार्योक्तमेव सं
म्यक्॥ एतेन सततनैशतमोरतमन्यत इति भारविप्रयोगे ओजःसहोंभस्तमसस्तृतीयाया इत्यलुक् कुतो नेत्याशंक्य वर्धमानोक्तरीत्या उत्तरप राम॰ १५५

दाधिकारे तदुत्तरपदग्रहणं नास्तीति दुर्घटवृत्तिकारोक्तिरप्यपास्ता ॥ यदपि ओजःसह इति सूत्रे हरदत्तेनोक्तं ॥ ओजःप्रभृतीनामुत्तरपदाक्षिप्तं पूर्वपदं प्र
ति विशेष्यत्वादिति तदपि वार्त्तिकविरोधादुपेक्ष्यं । विशेष्यविशेषणभावनिर्णयायैव इहत्यवार्त्तिकानां प्रवृत्तिरिति कैयटवदेव स्वयमपि व्याख्यातत्वा
त् ॥ भारविप्रयोगस्त्वित्थं समाधेयः ॥ वृतं वृत्तिः नैशं तमसो वृतमिति षष्ठीतत्पुरुषः ॥ नपुंसके भावे क्तस्य योगे शेषविवक्षायां षष्ठी ॥ ततः सततं नैशतमो
वृतं यस्मिन्निति बहुव्रीहिः ॥ यद्वा । वृतु वर्तते घञर्थे कविधानमिति भावे कः सततं नैशतमसो वृतं वृत्तिर्यस्मिन्निति प्राग्वत् ॥ अंगाधिकारे प्रयोज
नान्याह ॥ प्रयोजनं महदप्स्वसृनप्तृणां दीर्घविधौ ॥ महान् परममहान् आपस्तिष्ठंति स्वापः ॥ नपूजनादिति समासांतनिषेधः ॥ नन्वेवमपि [illegible]
पसर्गेभ्योप ईदिति ईकारः प्राप्नोति न त्वप समासांतः । अपेन ऋक्पूरित्यप्रत्यय इव निषेध्येत इति चेत् सत्यं ॥ द्व्यंतरुपसर्गेभ्य इत्यत्राप इति कृतसमासां
[illegible]स्यानुकरणं प्रथमांतं । अन्होः दंतोसिन्निषद् व्यत्ययेन षष्ठ्यर्थे प्रथमा । इहत्यं स्वाप इति भाष्यं चास्मिन् व्याख्याने प्रमाणमित्यवधेयं । स्वसारौ परमस्व
सारौ [illegible] पादस्य [illegible]स्थ्या द्यनडहो नुम् । पद्भावः प्रयोजनं । द्विपदः पश्य केवलस्योदाहरणं तु पादयतेः प्रत्ययः पात् पदः पदे [illegible] । इह
कौ तु [illegible] णिलोपो [illegible] वत् ॥ उत्तरपदाधिकारे तु पादश[illegible] विशेष्यमेव । तेन पादस्य पदाज्यातिगोपहतेष्विति पद्भावः पादेनोपहतं पदोपहत
मित्यत्रैव भवति इह तु न स्निग्धपादेनोपहतं स्निग्धपादोपहतमिति । उत्तरसूत्रेप्येवं तेन पद्यस्य तदर्थे हिमकाषिहतिषु चेति पद्भाव इहैव भवति ॥ पादेन क
षतीति पत्काषी इह तु न परमपादकाषी । यत्तु परमपत्काषीति प्रयोगः स परमश्चासौ पत्काषी चेति विग्रहेण समाधेय इति भाष्यकैयटयोः स्थितम् ॥ यू
षयं अतियूषं अति[illegible]यम् । अस्थ्ना परमास्थ्ना अनड्वान् परमानड्वान् ॥ द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणं । द्यौः सुद्यौः पंथाः सुपंथाः ॥ नपूज
नादिति समासांताभावः मंथाः परममंथाः ॥ पुमान् परमपुमान् गौः सुगौः ॥ सखा सुसखा सखायौ सुसखायौ ॥ चत्वारः परमचत्वारः अनड्वाहः

परमानड्वाहः। त्रयाणां परमत्रयाणां॥ भाष्येतु परमपंथाः परमगौरित्युदाहृतम्॥ नत्रसमासांतापत्तिः॥ नञ्जनादिति निषेधस्तु नास्ति स्वतिभ्यामिवेति व
क्ष्यमाणत्वात्॥ अतएव क्वाचित्कोयमपपाठ इति कैयटः॥ समासांतविधेरनित्यतया वा समाधेयं॥ यद्वा परमुदाहरणांतरमित्यर्थः॥ अपंथा अगौ
रित्यत्र नञ्तत्पुरुषात् प्रथो विभाषेति साधुत्वं यत्तु परमसखा याविति पठितं भाष्ये तत्र बहुव्रीहिर्बोध्यः। गौण नङुणित्वेइष्येते एव अस्थ्याद्यनडु
त् एतच्च मिदचोंत्यादित्यत्र हितीया श्रितेत्यत्र च स्पष्टं। अनुद्युक्षोवरुणइंद्रसखा आग्नेयादि मरुत्सखेत्यादि प्रयोगाश्चैवमेव संगच्छंते एतेनद्यै
संज्ञा प्रवेशो भवः सखा असुसखिरित्युदाहरन् हारदत्तोप्यासकारस्त्वापास्तः॥ त्रेस्त्रय इति तु त्रिशब्दार्थसमवेत संख्याद्यभिधायि इत्यभि
प्रायेण व्याख्यानाद्गौणेपि भवतिप्रियत्रीणां अतित्रीणांप्राधान्ये तु स्यादेव परमत्रयाणामित्याहुः। अत्रव्याख्यानेप्रमाणंमृग्यं। इह चदंगाधिका
र इति न कर्त्तव्यं। तदंतग्रहणे नैवेष्टसिद्धेरित्युक्तं न विस्मर्त्तव्यं॥ प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदंतस्य ग्रहणं। इह प्रत्ययाक्षिप्तस्य धा
तु प्रातिपदिकाद्यवयवकसमुदायस्य प्रत्ययेन विशेषणात्तदंतविधिर्लभ्यते॥ अंगसंज्ञासूत्रे यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेइति योगं वि
भज्यपरिभाषात्वेन व्याख्यानादर्शांतरलाभः॥ इदं च संज्ञाविधौ न प्रवर्त्तते सुप्तिङंतंपदमिति ज्ञापकात्॥ उत्तरपदाधिकारेपि न प्रवर्त्तते तद्दर्थ
स्य तद्धलेखयदण्लासेष्विति सूत्रे लेखग्रहणाज्ज्ञापकादिति वक्ष्यते अस्यापवादमाह। प्रत्ययग्रहणेचापंचम्याइति। यत्रपंचम्यंतं प्रत्ययस्य विशे
षणं तत्र तदंतग्रहणं नेत्यर्थः॥ यथा रदाभ्यांनिष्ठातइत्यत्र। तेन दृषत्तीर्णेत्यत्र तृधातोस्तकारस्य निष्ठांतं प्रत्ययवयवीभूतस्य नत्वं न भवति। इह
प्रघट्टके संज्ञाविधावुत्तरपदाधिकारे रदाभ्यांस्यतासीलृलुटोरित्यादौ च प्रत्ययो विशेष्यतयाश्रीयते इतरत्रतु विशेषणतयेति फलितोर्थः॥
नदिदं सकलं सूत्रेणैव सिद्ध्यति इति स्थितम्॥ सोत्रस्यतदंतविधेर्वाचनिकमपवादमाह॥ वार्त्तिककारः। यस्मिन्विधिस्तदादावल्ग्रहणे। अ

चिश्नुधात्विति इयङ्‌ वङ्‌ च यथेह भवति श्रियौ भ्रुवाविति एवमिहापि सिद्ध्यति श्रियः भ्रुव इति। तदंतविध्यभावाद्दत्तशादि विधिः अतो विशेषणेनैव॥ वृद्धि
र्यस्याचामादिस्तद्वृद्धं॥ यस्य समुदायस्यावयवानामचां मध्ये प्राथमिकोऽज् वृद्धिसंज्ञकः स वृद्धसंज्ञकः स्यात्। आम्रगुप्तीयः॥ वृद्धाच्छः। अचामि
तिजातौ बहुवचनं नेन द्वयोरपि भवति॥ शालीयः। एकस्यापि भवति व्यपदेशिवद्भावात्॥ ज्ञाब्राह्मणी तस्या अयं ज्ञीयः। वा नामधेयस्य। पौरुषे
यं नाम तस्य वृद्धसंज्ञा वा स्यादित्यर्थः॥ उभयत्र विभाषेयं॥ देवदत्तोऽस्ती नाम प्राप्ते वा मदेवादीनां च प्राप्ते आरंभात्॥ देवदत्तीयाः॥ देवदत्ताः॥ विधायमू
र्त्तिकपटेन वामनीमिति श्रीहर्षः॥ गोत्रोत्तरपदस्य च। नित्यं वृद्धसंज्ञा वक्तव्येति शेषः॥ कंबलचारायणीयाः ओदनपाणिनीयाः। घृतरौढीयाः॥ कंबल
प्रियस्य चारायणस्य शिष्या इत्यादिरर्थः॥ पणनं पणः॥ घञर्थे कविधानमिति कः॥ सोऽस्यास्तीति पणी। पणिनो गोत्रापत्यं पाणिनः। अण्। गाथिविद
थिकेशिगणिपणिनश्चेति प्रकृतिभावः॥ ततो यूनीञ्॥ पाणिनिः॥ स्यादेतत्॥ ण्यक्षत्रियार्षञित इति सूत्रेणेह इञो लुक् प्राप्नोति॥ आर्षाद्यून्युत्प
न्नस्येति चेन्न॥ आर्षग्रहणेन ऋष्यंधकेति सूत्रविहितस्य ऋष्यण एव ग्रहणात्॥ अस्य च औत्सर्गिकत्वात्॥ यद्वा॥ पाणिनशब्दो यौगिको
योगरूढः लुप्तधौतु रूढस्यैव ग्रहणं॥ एतच्च शास्त्रांते एकशेषनिर्देशाद्भगवतः पाणिनेः सिद्धमिति वार्तिकनिर्देशाद्दासीपुत्रस्य पाणिनेरिति
काराव्यवहाराच्च निर्णीयते॥ नन्वेवमपि पाणिनेः छात्राः पाणिनीया इति न सिध्यति॥ वृद्धाच्छं बाधित्वा इञश्चेत्यणः प्रसंगात्॥ न च छे विवक्षिते यूनि
लुगिति इञो लुकि सति नाप्यमित्रं तदिति वाच्यं। प्रत्ययलक्षणेन इञन्तत्वानपायात्॥ अत्राहुः॥ इञश्चेत्यत्र कण्वादिभ्यो गोत्रे इत्यतो गोत्रग्रहणमनु
वर्त्तते तच्च पूर्वसूत्रप्रवृत्तस्य पतते तेनापत्याधिकारादन्यत्वेन प्राप्तं लौकिकं गोत्रं विहाय गोत्राधिकारो गृह्यते स्वरितेनाधिकार इति वचनात्॥ कण्वा
दिश्च गर्गाद्यंतर्गणः॥ ततो गर्गादिभ्यो यञिति विधीयमानो यञ् पारिभाषिक एव गोत्रे भवति तत्रापत्याधिकारसत्त्वात्॥ तेन इञश्चेत्यत्रापि पारिभा

षिके गोत्रे पद् इञ् तदंतात् छ शेषेण इत्यर्थः फलितः॥ पद्वालक्षणप्रतिपदोक्तपरिभाषया कण्वादिसूत्रेणैव गृह्यते स चआरिभाषिके विहितत्वात् तस्यैव
प्रत्यायकः॥ एवं चार्याधिकारादिञश्चेत्यत्रापि तथा॥ पामि निरिति तु यूनि इञ् न तु गोत्रे तेनाणोः प्राप्ते निर्बाधः छप्रत्यय इति स्थितम्॥ रूढस्यापत्यं रैः
ढिः। अत इञ्॥ अनंतरे गोत्रे वा। न चैवमिञश्चेत्यण् प्रसंगः॥ न द्व्यचः प्राच्यभरतेष्विति निषेधात्॥ स्यादेतत्॥ यदि गोत्रोत्तरपदस्य वृद्धसंज्ञा विधीयते
॥ तर्हि पिंगलकाण्व्यस्य छात्राः पैंगलकाण्वा इत्यत्र वृद्धात् छः स्यात्॥ इष्यते तु कण्वादिभ्यो गोत्रे इत्यण्। सत्यं। अत एवापरितोषादुक्तं वार्त्तिककृता
॥ गोत्रांताद्वा समस्तवदिति॥ शैषिकाधिकारे प्राग्दीव्यतोऽणित्यत्र वा इत्थमतिदेशः कर्त्तव्य इत्यर्थः॥ अपत्याधिकारादन्यत्वाच्च। लौकिकगोत्रस्येह
ग्रहणादोरन पाणिनीया इत्यादि सिद्ध्यतीति भावः। किमविशेषेण नेत्याह। जिह्वाकात्यहरितकात्यवर्ज्जम्॥ कतशब्दो गर्गादिः॥ जिह्वाच पर्णोहरितव
र्णश्च कात्यः तस्य छात्रा इत्यर्थे। णेव भवति। जैह्वाकाताः हारितकाताः॥ त्यदादीनि च॥ एतानि वृद्धसंज्ञानि स्युः॥ त्यदीयं॥ अदसीयम्॥ इदमीयं। किमीयं॥ त्वादाय
निः। मादायनिः॥ उदीचां वृद्धादगोत्रात्फिञ्॥ प्रत्ययोत्तरपदयोश्चेति त्व मा वादेशौ॥ एङ् प्राचां देशे। यस्याचामादिरिति अनुवर्त्तते॥ एङ् यस्या
चामादिस्तद्वृद्धसंज्ञं वा स्यात् देशाभिधाने। एणीपचनीयः। गोनर्दीयः॥ भोजकटीयः॥ एङिति किम्। आहिच्छत्रः। कान्यकुब्जः। विधेयसंज्ञासंबंधबलेन सम्बन्धि
भक्त्युच्चारणाच्च प्राग्ग्रहणमाचार्यनिर्देशार्थं। व्यवस्थितविभाषा चेयं। तेन क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोर्न वृद्धसंज्ञा तेन क्रौडो दैवदत्त इत्य
णेव भवति॥ प्राग्देशवाचिनस्तु देवदत्तशब्दस्य भवत्येव वृद्धसंज्ञा ततः काश्यादित्वाद्वृद्धलक्षणौ ठञ्ञिठौ भवतः॥ शैषिके ष्विति वक्तव्यं। सेपुरिकी से
पुरिका। स्कौनगरिकी स्कौनगरिका। सेपुरं स्कौनगरं च वाहीकग्रामौ। तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः शैषिके ष्विति वचनादपत्ये वृद्धलक्षणः
फिञ् न वि कारे च नित्यं वृद्धेति मयण् न। तदेवं कुणिमतं भाष्यमतं चानुसृत्य प्राग्ग्रहणमाचार्यनिर्देशार्थमिति व्याख्यातं। जयादित्यस्तु प्राचि देशे ये संति तेषां

च॰ पुरुषास्तेषां यो देशः तदभिधाने इति व्याचख्यौ॥ प्राचामित्यस्य च श्रूयमाणदेशविशेषणत्वे संभवति अध्याहर्त्तव्येन मतेनेत्यनेनान्वयो न क
ल्प्य इति तस्याशयः॥ अस्मिन् पक्षे वाहीकग्रामे दैवदत्त इत्यत्र कौड इत्यत्र वा॰ वृद्धत्वाद्वठञ्ञिठौ न भवत इति स्पष्टं॥ किंतु सैपुरिकीत्यादि भाष्यो
दाहृतं वचनेनैव साधनीयं स्यादिति दिक्॥ देश इति किम्॥ गोमती नाम प्राग्देशनदी तत्र भवा मत्स्याः गौमताः॥ देशग्रहणेन नदी न गृह्यते नदी
देशो ग्रामा इति पृथगुपादानाल्लिंगात्॥ प्रागादिदेशविभागस्त्वित्थम्॥ शरावती नाम नदी॥ उत्तरपूर्वाभिमुखी तस्याद्दक्षिणपूर्वस्यां दिशि व्यव॰
स्थितो देशः प्राग्देशः॥ उत्तरापरस्यामुदग्देशः॥ उक्तं च॥ प्रागुदंचौ विभजते हंसः क्षीरोदकं यथा॥ विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावतीति॥
अमरसिंहोप्याह॥ शरावत्यास्तु योवधेः। देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तर इति॥ अमरव्याख्यातारस्तु ऐशानीतो नैर्ऋत्यां पश्चिमाभि
मुखी शरावतीति वदंति॥ उभयथापि प्रागुदक्स्वरूपेन विवादः॥ वाहीकदेशस्तु प्रागुदग्बहिर्भूतः॥ बहिषष्टिलोपो यञ् चेत्यव्युत्पादनादिति वि
वरणम्॥ तच्चिंत्यम्॥ अव्ययात्यविति सूत्रे काश्यादिभ्यष्ठञ्ञिठाविति वार्तिकंव्याचक्षाणेन भगवता शाकलनाम्नो ग्रामस्योदीच्यवाहीकोभयरूप
ताभ्युपगमात्॥ नत्र हरदत्तादिभिस्तथैवानुवादाच्च॥ तस्माद्वाहीको देशविशेषइत्येव न तत्वं। तथा च कर्णपर्वणि। पंचानां सिंधुषष्ठानामंतरं ये समाश्रिता
॥ वाहीका नाम ते देशा न तत्र द्विवसं वसेदिति। एतेन धर्मबहिर्भूतत्वाद्वाहीका इत्युक्तं भवति॥ शतद्रुर्विपाशा इरावती वितस्ता चंद्रभागेति पंच नद्यः
सिंधुनदस्तु षष्ठः तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः। न्युससंतरं तु तत्रैव दर्शितं। वहिकश्च वहीकश्च विपाशायां पिशाचकौ॥ तयोरपत्यं वाहीका नेमा सृष्टिः प्रजापतेरिति॥ एतच्च वि
वेचनं वाहीकग्रामेभ्यश्चेत्यादावुपयोक्ष्यत इति सर्वमुस्थम्॥ ॥ इति श्रीविद्वन्मुकुटरत्नलक्ष्मीधरसूरेः सूनुना भट्टोजि भट्टेन कृते शब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे नवममा
ह्निकम्॥ पादश्चायं समाप्तः॥ ॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः॥ काशीसंस्कृतमुद्रायामंकितोयं शिलाक्षरैः॥१॥ श्रीकाशीजी में ज्ञानवापीके पूर्वफाटकपर महाराज शिवला
ल दुबेजीके मकान में छपी जिनको लेना होय उनको इस कार्य के संपादक श्रीबाबूवाराणसीप्रसादजी के पास या कचौरी गली में [illegible] ईश्वरतापसिंह के दुकान पर मिलेगी। ता॰ १ अगस्त स॰ १८७६ ई॰

